**Government Oriental Library Series.**

**BIBLIOTHECA SANSKRITA—No. 9.**

# तैत्तिरीयसंहिता

## भट्टभास्करमिश्रविरचितभाष्यसहिता.

# THE TAITTIRÍYA SAMHITÁ

OF THE

# KRISHNA YAJUR-VEDA

WITH THE

## COMMENTARY OF BHATTABHA'SKARAMIS'RA.

**Vol. IV.**

**( Kanda II—Prasnas 3—6 ).**

EDITED BY

A. MAHA'DEVA S'A'STRI, B. A.,
*Curator, Government Oriental Library, Mysore.*

AND

PANDITARATNAM K. RANGA'CHA'RYA,
*Pandit, Government Oriental Library, Mysore.*

**Published under the Authority of the Government ot His Highness the Maharaja of Mysore.**

MYSORE:
PRINTED AT THE GOVERNMENT BRANCH PRESS,
1896.

# EDITORIAL NOTE.

In addition to the MSS. included among those noticed in the prefaces to Vols. I. and III. the following MSS. have also been used in editing the portion comprised in the present Volume :—

(प) A grantha MS. of the commentary on Káṇḍás I. and II. belonging to Amblê S'ríkanṭha Sômayájigaḷu of Mysore. It is generally correct and presents several variants from those already noticed.

(ड) A grantha MS. of the commentary on Káṇḍás I. and II. recently acquired for the Government Oriental Library, and originally belonging to a Brahmin family in the Mysore District. It is also generally correct and differs in some places from the other MSS. already noticed.

# विषयानुक्रमणिका.

## द्वितीये काण्डे तृतीयः प्रपाठकः.

अनुवाकः

## षष्ठः प्रपाठकः.

हरिः ॐ.

# तैत्तिरीयसंहिता

## भट्टभास्करीयभाष्ययुक्ता.

## द्वितीयः काण्डः.

### तृतीयः प्रश्नः

आदित्येभ्यो भुवंद्वद्भ्यश्चरुं निर्वंपेद्भू-
तिकाम आदित्या वा एतं भूत्यै प्रति
नुदन्ते योऽलं भूत्यै सन्भूतिं न प्रा-

[1]आदित्येभ्यः । भुवंद्वद्भ्य इति भुवंद्वत्-भ्यः । चरुम् । निरिति । वपेत् । भूतिकाम इति भूति-कामः । आदित्याः । वै । एतम् । भूत्यै । प्रतीति । नुदन्ते । यः । अलंम् । भूत्यै । सन् । भूतिम् । न । प्राप्नोतीति प्र-आप्नोति । आदित्यान् । एव ।

---

[1]आदित्येभ्यो भुवद्वद्भ्य इत्यादि ॥ भवना अपिद्गा [अवित्रा] तद्वन्तो भुवद्वन्तः, याज्यानुवाक्ययोस्तादृशत्वात् । भवतेर्लटश्शत्रादेशः, 'बहुलं छन्दसि' इति शपो लुक्, व्यत्ययेनाद्युदात्त-

प्रोत्यादित्यानेव भुवद्वतस्स्वेन भाग-
धेयेनोप धावति त एवैनं भूतिं गम-
यन्ति भवत्येवादित्येभ्यो धारयद्वद्भ्य-
श्चरुं निर्वपेदपरुद्धो वापरुध्यमानो
वादित्या वा अपरोद्धार आदि-

भुवद्वत इति भुवत्–वतः । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । ते । एव । एनम् । भूतिम् । गमयन्ति । भवति । एव । [2]आदित्येभ्यः । धारयद्वद्भ्य इति धारयद्वत्–भ्यः । चरुम् । निरिति । वपेत् । अपरुद्ध इत्यप–रुद्धः । वा । अपरुध्यमान इत्यप–रुध्यमानः । वा । आदित्याः । वै । अपरोद्धार इत्यप–रोद्धारः । आदित्याः । अवगम-

तम् । [illegible] वा व्यत्ययेन गुणाभावः, तत्रादुपदेशाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः, 'तसौ मत्वर्थे' इति व्यत्ययेन न प्रवर्तते । तत्र 'यज्ञो देवानाम्'* इति पुरोनुवाक्या, 'शुचिरपः' *इति याज्या, तत्र 'आदित्यासो भवता मृडयन्तः'* 'य आदित्यानां भवति प्रणीतौ'* इति दर्शनात् भुवद्वत्त्वम् । गतमन्यत् ॥

[2]धारयद्वद्भ्य इति ॥ धारयच्छब्दवत्त्वाद्याज्यानुवाक्ययोः, यथा–'धारयन्त आदित्यासः'* 'तिस्रो भूमीर्धारयन्'* इति । अत्रापि

*सं. २-१-११.[13–16]

त्या अवगमयितारं आदित्यानेव धा-
रयद्वतः ॥ १ ॥ स्वेन भागधेयेनोप
धावति त एवैनं विशि दाध्रत्यनपरु-
ध्यो भवत्यादितेनु मन्यस्वेत्यपरुध्य-

यितार इत्यव–गमयितारः । आदित्यान् । एव । धारयद्वत इति धारयत्–वतः ॥ १ ॥ स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । ते । एव । एनम् । विशि । दाध्रति । अनपरुध्य इत्यनप–रुध्यः । भवति । [3]अदिते । अन्विति । मन्यस्व । इति । अपरुध्यमान इत्यप–रुध्यमानः । अस्य ।

पूर्ववद्वत्वाभावः, अयस्मयादित्वाद्वा उभयत्र पदत्वम् । अपरुद्ध इत्यादि । अपरुद्धो राजान्तरेणापहृतराष्ट्रः । स एतं चरुं निर्वपेत पुना राष्ट्रं लप्सीयेति । अपरुद्ध्यमानो वा राजान्तरेणापजिहीर्षितराष्ट्रः । स वा निर्वपेदिमं चरुं मा मा राष्ट्रं हासीदिति । आदित्या वा इत्यादि । आदित्या एव राष्ट्रस्यापरोद्धारः अपहर्तारः राष्ट्रापहारेण वास्य दुःखयितारः । आदित्या एव तस्यावगमयितारः । तस्मात्तेनानेन चरुणा एनमपरुद्धं विशि प्रकृतिषु दाध्रति धारयन्ति धारयद्वत्त्वात् । धारयतेः 'दाधर्ति-दर्धर्ति' इत्यादिना निपात्यते । ततश्चायमनपरुद्ध्यः अपरोद्धुमशक्यो भवति । छान्दसो यत्; 'ययतोश्चातदर्थे' इत्युत्तरपदान्तोदात्तत्वम् ॥

[3]अथात्र प्रयोगविशेषा उच्यन्ते—तत्रापरुद्ध्यमानोस्यापरोद्धुः

मानोस्य पदमा ददीतेयं वा अदि-
तिरियमेवास्मै राज्यमनु मन्यते
सत्याशीरित्याह सत्यामेवाशिषं कु-
रुत इह मन इत्याह प्रजा एवास्मै
समनसः करोत्युप प्रेतं मरुतः॥२॥

पदम् । एति । ददीत । इयम् । वै । अदितिः । इ-
यम् । एव । अस्मै । राज्यम् । अन्विति । मन्य-
ते । [4]सत्या । आशीरित्या—शीः । इति । आह ।
सत्याम् । एव । आशिषमित्या—शिषम् । कुरुते ।
[5]इह । मनः । इति । आह । प्रजा इति प्र—जाः ।
एव । अस्मै । समनस इति स—मनसः । करो-
ति । [6]उप । प्रेति । इत । मरुतः ॥ २ ॥ सुदान-

पदं पदपांसूनाददीत—अदितेनु मन्यस्वेति ॥ हे अदिते अखण्डि-
ते पृथिवि मामनुमन्यस्व अनुजानीहि राज्यप्राप्तिमिति । गतमन्यत् ॥

[4]अथ तान् पांसून् यजमानस्याञ्जलौ आवपति—सत्याशीरि-
ति ॥ सत्या अमोघफला आशीः प्रार्थना अस्य, अयमस्मा-
कमनपरुद्धो भवत्विति यावत् । गतमन्यत् ॥

[5]अथैतान् पांसूनुपनिगृह्णाति उपनिपीडयति—इह 'मन इति ॥
इहास्मिन् मयि मनोस्तु प्रजानामिति । ततस्सर्वा अस्मै समनसः
अस्मिन्नेव सक्तमनसः करोति, ततोनपरुद्धो भवतीति ॥

[6]अथ पदपांसूनादाय हरन्ति—उप प्रेतेति त्रिपदया जगत्या ॥

सुदानव एना विश्पतिनाऽभ्यमुꣳ राजानमित्याह मारुती वै विड्ज्येष्ठो विश्पतिर्विशैवैनꣳ राष्ट्रेण समर्धयति यः परस्ताद्ग्राम्यवादी स्यात्तस्य गृ-

व इति सु-दानवः । एना । विश्पतिना । अभीति । अमुम् । राजानम् । इति । आह । मारुती । वै । विट् । ज्येष्ठः । विश्पतिः । विशा । एव । एनम् । राष्ट्रेण । समिति । अर्धयति । [7]यः । परस्तात् । ग्राम्यवादीति ग्राम्य-वादी । स्यात् । तस्य ।

सामर्थ्याच्चायं मन्त्रोऽल्यावपनमन्त्रात्पूर्वो द्रष्टव्यः । हे मरुतस्सुदानवः सुष्ठु दातारोऽभिमतानां उपप्रेत उपसम्प्राप्नुत एना अनेनावरोधकेन । 'सुपां सुलुक्' इति तृतीयाया आजादेशः । विश्पतिना राज्ञा सह उपप्रेत । अयस्मयादित्वेन भत्वाद्विशो जश्त्वाभावः, तेनानवग्रहः, 'परादिश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । अमुमपरुद्ध्यमानं वीरसिंहवर्माणं राजानमभि इममभिमुखीकृत्येममनपरुद्धं कर्तुमुपप्रेतेति । मारुतीत्यादि । मरुतां राज्ञां च विशामधिपतित्वाद्विशा राष्ट्रेण समृद्धमेव करोति, एतन्मन्त्रसामर्थ्यात् । अथ तान् पांसून् सञ्चरे अपरोद्धुर्मार्गे परावपति । अत्र यं यजमानो द्वेष्टि तं मनसा ध्यायति; अथ चरुणा यजेतेति । एवमपरुद्ध्यमानोऽनपरुद्धो भवति ॥

[7]अथ अपरुद्धराष्ट्रावाप्तये इष्ट्यन्तरं विदधाति—यः परस्तादिति ॥ ग्राम्यैः पूर्वमुक्ते पश्चाद्ग्रामप्रधानपुरुषतया ग्रामहितानां

हा॒द्व्रीहीना ह॑रे॒च्छुक्ला᳚श्च॒ कृष्णा᳚श्च॒ वि चि॑नुया॒द्ये शु॒क्लास्स्युस्तमा॑दि॒त्यं च॒रुं निर्व॑पेदादि॒त्या वै दे॒वत॑या वि॒ड्विश॑मे॒वाव॑ गच्छति ॥ ३ ॥ अव॑गतास्य॒ विडन॑वगतꣳ रा॒ष्ट्रमित्या॑हु॒र्ये कृ॒ष्णास्स्युस्तं वा॑रु॒णं च॒रुं निर्व॑पे-

गृहात् । व्रीहीन् । एति॑ । ह॒रे॒त् । शु॒क्लान् । च॒ । कृ॒ष्णान् । च॒ । वीति॑ । चि॒नु॒या॒त् । ये । शु॒क्लाः । स्युः । तम् । आ॒दि॒त्यम् । च॒रुम् । निरिति॑ । व॒पे॒त् । आ॒दि॒त्या । वै । दे॒वत॑या । विट् । विश॑म् । ए॒व । अवेति॑ । ग॒च्छ॒ति॒ ॥ ३ ॥ अव॑ग॒तेत्यव॑-ग॒ता । अ॒स्य॒ । विट् । अन॑वग॒तमित्यन॑व-ग॒तम् । रा॒ष्ट्रम् । इति॑ । आ॒हुः॒ । ये । कृ॒ष्णाः । स्युः । तम् । वा॒रु॒णम् । च॒रुम् । निरिति॑ । व॒पे॒त् । वा॒-

वक्ता यः तस्य गृहाद्व्रीहीनाहृत्य शुक्लकृष्णविवेकेन शुक्लानादित्यं चरुं निर्वपेत् । 'त्यान्नु क्षत्रियान्'* इति पुरोनुवाक्या, 'न दक्षिणा'* इति याज्या । तस्याप्य[अप्या]दित्यत्वादादित्याया विशोऽवगत्यै भवति । अवगतेति । अथाहुः—एवमनेन चरुणास्यापरुद्धस्य विडवगता लब्धा भवति, राष्ट्रं त्वनवगतमेवेति । तस्मात्कृष्णान् व्रीहीन्वारुणं चरुं निर्वपेत् । तत्रास्य वारुणत्वा-

*सं. २-१-११. 17—18

द्वारुणं वै राष्ट्रमुभे एव विशं च
राष्ट्रं चावं गच्छति यदि नावगच्छे-
दिममहमादित्येभ्यो भागं निर्वपा-
म्यामुष्मादमुष्यै विशोवंगन्तोरिति
निर्वपेदादित्या एवैनं भागधेयं प्रे-

रुणम् । वै । राष्ट्रम् । उभे इति । एव । विशम् । च । राष्ट्रम् । च । अवेति । गच्छति । [8]यदि । न । अवगच्छेदित्यव-गच्छेत् । इमम् । अहम् । आदित्येभ्यः । भागम् । निरिति । वपामि । एति । अमुष्मात् । अमुष्यै । विशः । अवंगन्तोरित्यवं-गन्तोः । इति । निरिति । वपेत् । आदित्याः । एव । एनम् । भागधेयमिति भाग-धेयम् । प्रेप्स-

द्वारुणस्य राष्ट्रस्यावगत्यै भवति । तस्मादेवमुभयोः कृतयोः विशं राष्ट्रं च कृते[गते] अप्यवगच्छति । 'इमं मे वरुण'* 'तत्त्वा यामि'* इत्यस्य याज्यानुवाक्ये ॥

[8]यदीत्यादि ॥ अथैवं कृतेपि वारुणे यदि राष्ट्रं नावगच्छेत् न लभेत ततः 'इममहम्' इत्यादिना मन्त्रेण पुनरादित्येभ्यो निर्वपेत् ।' अथ निरुप्योपनमति न संसादयति, अथावगते राष्ट्रे संसादयति । अत्र 'यज्ञो देवानाम'† 'आदित्यानामवसा'* इति याज्यानुवाक्ये । अथ निरुप्यानासादनस्य प्रयोज-

*सं. २-१-११.19—21 †सं. २-१-११.13

प्सन्तो विशमव ॥ ४ ॥ गमयन्ति
यदि नावगच्छेदाश्वत्थान्मयूखान्त्स-
प्त मध्यमेषायामुप हन्यादिदमहमा-
दित्यान्बध्नाम्यामुष्मादमुष्यै विशो-

न्त इति प्र-ईप्सन्तः । विशम् । अवेति ॥ ४ ॥
गमयन्ति । [१]यदि । न । अवगच्छेदित्यव-गच्छेत् ।
आश्वत्थान् । मयूखान् । सप्त । मध्यमेषायामिति·
मध्यम-ईषायाम् । उपेति । हन्यात् । इदम् ।
अहम् । आदित्यान् । बध्नामि । एति । अमुष्मात् ।
अमुष्यै । विशः । अवगन्तोरित्यव-गन्तोः । इति ।

---

नमाह—आदित्या एवैनं भागधेयं प्रेप्सन्तो विशमव गमयन्तीति । न ह्ययमनवगते राष्ट्रे विशि वा हविस्संमादयति । तस्माद्धविःप्रेप्सया शीघ्रं विशं राष्ट्रं चावगमयति । मन्त्रस्तु व्याख्यायते—इमं भागधेयं आदित्येभ्यो हविर्निर्वपामीति । अमुष्मादपरोक्षुर्वीरसिंहवर्मणस्सकाशादमुष्यै अमुष्या देवकोकाया [ ....वकोटाया ? ] विशोवगन्तोः अवगमनात् अलाभात् । 'अमुष्मात्' 'अमुष्यै' इति च सर्वविशेषार्थं सामान्यपदं, नामविशेषं चात्र निर्दिशेत् । 'भावलक्षणे स्थेण्' इति तोसुन्' 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् ॥

[१]अथैवं कृतेपि यदि नावगच्छेत् राष्ट्रं विड्वा, तत आश्वत्थान् अश्वत्थविकारान् मयूखान् शङ्कून् सप्त त्रीषे शकटे मध्यमे-

वंगन्तोरित्यांदित्या एवैनं बद्धवीरा
विशमवं गमयन्ति यदि नावगच्छे-
देतमेवादित्यं चरुं निर्वपेदिध्मेपि म-
यूखान्त्सन्नंह्योदनपरुद्धयमेवावं ग-
च्छत्याश्वंत्था भवन्ति मरुतां वा

आदित्याः । एव । एनम् । बद्धवीरा इति बद्ध-वीराः । विशम् । अवेति । गमयन्ति । [10] यदि । न । अवगच्छेदित्यंव-गच्छेत् । एतम् । एव । आदित्यम् । चरुम् । निरिति । वपेत् । इध्मे । अपीति । मयूखान् । समिति । नह्यत् । अनपरुध्यमित्यंनप-रुध्यम् । एव । अवेति । गच्छति । आश्वंत्थाः । भवन्ति । मरुताम् । वै । एतत् । ओजः । यत् ।

पायामुपहन्यात् 'इदमहम्' इति मन्त्रेण । 'अनुदात्तादेश्च' इत्यश्वत्थशब्दादञ् । अत्रायं प्रयोगः—प्रागीपमनोवस्थाप्य तत्र मध्यमेपायां मध्यममुपहत्य त्रीन् प्रतीचस्त्रीन् प्राचः आयातयति । अथैवं कृते बद्धवीरा आदित्या आत्मवीर्यमोक्षार्थं विशामवगमयन्ति राष्ट्रं च । मन्त्रार्थस्तु—इदमिति क्रियाविशेषणम् । अहमादित्यानिदं बध्नामि । अमुष्मादित्यादि । गतम् ॥

[10]एवं कृते यदि नावगच्छेद्राष्ट्रं विड्वा, एतमनन्तरं विहितमादित्यं चरुं निर्वपेत् । इध्मेपि सप्ताश्वत्थान् सहेध्मेनाभ्याद-

एतदोजो यदश्वत्थ ओजसैव विश-
मवं गच्छति सप्त भवन्ति सप्तगणा
वै मरुतो गणश एव विशमवं
गच्छति ॥ ५ ॥

अश्वत्थः । ओजसा । एव । विशम् । अवेति ।
गच्छति । सप्त । भवन्ति । सप्तगणा इति सप्त–
गणाः । वै । मरुतः । गणश इति गण–शः ।
एव । विशम् । अवेति । गच्छति ॥ ५ ॥

धारयद्वतो मरुतो गच्छति विशमवै-
तदष्टादश च ॥ १ ॥

---

ध्यात् । एवं कृतेवश्यमनपरुध्यं पुनः केन चिदप्यवरोद्धुमशक्यं राष्ट्रं विशं च अवगच्छति लभते । पूर्ववदन्तोदात्तत्वम् । आश्वत्था इत्यादि । गतम् । मरुतामोजस्त्वमत्युच्छ्रितत्वेन मरुतामचलव्यक्ति*स्थानत्वात् । गणश इति । 'सङ्ख्यैकवचनाच्च' इति शस्, 'बहुगण' इति सङ्ख्यासंज्ञा । गणंगणं विशोवगच्छति ॥

इति द्वितीये तृतीये प्रथमोनुवाकः.

---

*तं—मरुतां बलस्य व्यक्ति. ख—मरुता मलस्य व्यक्ति.

देवा वै मृत्योरबिभयुस्ते प्रजापतिमुपाधावन्तेभ्य एतां प्राजापत्याँ शतकृष्णलां निरवपत्तयैवैष्वमृतमदधाद्यो मृत्योर्बिभीयात्तस्मा एतां प्राजापत्याँ शतकृष्णलां निर्वपेत्प्रजापतिमेव स्वेन भागधेयेनोप धावति स एवास्मिन्नायुर्दधाति स-

[1] देवाः । वै । मृत्योः । अबिभयुः । ते । प्रजापतिमिति प्रजा—पतिम् । उपेति । अधावन् । तेभ्यः । एताम् । प्राजापत्यामिति प्राजा—पत्याम् । शतकृष्णलामिति शत—कृष्णलाम् । निरिति । अवपत् । तया । एव । एषु । अमृतम् । अदधात् । यः । मृत्योः । बिभीयात् । तस्मै । एताम् । प्राजापत्यामिति प्राजा—पत्याम् । शतकृष्णलामिति शत—कृष्णलाम् । निरिति । वपेत् । प्रजापतिमिति प्रजा—पतिम् । एव । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव । अस्मिन् । आयुः । दधाति । सर्वम् । आयुः । एति । शत-

[1] देवा वा इत्यादि ॥ शतकृष्णलामिति । शतं स्वर्णानि कृ-

र्वमायुरेति शतकृष्णला भवति श-
तायुः पुरुषश्शतेन्द्रिय आयुष्येवे-
न्द्रिये ॥६॥ प्रति तिष्ठति घृते भव-
त्यायुर्वै घृतममृतꣳ हिरण्यमायुश्चै-

कृष्णलेति शत-कृष्णला । भवति । शतायुरिति
शत-आयुः । पुरुषः । शतेन्द्रिय इति शत-इन्द्रि-
यः । आयुषि । एव । इन्द्रिये ॥ ६ ॥ प्रतीति । ति-
ष्ठति । [2]घृते । भवति । आयुः । वै । घृतम् । अमृतम् ।
हिरण्यम् । आयुः । च । एव । अस्मै । अमृतम् ।

ष्णलानि कृष्णलतुलितानि परिमाणमस्यास्समभीष्टं* सा तथोक्ता । तया देवेष्वमृतत्वमदधात्प्रजापतिः । गतमन्यत् ॥

[2]शतकृष्णलां निर्वपेदित्ययं क्रमः—'देवस्य त्वा सवितुः प्रसवे' इति प्रतिपदं कृत्वा 'प्रजापतये जुष्टं निर्वपामि' इति चतुरो मुष्टीन् कृष्णलान्निर्वपति । हविष्कृता वाचं विसृज्य गार्हपत्ये नवं पात्रमधिश्रित्य तिरःपवित्रमाज्यमानीय तिरःपवित्रं कृष्णलान्यावपति । तदिदमुक्तं—घृते भवतीत्यादि ॥ समीची अनुक्रमेण सङ्गते । अथाज्यं निर्वपति, अथाज्यमधिश्रयति । उभयं पर्यग्नि कृत्वा अन्तर्वेद्यासादयति । धर्ममात्रं श्रपणं न विक्लेदनाय ॥

*तं—परिमाणान्यस्यास्समाभीष्टे.

वास्मां अमृतं च समीचीं दधाति
चत्वारिंचत्वारि कृष्णलान्यवं द्यति
चतुरवत्तस्याप्तयां एकधा ब्रह्मण उपं
हरत्येकधैव यजंमान आयुर्दधात्य-
सावांदित्यो न व्यंरोचत तस्मैं देवाः

च । समीची इतिं । दधाति ।[3]चत्वारिंचत्वारीति च-त्वारिं-चत्वारि । कृष्णलांनि । अवेतिं । द्यति । चतुरवत्तस्येतिं चतुः-अवत्तस्यं । आप्त्यै । एकधे-त्येंक-धा । ब्रह्मणें । उपेतिं । हरति । एकधेत्येंक-धा । एव । यजंमाने । आयुः । दधाति ।[4]असौ । आदित्यः । न । वीतिं । अरोचत । तस्मैं । देवाः ।

[3]चत्वारिचत्वारीत्यादि ॥ सर्वावदानार्थं वीप्सा । एकस्मिन् अवदाने चत्वारि चत्वारि गृह्णीयात् । तद्यथा—अष्टौ देवताया अवद्यति, चत्वारि स्विष्टकृते, अष्टाविडायै, चत्वारि अवा-न्तरेडायै, एकं प्राशित्राय, एकं यजमानायाज्यमेव जुह्वतः [ह्वते] जुहोति, आज्यं च* प्राश्नते प्राश्नाति । अथ चतुर्धाकर-णकाले शिष्टान्येकयोद्धृत्य ब्रह्मण उपहरति, इतरेषां भक्षापन-यनम् ॥

[4]असावादित्य इत्यादि ॥ गतम्† ॥

*ख—आज्यमेव. †सं. २-२-१०,1

प्रायश्चित्तिमैच्छन्तस्मा एतꣳ सौर्यं
चरुं निरवपन्तेनैवास्मिन्न् ॥ ७ ॥
रुचमदधुर्यो ब्रह्मवर्चसकामस्स्यात्त-
स्मा एतꣳ सौर्यं चरुं निर्वपेदमुमे-
वादित्यꣳ स्वेन भागधेयेनोप धाव-
ति स एवास्मिन्ब्रह्मवर्चसं दधाति
ब्रह्मवर्चस्येव भवत्युभयतो रुक्मौ

प्रायश्चित्तिम् । ऐच्छन् । तस्मै । एतम् । सौर्यम् ।
चरुम् । निरिति । अवपन् । तेन । एव । अस्मिन् ।
॥ ७ ॥ रुचम् । अदधुः । यः । ब्रह्मवर्चसकाम इ-
ति ब्रह्मवर्चस–कामः । स्यात् । तस्मै । एतम् ।
सौर्यम् । चरुम् । निरिति । वपेत् । अमुम् । एव ।
आदित्यम् । स्वेन । भागधेयेनेति भाग–धेयेन ।
उपेति । धावति । सः । एव । अस्मिन् । ब्रह्मव-
र्चसमिति ब्रह्म–वर्चसम् । दधाति । ब्रह्मवर्चसी-
ति ब्रह्म–वर्चसी । एव । भवति । [5]उभयतः ।
रुक्मौ । भवतः । उभयतः । एव । अस्मिन्न् । रु-

[5]उभयत इत्यादि ॥ सुवर्णरजतौ रुक्मौ उपकल्प्य शृतं हि हविः ताभ्यां पर्युपास्यान्तर्वेद्यासादयति, अपोह्य रुक्मौ चरुणा प्रचारः । उभयतः उभयोरपि पूर्वोत्तरयोरायुपोः अस्मिन्यजमाने रुचं दधाति । यद्वा—उभयोर्लोकयोः इहामुत्र चास्मिन्नुचं दधाति ॥

भवत उभयत एवास्मिन्नुचं दधाति
प्रयाजेप्रयाजे कृष्णलं जुहोति
दिग्भ्य एवास्मै ब्रह्मवर्चसमव रु-
न्ध आग्नेयमष्टाकपालं निर्वपेत्सा-
वित्रं द्वादशकपालं भूम्यै ॥ ८ ॥
चरुं यः कामयेत हिरण्यं विन्देय
हिरण्यं मोप नमेदिति यदाग्नेयो भ-

चंम् । दधाति । [6]प्रयाजेप्रयाज इति प्रयाजे-प्रया-जे । कृष्णलम् । जुहोति । दिग्भ्य इति दिक्-भ्यः । एव । अस्मै । ब्रह्मवर्चसमिति ब्रह्म-वर्च-सम् । अवेति । रुन्धे । [7]आग्नेयम् । अष्टाकपाल-मित्यष्टा-कपालम् । निरिति । वपेत् । सावित्रम् । द्वादशकपालमिति द्वादश-कपालम् । भूम्यै ॥८॥ चरुम् । यः । कामयेत । हिरण्यम् । विन्देय । हिरण्यम् । मा । उपेति । नमेत् । इति । यत् । आग्नेयः । भवति । आग्नेयम् । वै । हिरण्यम् ।

---

[6]प्रयाजेप्रयाजे इति ॥ पञ्च सुवर्णानि कृष्णलान्युपलिप्य प्रयाजेप्रयाजे एकं कृष्णलमन्ववधाय जुहोति । दिग्भ्य इति । दिशामपि पञ्चत्वात् ॥

[7]आग्नेयमष्टाकपालमित्यादि ॥ गतम् ॥

वत्याग्नेयं वै हिरण्यं यस्यैव हिरण्यं तेनैवैनंद्विन्दते सावित्रो भवति सवितृप्रसूत एवैनंद्विन्दते भूम्यै चरुर्भवत्यस्यामेवैनंद्विन्दत उपैनꣳ हिरण्यं नमति वि वा एष इन्द्रियेणं वीर्येणर्ध्यते यो हिरण्यं विन्दतं एताम् ॥ ९ ॥ एव निर्वपेद्धिरण्यं वित्त्वा नेन्द्रियेणं वीर्येण व्यृध्यत ए-

यस्यं । एव । हिरण्यम् । तेनं । एव । एनत् । विन्दते । सावित्रः । भवति । सवितृप्रसूत इति सवितृ–प्रसूतः । एव । एनत् । विन्दते । भूम्यै । चरुः । भवति । अस्याम् । एव । एनत् । विन्दते । उपेति । एनम् । हिरण्यम् । नमति । [8]वीति । वै । एषः । इन्द्रियेणं । वीर्येण । ऋध्यते । यः । हिरण्यम् । विन्दतें । एताम् ॥ ९ ॥ एव । निरिति । वपेत् । हिरण्यम् । वित्त्वा । न । इन्द्रियेणं । वीर्येण । वीति । ऋध्यते । [9]एताम् । एव । निरिति । वपेत् ।

[8]वि वा एष इत्यादि ॥ गतम्* । हिरण्यं वित्त्वा लब्ध्वा एतां निर्वपेद् ॥

[9]एतामेवेति ॥ यस्य हिरण्यं नश्येत् प्रसह्य नष्टस्य लाभा-

*सं. २–२–१.४

तामेव निर्वपेद्यस्य हिरण्यं नश्ये-
द्यदाग्नेयो भवत्याग्नेयं वै हिरण्यं य-
स्यैव हिरण्यं तेनैवैनद्विन्दति सा-
वित्रो भवति सवितृप्रसूत एवैनद्वि-
न्दति भूम्यै चरुर्भवत्यस्यां वा एतन्न-
श्यति यन्नश्यत्यस्यामेवैनद्विन्दती-
न्द्रः ॥ १० ॥ त्वष्टुस्सोमंमभीषहा-

यस्यं । हिरंण्यम् । नश्येत् । यत् । आग्नेयः । भवति । आग्नेयम् । वै । हिरंण्यम् । यस्यं । एव । हिरंण्यम् । तेनं । एव । एनत् । विन्दति । सावित्रः । भवति । सवितृप्रसूत इति सवितृ—प्रसूतः । एव । एनत् । विन्दति । भूम्यै । चरुः । भवति । अस्याम् । वै । एतत् । नश्यति । यत् । नश्यति । अस्याम् । एव । एनत् । विन्दति । [10]इन्द्रः ॥१०॥ त्वष्टुः । सोमंम् । अभीषहेत्यंभि—सहा । अपिबत् ।

यैतां निर्वपेत् । विन्दतिस्स्वरितेत्, तत्र नष्टस्य लाभे कर्त्रभिप्रायस्य पूर्व[र्ण]स्या*भावादात्मनेपदाभावः ॥

[10]इन्द्रस्त्वष्टुरित्यादि ॥ अभीषहा सोममपिबत् । सहतेः क्विपि 'नहिवृतिवृषि' इत्युपसर्गस्य दीर्घत्वम् । शक्तिमभिभूय यथाबलं समग्रमपिबत् । ततस्स सोमस्तेन पीतो विष्वङ् नानागमनः

*ख. प्रायस्या.

पिबन्थ्स विष्वङ्ङ्व्यार्छुन्थ्स इन्द्रियेण सोमपीथेन व्यार्ध्यत स यदूर्ध्वमुदवमीत्ते श्यामाका अभवन्त्स प्रजापतिमुपाधावत्तस्मा एतꣳ सोमेन्द्रꣳ श्यामाकं चरुं निरवपत्तेनैवास्मिन्नि-

सः । विषुङ् । वीति । आर्छत् । सः । इन्द्रियेण । सोमपीथेनेति सोम–पीथेन । वीति । आर्ध्यत । सः । यत् । ऊर्ध्वम् । उदवमीदित्युत्–अवमीत् । ते । श्यामाकाः । अभवन् । सः । प्रजापतिमिति प्रजा–पतिम् । उपेति । अधावत् । तस्मै । एतम् । सोमेन्द्रम् । श्यामाकम् । चरुम् । निरिति । अवपत् । तेन । एव । अस्मिन्न् । इन्द्रियम् । सोम-

उपरिष्टादधस्ताच्च व्यार्छत् विनिर्गतोभवत् । ततस्स इन्द्र इन्द्रियेण सोमपीथेन पीतेन सोमेन व्यृद्धोभवत् । तत्र स इन्द्रोयमूर्ध्वमुदवमीत्, ते श्यामाका अभवन् । वर्षाप्रभवो धान्यविशेषश्श्यामाकः । अथ स इन्द्रः प्रजापतिमुपेत्य इत्थमस्मिन् प्रतिविधातव्यमित्यब्रवीत् । तस्मा इत्यादि । गतम् । सोमेन्द्रमिति । 'नेन्द्रस्य परस्य' इत्युत्तरपदस्य वृद्ध्यभावः । सोमस्य तु पूर्वपदस्य नेष्यते वृद्धिः । श्यामाकमिति । 'अनुदात्तादेश्च' इत्यस्यापवादः 'कोपधाच्च' इत्यण् ॥

न्द्रिय॒ꣳ सोम॑पी॒थम॑दधा॒द्धि वा ए॒ष इ॑न्द्रि॒येण॑ सोम॑पी॒थेन॑र्ध्य॑ते॒ यस्सोम॒ं वमि॑ति॒ यस्सोम॑वा॒मी स्यात्तस्मै॑ ॥ ११ ॥ ए॒तꣳ सोमे॒न्द्रꣳ श्यामा॒कं च॒रुं निर्व॑पे॒थ्सोमं॑ चैवेन्द्रं॑ च॒ स्वेन॑ भाग॒धेये॒नोप॑ धाव॒ति ताव॒वास्मि॑न्निन्द्रि॒यꣳ सोम॑पी॒थं ध॑त्तो॒ नेन्द्रि॒येण॑ सोम॑पी॒थेन॒ व्यृध्य॑ते॒ यथ्सौ॒म्यो

पी॒थमिति॑ सोम–पी॒थम् । अ॒द॒धा॒त् । [11]वीति॑ । वै । ए॒षः । इ॒न्द्रि॒येण॑ । सो॒म॒पी॒थेनेति॑ सोम–पी॒थेन॑ । ऋ॒ध्य॒ते॒ । यः । सोम॑म् । वमि॑ति । यः । सो॒म॒वा॒मीति॑ सोम–वा॒मी । स्यात् । तस्मै॑ ॥ ११ ॥ ए॒तम् । सो॒मे॒न्द्रम् । श्या॒मा॒कम् । च॒रुम् । निरिति॑ । व॒पे॒त् । सोम॑म् । च॒ । ए॒व । इ॒न्द्रम् । च॒ । स्वेन॑ । भा॒ग॒धेये॒नेति॑ भाग–धेये॑न । उ॒पेति॑ । धा॒व॒ति॒ । तौ । ए॒व । अ॒स्मि॒न्न् । इ॒न्द्रि॒यम् । सो॒म॒पी॒थमिति॑ सोम–पी॒थम् । ध॒त्तः । न । इ॒न्द्रि॒येण॑ । सो॒म॒पी॒थेनेति॑ सोम–पी॒थेन॑ । वीति॑ । ऋ॒ध्य॒ते॒ । यत् । सौ॒म्यः ।

[11]यस्सोमवामी स्यादिति ॥ वैदिकस्य वमने चरुर्विधीयते ।

भवति सोमपीथमेवाव रुन्धे यदै-
न्द्रो भवतीन्द्रियं वै सोमपीथ इन्द्रि-
यमेव सोमपीथमव रुन्धे श्यामा-
को भवत्येष वाव स सोमः ॥१२॥
साक्षादेव सोमपीथमव रुन्धेऽग्नये
दात्रे पुरोडाशमष्टाकपालं निर्वपेदै-

भवति । सोमपीथमिति सोम-पीथम् । एव । अवेति । रुन्धे । यत् । ऐन्द्रः । भवति । इन्द्रियम् । वै । सोमपीथ इति सोम-पीथः । इन्द्रियम् । एव । सोमपीथमिति सोम-पीथम् । अवेति । रुन्धे । श्यामाकः । भवति । एषः । वाव । सः । सोमः ॥ १२ ॥ साक्षादिति स-अक्षात् । एव । सोमपीथमिति सोम-पीथम् । अवेति । रुन्धे । [12]अग्नये । दात्रे । पुरोडाशम् । अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपेत् । इन्द्राय । प्रदात्र इ-

न विरेकार्थस्य लौकिकस्य । आहुश्च—'पानव्यापच्च तद्वत्'* इति । तत्रापि यजमानस्य वमने न ऋत्विजामिति 'तत्सर्वत्राविशेषात्'* इत्यत्र प्रतिपादितम् । गतमन्यत् । एष वाव स सोम इति । उद्वान्तसोमपरिमाणत्वात् ॥

[12]अग्नये दात्र इत्यादि ॥ तृतीयं संसृष्टहविः प्राजापत्यम् । 'उदात्तयणः' इति चतुर्थ्या उदात्तत्वम् ॥

*मीमां. ३-४-३८,४०

न्द्राय प्रदात्रे पुरोडाशमेकादशक-
पालं पशुकामोऽग्निरेवास्मै पशून्प्र-
जनयति वृद्धानिन्द्रः प्र यच्छति
दधि मधु घृतमापो धाना भवन्त्ये-
तद्वै पशूनाꣳ रूपꣳ रूपेणैव पशून-
व रुन्धे पञ्चगृहीतं भवति पाङ्क्ता हि

ति प्र—दात्रे । पुरोडाशम् । एकादशकपालमित्ये-
कादश—कपालम् । पशुकाम इति पशु—कामः ।
अग्निः । एव । अस्मै । पशून् । प्रजनयतीति
प्र—जनयति । वृद्धान् । इन्द्रः । प्रेति । यच्छति ।
[13]दधि । मधु । घृतम् । आपः । धानाः । भवन्ति ।
एतत् । वै । पशूनाम् । रूपम् । रूपेण । एव ।
पशून् । अवेति । रुन्धे । पञ्चगृहीतमिति पञ्च—
गृहीतम् । भवति । पाङ्क्ताः । हि । पशवः । बहु-

[13]दधि मध्वित्यादि ॥ अत्रायं प्रयोगः—'देवस्य त्वा' इति प्रतिपदं कृत्वा 'अग्नये दात्रे जुष्टम्' इति चतुरो मुष्टीन् व्रीहीणां निर्वपति । अथैवमेव 'इन्द्राय प्रदात्रे' एवं व्रीहीणाम् । अथैवमेव 'प्रजापतये जुष्टम्' इति चतुरो यवानाम्, तेषां व्रीहिष्वेव हविष्कृतमुत्पाद*यन्ति, उपोद्यच्छन्ते†यवान्, हविष्कृता वाचं विसृजन्ते । समानं कर्माधिवपनात् । अधिवाप्य दक्षिणा-

*तं—मुद्रास, †ख—यजन्ते.

पशवो बहुरूपं भवति बहुरूपा हि
पशवः ॥ १३ ॥ समृद्ध्यै प्राजाप-
त्यं भवति प्राजापत्या वै पशवः
प्रजापतिरेवास्मै पशून्प्र जनयत्या-
त्मा वै पुरुषस्य मधु यन्मध्वग्नौ

रूपमिति बहु–रूपम् । भवति । बहुरूपा इति बहु–रूपाः । हि । पशवः ॥ १३ ॥ समृद्ध्या इति सं–ऋद्ध्यै । प्राजापत्यमिति प्राजा–पत्यम् । भवति । प्राजापत्या इति प्राजा–पत्याः । वै । पशवः । प्रजापतिरिति प्रजा–पतिः । एव । अस्मै । पशून् । प्रेति । जनयति । [14]आत्मा । वै । पुरुषस्य । मधु । यत् । मधु । अग्नौ । जुहोति । आत्मानम् । एव । तत् । यजमानः । अग्नौ ।

---

धे गार्हपत्यस्य अष्टौ कपालान्युपदधाति, एकादेशोत्तरतः । अथैनान् यवानुलूखले परिक्षुद्य गार्हपत्ये कपालमधिश्रित्य धाना भर्जयन्ति, यदैते हवींषि अभिवृणक्ति तदैता धानाश्चतुष्टयेनोपसृजन्ति, दध्ना मधुना घृतेनाद्भिरिति । एवं पञ्चगृहीतं भवति। पाङ्क्ता इति । पङ्क्तिप्रभवाः । पङ्क्तिशब्द उत्सादिः । बहुरूपमिति । दध्यादीनां नानारूपत्वात् । 'बहोर्नञ्वत्' इत्युत्तरपदान्तोदात्तत्वम् । प्राजापत्यमिति । तृतीयस्य प्राजापत्यत्वात् ॥

[14]अथ मधुहोमं दूषयति—आत्मेति ॥ पुरुषस्यात्मा मधु मन्तृ-

जुहोत्यात्मानमेव तद्यजमानोग्नौ प्र दधाति पङ्क्यौ याज्यानुवाक्ये भवतः पाङ्क्तः पुरुषः पाङ्क्ताः पशव आत्मानमेव मृत्योर्निष्क्रीय पशूनव रुन्धे ॥ १४ ॥

प्रेति । दधाति । पङ्क्यौ । याज्यानुवाक्ये इति याज्या–अनुवाक्ये । भवतः । पाङ्क्तः । पुरुषः । पाङ्क्ताः । पशवः । आत्मानम् । एव । मृत्योः । निष्क्रीयेति निः–क्रीय । पशून् । अवेति । रुन्धे ॥ १४ ॥

इन्द्रियेस्मिन्भूम्यां एतामिन्द्रस्स्यात्तस्मै सोमो- बहुरूपा हि पशव एकचत्वारिंशच्च ॥२॥

त्वात् । मन्यतेर्मधु ; उप्रत्यये धकारोन्तादेशो विधीयते । तस्मान्मधुनोग्नौ होमेन आत्मानमेवाग्नौ यजमानः प्रक्षिपति, तस्मादयुक्तमिति । परिहरति—पङ्क्याविति । 'घृतं न पूतम्'* 'उभे सुश्चन्द्र सर्पिषः'* इति प्राजापत्यस्य याज्यानुवाक्ये भवतः । आत्मानमेवेति । याज्यानुवाक्यात्मपङ्क्यात्मनः पुरुषस्याग्नावनुप्रवेशात् अग्न्यात्मकान्मृत्योरात्मानं मधुहोमेनाग्नौ प्रविष्टं निष्क्रीय पशूनवरुन्धे ॥

इति द्वितीये तृतीये द्वितीयोनुवाकः.

---

*सं. २–२–१२.[25—12]

देवा वै सत्रमासतर्धिपरिमितं य-
शस्कामास्तेषाꣳ सोमꣳ राजानं
यश आर्छथ्स गिरिमुदैत्तमग्निरनू-
दैत्तावग्नीषोमौ समभवतां ताविन्द्रो
यज्ञविभ्रष्टोनु परैत्तावब्रवीद्याजयतं

[1]देवाः । वै । सत्रम् । आसत । ऋद्धिपरिमितमित्यृद्धि–परिमितम् । यशस्कामा इति यशः–कामाः । तेषाम् । सोमम् । राजानम् । यशः । आर्छत् । सः । गिरिम् । उदिति । ऐत् । तम् । अग्निः । अनु । उदिति । ऐत् । तौ । अग्नीषोमावित्यग्नी–सोमौ । समिति । अभवताम् । तौ । इन्द्रः । यज्ञविभ्रष्ट इति यज्ञ–विभ्रष्टः । अनु । परेति । ऐत् । तौ । अब्रवीत् । याजयतम् । मा । इति ।

[1]देवा वै सत्रमासतेति ॥ ऋद्ध्या फलेन परिमितमविच्छिन्नं सत्रमासत, तादृशं क्रतुविशेषमकुर्वत यशस्कामा देवाः । केचिदाहुः—सत्रासनं क्रतुविशेषः सत्रशब्देनोच्यते, तत्र 'गोपोषं पुष्णाते' इतिवत् सामान्यवचन आस्तिर्द्रष्टव्य इति । अन्ये त्वाहुः—आस्थानकर्मा आस्तिरिति । तेषामित्यादि । गतम् । तेषामिति निर्धारणे षष्ठी । समभवतामिति । एकीभूतौ ऐकमत्यं गतावित्यर्थः । तस्मा इति । इन्द्रायेष्टिं निरवपतामग्नी-

मोति तस्मा एतामिष्टिं निरंवपता-
माग्नेयमष्टाकंपालमैन्द्रमेकादशकपा-
लꣳ सौम्यं चरुं तयैवास्मिन्तेजः
॥ १५ ॥ इन्द्रियं ब्रह्मवर्चसमधत्तां
यो यज्ञविभ्रष्टस्स्यात्तस्मा एतामिष्टिं
निर्वपेदाग्नेयमष्टाकंपालमैन्द्रमेकाद-
शकपालꣳ सौम्यं चरुं यदाग्नेयो

तस्मै । एताम् । इष्टिम् । निरिति । अवपताम् । आग्नेयम् । अष्टाकंपालमित्यष्टा—कपालम् । ऐन्द्रम् । एकादशकपालमित्येकादश—कपालम् । सौम्यम् । चरुम् । तया । एव । अस्मिन्न् । तेजः । ॥ १५ ॥ इन्द्रियम् । ब्रह्मवर्चसमिति ब्रह्म—वर्च-सम् । अधत्ताम् । यः । यज्ञविभ्रष्ट इति यज्ञ—विभ्रष्टः । स्यात् । तस्मै । एताम् । इष्टिम् । निरिति । वपेत् । आग्नेयम् । अष्टाकंपालमित्यष्टा—कपालम् । ऐन्द्रम् । एकादशकपालमित्येकादश—कपालम् । सौम्यम् । चरुम् । यत् । आग्नेयः ।

---

षोमौ त्रिहविष्काम् । गतमन्यत् । ब्रह्मवर्चसं तेनेति । दधातीत्येव ॥

भर्वति तेज एवास्मिन्तेन दधाति
यदैन्द्रो भर्वतीन्द्रियमेवास्मिन्तेन द-
धाति यत्सौम्यो ब्रह्मवर्चसं तेना-
ग्नेयस्य च सौम्यस्य चैन्द्रे समा-
श्लेषयेत्तेजश्चैवास्मिन्ब्रह्मवर्चसं च स-
मीची ॥ १६ ॥ दधात्यग्नीषोमी-

भवति । तेजः । एव । अस्मिन्न् । तेन । दधाति । यत् । ऐन्द्रः । भवति । इन्द्रियम् । एव । अस्मिन्न् । तेन । दधाति । यत् । सौम्यः । ब्रह्मवर्चसमिति ब्रह्म–वर्चसम् । तेन । [2]आग्नेयस्य । च । सौम्यस्य । च । ऐन्द्रे । समाश्लेषयेदिति सं–आ-श्लेषयत् । तेजः । च । एव । अस्मिन्न् । ब्रह्मवर्चसमिति ब्रह्म–वर्चसम् । च । समीची इति । ॥ १६ ॥ दधाति । [3]अग्नीषोमीयमित्यग्नी–सो-

---

[2]आग्नेयस्य चेत्यादि ॥ कर्मणस्सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । आग्नेयं सौम्यं चैन्द्रमाश्लेषयेत् समाश्लिष्टानि संहितानि सर्वाणि हवींषि अधिश्रयेत् । तेजश्च ब्रह्मवर्चसं चास्मिन् यजमाने यज्ञविभ्रष्टे समीची सङ्गते दधाति । आग्नेयसौम्ययोर्वा लेपौ । इष्टिपशुसोमानां स्वकालेऽकरणं विभ्रेषः ॥

[3]अग्नीषोमीयमित्यादि ॥ 'द्यावापृथिवीशुनासीर' इति छः । ब्राह्मणस्याग्नेयत्वात् सोमवत्त्वाच्चास्याग्निस्सोमश्च स्वा देवता ॥

यमेकादशकपालं निर्वपेद्यं कामो
नोपनमेदाग्नेयो वै ब्राह्मणस्स सोमं
पिबति स्वामेव देवताꣳ स्वेन भा-
गधेयेनोप धावति सैवैनं कामेन
समर्धयत्युपैनं कामो नमत्यग्नीषो-
मीयमष्टाकपालं निर्वपेद्ब्रह्मवर्चस-
कामोऽग्नीषोमावेव स्वेन भागधेये-

मीयम् । एकादशकपालमित्येकादश–कपालम् । निरिति । वपेत् । यम् । कामः । न । उपनमेदित्युप–नमेत् । आग्नेयः । वै । ब्राह्मणः । सः । सोमम् । पिबति । स्वाम् । एव । देवताम् । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । सा । एव । एनम् । कामेन । समिति । अर्धयति । उपेति । एनम् । कामः । नमति । [4]अग्नीषोमीयमित्यग्नी–सोमीयम् । अष्टाकपालमित्यष्टा–कपालम् । निरिति । वपेत् । ब्रह्मवर्चसकाम इति ब्रह्मवर्चस–कामः । अग्नीषोमावित्यग्नी–सोमौ । एव । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति ।

[4]अग्नीषोमीयमष्टाकपालमिति ॥ गतम् । 'यच्छ्यामाकः' इति वचनात् श्यामाकानां निर्वपेत् ॥

नोप धावति तावेवास्मिन्ब्रह्मवर्चसं धत्तो ब्रह्मवर्चस्येव ॥ १७ ॥ भवति यदष्टाकपालस्तेनाग्नेयो यच्छ्यामाकस्तेन सौम्यस्समृद्ध्यै सोमाय वाजिने श्यामाकं चरुं निर्वपेद्यः क्लैब्याद्बिभीयाद्रेतो हि वा एतस्माद्वाजिनमपक्रामत्यथैष क्लैब्याद्बिभाय सोममेव वाजिनꣳ स्वेन भागधे-

धावति । तौ । एव । अस्मिन्न् । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । धत्तः । ब्रह्मवर्चसीति ब्रह्म—वर्चसी । एव ॥ १७ ॥ भवति । यत् । अष्टाकपाल इत्यष्टा—कपालः । तेन । आग्नेयः । यत् । श्यामाकः । तेन । सौम्यः । समृद्ध्या इति सं—ऋद्ध्यै । [5]सोमाय । वाजिने । श्यामाकम् । चरुम् । निरिति । वपेत् । यः । क्लैब्यात् । बिभीयात् । रेतः । हि । वै । एतस्मात् । वाजिनम् । अपक्रामतीत्यप—क्रामति । अथ । एषः । क्लैब्यात् । बिभाय । सोमम् । एव । वाजिनम् । स्वेन । भागधेयेनेति

[5]सोमाय वाजिन इत्यादि ॥ वाजिने वाजिनस्थानीयं प्रजनन-

येनोप धावति स एवास्मिन्रेतो वा-
जिनं दधाति न क्लीबो भवति
ब्राह्मणस्पत्यमेकादशकपालं निर्व-
पेद्ग्रामकामः ॥ १८ ॥ ब्रह्मणस्प-
तिमेव स्वेन भागधेयेनोप धावति
स एवास्मै सजातान्प्र यच्छति

भाग–धेयेन । उपेति । धावति । सः । एव । अ-स्मिन् । रेतः । वाजिनम् । दधाति । न । क्लीबः । भवति । [6]ब्राह्मणस्पत्यमिति ब्राह्मणः–पत्यम् । एकादशकपालमित्येकादश–कपालम् । निरिति । वपेत् । ग्रामकाम इति ग्राम–कामः ॥ १८ ॥ ब्रह्मणः । पतिम् । एव । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । सः । एव । अस्मै । सजातानिति स–जातान् । प्रेति । यच्छति । ग्रा-

शक्तिमत् . रेतोऽस्मादपक्रामति । अथानन्तरमेष क्लैब्याद्बिभाय बिभेति । छान्दसो लिट् । गतमन्यत् ॥

[6]ब्राह्मणस्पत्यमित्यादि ॥ पत्युत्तरपदलक्षणो ण्यः । गणवती इति । 'गणानां त्वा गणपतिम्*' 'स इज्जनेन' *इति ।

*सं. २–३–१४.

ग्राम्यैव भवति गणवती याज्या-
नुवाक्ये भवतस्सजातैरेवैनं गण-
वन्तं करोत्येतामेव निर्वपेद्यः
कामयेत ब्रह्मन्विशं वि नाशयेय-
मिति मारुती याज्यानुवाक्ये कुर्या-

मी । एव । भवति । गणवती इति गण–वती । याज्यानुवाक्ये इति याज्या–अनुवाक्ये । भवतः । सजातैरिति स–जातैः । एव । एनम् । गणवन्त-मिति गण–वन्तम् । करोति । [7]एताम् । एव । निरिति । वपेत् । यः । कामयेत । ब्रह्मन् । वि-शम् । वीति । नाशयेयम् । इति । मारुती इति । याज्यानुवाक्ये इति याज्या–अनुवाक्ये । कुर्यात् ।

'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । गणवत्यौ । सजातैरिति । सजातैर्गणैस्तद्वन्तमेनं करोति ॥

[7]ब्रह्मन्विशामिति ॥ नशिर्गतिकर्मा छान्दसः । ब्रह्मन् ब्राह्मणे विशं वैश्यं विनाशयेयं विशेषेण गमयेयं प्रापयेयमिति । यद्वा— ब्रह्मणि प्रतियोगिनि विनष्टा भवन्तु वैश्या इति । मारुती मारुत्यौ 'मरुतो यद्ध वो दिवः'* 'या वश्शर्म'* इति ब्रह्मणि

*सं. १-५-११[15—16].

ब्रह्मन्नेव विशं वि नाशयति ॥११॥
अर्यम्णे चरुं निर्वपेत्सुवर्गकामोऽ-
सौ वा आदित्योऽर्यमार्यमणमेव स्वे-
न भागधेयेनोप धावति स एवैनꣳ

ब्रह्मन्न् । एव । विशम् । वीति । नाशयति ॥११॥

तेजस्समीचीं ब्रह्मवर्चस्येव ग्रामकामस्त्रिचत्वा-
रिꣳशच्च ॥ ३ ॥

[1]अर्यम्णे । चरुम् । निरिति । वपेत् । सुवर्ग-
काम इति सुवर्ग—कामः । असौ । वै । आदित्यः ।
अर्यमा । अर्यमणम् । एव । स्वेन । भागधेयेनेति
भाग—धेयेन । उपेति । धावति । सः । एव । ए-
नम् । सुवर्गमिति सुवः—गम् । लोकम् । गमयति ।

विशं प्रापयत्येव । 'आ तू न उप गन्तन' *इति च मन्त्रलिङ्गम् । मरुतो हि देवानां विशः ॥

इति द्वितीये तृतीये तृतीयः.

---

[1]अर्यम्ण इत्यादि ॥ गतम् । अरीन् यमयतीत्यर्यमा । इन्द्र इति केचित् । यम इत्यपरे । सूर्य इत्यन्ये । याज्याया इन्द्रमनू†त्पन्नत्वात् ॥

*सं. १-५-११.[15] †क-इन्द्रानू.

सुवर्गं लोकं गमयत्यर्यम्णे चरुं
निर्वपेद्यः कामयेत दानकामा मे
प्रजास्स्युरित्यसौ वा आदित्योऽर्यमा
यः खलु वै ददाति सोऽर्यमार्य-
मणमेव स्वेन भागधेयेनोप धाव-
ति स एव ॥ २० ॥ अस्मै दान-
कामाः प्रजाः करोति दानकामा

[2]अर्यम्णे । चरुम् । निरिति । वपेत् । यः । काम-
येत । दानकामा इति दान—कामाः । मे । प्रजा
इति प्र—जाः । स्युः । इति । असौ । वै । आदित्यः ।
अर्यमा । यः । खलु । वै । ददाति । सः । अर्य-
मा । अर्यमणम् । एव । स्वेन । भागधेयेनेति
भाग—धेयेन । उपेति । धावति । सः । एव ॥२०॥
अस्मै । दानकामा इति दान—कामाः । प्रजा इति
प्र—जाः । करोति । दानकामा इति दान—कामाः ।
अस्मै । प्रजा इति प्र—जाः । भवन्ति । [3]अर्यम्णे ।

[2]यः खल्विति ॥ दातुरर्यमत्वं ताद्धर्म्यात् ॥

[3]स्वस्तीति ॥ अविघ्नेन । तद्गमयतीति । गन्तव्यं स्वस्ति गमयति, अरणहेतुरर्यमेति ॥

अस्मै प्रजा भवन्त्यर्यम्णे चरुं नि-
र्वपेद्यः कामयेत स्वस्ति जनतामि-
यामित्यसौ वा आदित्योऽर्यमार्यमण-
मेव स्वेन भागधेयेनोप धावति स
एवैनं तद्गमयति यत्र जिगमिषतीन्द्रो वै देवानामानुजावर आसीत्स

चरुम् । निरिति । वपेत् । यः । कामयेत । स्वस्ति । जनताम् । इयाम् । इति । असौ । वै । आदित्यः । अर्यमा । अर्यमणम् । एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः । एव । एनम् । तत् । गमयति । यत्र । जिगमिषति । [4]इन्द्रः । वै । देवानाम् । आनुजावर इत्यानु-जावरः । आसीत् । सः । प्रजापतिमिति

[4]इन्द्रो वा इत्यादि ॥ आनुजावर इव आसीत् । आनुजावरोपकर्षते [रोपकृष्टतरः] । आनुपूकामिति । अनुपूयन्त इत्यानुपूकाः व्रीहिविशेषाः । ये लूनेभ्यः स्तम्बेभ्यः स्वयं पुनःप्ररोहन्ति तत्प्रभवाणां व्रीहीणामियं संज्ञा । ‘ सत्सूद्विष ’ इत्य[इति क्विप्, अ]ल्पार्थे प्रागिवीयः, सुषामादित्वात्पत्वम् । तेषां विकारः पुरोडाशः आनुपूकः । कोपधादण् । अग्रं प्राधान्यं देवतानां पर्यणयत् सर्वतः प्रापयत् । बुध्नवती इति । ‘ बुध्नादग्रमङ्गि-

प्रजापतिमुपाधावत्तस्मा एतमैन्द्र-
मानुषूकमेकादशकपालं निः॥२१॥
अवपत्तेनैवैनमग्रं देवतानां पर्यणय-
द्बुध्नवती अग्रवती याज्यानुवाक्ये
अकरोद्बुध्नादेवैनमग्रं पर्यणयद्यो रा-
जन्य आनुजावरस्स्यात्तस्मा एतमै-

प्रजा–पतिम् । उपेति । अधावत् । तस्मै । एतम्। ऐन्द्रम् । आनुषूकमित्यानु–सूकम् । एकादशकपालमित्येकादश–कपालम् । निरिति ॥ २१ ॥ अवपत् । तेन । एव । एनम् । अग्रम् । देवतानाम्। परीति । अनयत् । बुध्नवती इति बुध्न–वती । अग्रवती इत्यग्र–वती । याज्यानुवाक्ये इति याज्या–अनुवाक्ये । अकरोत् । बुध्नात् । एव । एनम् । अग्रम् । परीति । अनयत् । यः । राजन्यः । आनुजावर इत्यानु–जावरः । स्यात् । तस्मै । ए-

रोभिः'* इति पुरोनुवाक्या, 'बुध्नादग्रेण वि मिमाय मानैः'* इति याज्या । बुध्नादेवेति । मूलादेवारभ्य दृढमूलमिति यावत् । आनुजावर इति । अनुजः कनिष्ठः । तस्मान्निकृष्टैश्वर्यो योनुजस्य गुणभूतो

*सं. २-३-१४.

न्द्रमानुषूकमेकादशकपालं निर्वपे-
दिन्द्रमेव स्वेन भागधेयेनोप धा-
वति स एवैनमग्रं समानानां प-
रिणयति बुध्नवती अग्रवती याज्या-
नुवाक्ये भवतो बुध्नादेवैनमग्रम् ॥
२२ ॥ परिणयत्यानुषूको भवत्ये-
षा ह्येतस्य देवता य आनुजावर-

तम् । ऐन्द्रम् । आनुषूकमित्यानु–सूकम् । एका-दशकपालमित्येकादश–कपालम् । निरिति । व-पेत् । इन्द्रम् । एव । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । सः । एव । एनम् । अग्रम् । समानानाम् । परीति । नयति । बुध्नव-ती इति बुध्न–वती । अग्रवती इत्यग्र–वती । या-ज्यानुवाक्ये इति याज्या–अनुवाक्ये । भवतः । बुध्नात् । एव । एनम् । अग्रम् ॥ २२ ॥ परीति । नयति । आनुषूक इत्यानु–सूकः । भवति । एषा । हि । एतस्य । देवता । यः । आनुजावर इत्यानु–

भवति सोनुजावरः स एवानुजावरः । 'सान्नाय्यानुजावर' इत्यादिना स्वार्थिकोण् । एषा हीति । य आनुजावरः एतस्य

स्समृद्ध्यै यो ब्राह्मण आनुजावर-
स्स्यात्तस्मा एतं बार्हस्पत्यमानुषू-
कं चरुं निर्वपेद्बृहस्पतिमेव स्वेन
भागधेयेनोप धावति स एवैनमग्रꣳ
समानानां परिणयति बुध्नवती अ-
ग्रवती याज्यानुवाक्ये भवतो बुध्ना-

जावरः । समृद्ध्या इति सं-ऋद्ध्यै । ⁵यः । ब्रा-
ह्मणः । आनुजावर इत्यानु-जावरः । स्यात् ।
तस्मै । एतम् । बार्हस्पत्यम् । आनुषूकमित्या-
नु-सूकम् । चरुम् । निरिति । वपेत् । बृहस्पति-
म् । एव । स्वेन । भागधेयेनेति भाग-धेयेन ।
उपेति । धावति । सः । एव । एनम् । अग्रम् ।
समानानाम् । परीति । नयति । बुध्नवती इति
बुध्न-वती । अग्रवती इत्यग्र-वती । याज्यानुवाक्ये
इति याज्या-अनुवाक्ये । भवतः । बुध्नात् । एव ।

एषा देवता । का? या आनुषूकस्य, आनुषूकभागी इन्द्र इत्यर्थः ॥

⁵यो ब्राह्मण इत्यादि ॥ ब्राह्मणानुजावरविषये बार्हस्पत्यचरु-
विधिः । शेषो गतः* ॥

*सं. २-३-४.⁴

देवैनमग्रं परिणयत्यानुषूको भवत्ये-
षा ह्येतस्य देवता य आनुजावर-
स्समृद्ध्यै ॥ २३ ॥
प्रजापतेस्त्रयस्त्रिꣳशद्दुहितर आस-

एनम् । अग्रम् । परीति । नयति । आनुषूक इ-
त्यानु-सूकः । भवति । एषा । हि । एतस्य ।
देवता । यः । आनुजावर इत्यानु-जावरः । समृ-
द्ध्या इति सं-ऋद्ध्यै ॥ २३ ॥

एव निरग्रमेतस्य चत्वारि च ॥ ४ ॥
[1]प्रजापतेरिति प्रजा-पतेः । त्रयस्त्रिꣳशदिति
त्रयः-त्रिꣳशत् । दुहितरः । आसन् । ताः । सो-

इति द्वितीये तृतीये चतुर्थोनुवाकः.

---

[1]प्रजापतेस्त्रयस्त्रिशदित्यादि ॥ अश्विन्याद्यस्सप्तविंशतिस्तारकाभिमानिन्यः; •ऋद्ध्या*दयष्षडन्या इत्येके । अन्ये तु—षट्कृत्तिकाः अभिजिदेका अश्विन्याद्यष्षड्विंशतिरिति त्रयस्त्रिंशत्तारका इत्याहुः । ईर्ष्यन्तीरिति । सपत्नीबहुमानमसहमानाः पितरमेव पुनरग-

*ख—ऋगा.

न्तास्सोमा॑य॒ राज्ञे॑ऽददा॒त्तासा॑ꣳ रोहि॒णीमु॒पैत्ता ईर्ष्य॑न्ती॒ः पुन॑रगच्छ॒न्ता अन्वै॑त्ताः पु॒न॑रयाच॒त ता अ॑स्मै॒ न पु॒न॑रददा॒थ्सो॑ऽब्रवीदृ॒तम॑मीष्व॒ यथा॑ समाव॒च्छ उ॑पै॒ष्याम्यथ॑ ते॒ पुन॑-

मा॑य॑ । राज्ञे॑ । अ॒द॒दा॒त् । तासा॑म् । रो॒हि॒णीम् । उ॒पेति॑ । ऐ॒त् । ताः । ईर्ष्य॑न्तीः । पुन॑ः । अ॒ग॒च्छ॒न् । ताः । अ॒न्विति॑ । ऐ॒त् । ताः । पुन॑ः । अ॒या॒च॒त॒ । ताः । अ॒स्मै॒ । न । पु॒न॑ः । अ॒द॒दा॒त् । सः । अ॒ब्र॒वी॒त् । ऋ॒तम् । अ॒मी॒ष्व॒ । यथा॑ । स॒मा॒व॒च्छ इति॑ समावत्-शः । उ॒पै॒ष्यामीत्यु॑प-ए॒ष्यामि॑ । अथ॑ । ते॒ । पुन॑ः । दा॒स्या॒मि॒ । इति॑ । सः । ऋ॒तम् ।

च्छन् । ता अन्वगच्छत् सोमः अयाचत प्रजापतिम् । ततस्तास्सोमाय नाददात्प्रजापतिः । अथ स प्रजापतिरब्रवीत् सोमं ऋतं सत्यममीष्व प्रतिपद्यस्व शपथं कुरु, सत्येनेति यावत् । शपो लुक्, छान्दस इडागमः । शपथप्रयोगं दर्शयति—यथेति । यथा इदमर्थरूपं समावच्छ उपेष्यामीति एवं शपथः क्रियताम् । अथैतास्तुभ्यं पुनर्दास्यामीति । समादावतुप् स्वार्थिकः । सममित्यर्थः । ततः 'सङ्ख्यैकवचनात्' इति शसः क्रियाविशेषणत्वात्कर्मत्वम् । सर्वेष्वप्यहस्सु सममेवैताः सर्वा उपेष्यामीत्यर्थः । स सोमस्तथाकरोत्, प्रजापतिश्च पुनरदात् । अथ सोमः पुनरपि

दास्यामीति स ऋतमामीत्ता अस्मै
पुनरददात्तासाꣳ रोहिणीमेवोपं ॥
२४ ॥ ऐत्तं यक्ष्म आर्च्छद्राजानं
यक्ष्म आरदिति तद्राजयक्ष्मस्य
जन्म यत्पापीयानभवत्तत्पापयक्ष्म-
स्य यज्जायाभ्योविन्दत्तज्जायेन्यस्य

आमीत् । ताः । अस्मै । पुनः । अददात् । ता-
साम् । रोहिणीम् । एव । उपेति ॥ २४ ॥ ऐत् ।
तम् । यक्ष्मः । आर्च्छत् । राजानम् । यक्ष्मः ।
आरत् । इति । तत् । राजयक्ष्मस्येति राज—य-
क्ष्मस्य । जन्म । यत् । पापीयान् । अभवत् ।
तत् । पापयक्ष्मस्येति पाप—यक्ष्मस्य । यत् ।
जायाभ्यः । अविन्दत् । तत् । जायेन्यस्य । यः ।

तासां मध्ये रोहिणीमेवोपैत्, अथ सत्यातिक्रमात् तं सोमं यक्ष्मः क्षयरोगः आर्तमकरोत् । यक्ष पूजायाम्, औणादिको मन्प्रत्ययः । रोगोत्तमत्वं पूजा । राजानमित्यादि । राज्ञो यक्ष्मः राजयक्ष्म इति । पापीयानिति । पुरुषान्तरयक्ष्मात्पापतरत्वात्पापश्चासौ यक्ष्मश्चेति । जायाभ्य इति । 'तत आगतः' इति छान्दस एन्यः । य एवमिति । एकस्यैव यक्ष्मस्य निमित्तभेदेन त्रित्वमुपचर्यते । विन्दतीति । बाधितुं न लभन्ते । अथ सोमः गजापतिं मुक्त्वा एता जाया एव नमस्यन् पूजयन् उपा-

य एवमेतेषां यक्ष्माणां जन्म वेद नैनमेते यक्ष्मा विन्दन्ति स एता एव नमस्यन्नुपाधावत्ता अब्रुवन्वरं वृणामहै समावच्छ एव न उपाय इति तस्मा एतम् ॥ २५ ॥ आदित्यं चरुं निरवपन्तेनैवैनं पापात्स्रामादमुञ्चन् यः पापयक्ष्मगृहीत-

एवम् । एतेषाम् । यक्ष्माणाम् । जन्म । वेद । न । एनम् । एते । यक्ष्माः । विन्दन्ति । सः । एताः । एव । नमस्यन् । उपेति । अधावत् । ताः । अब्रुवन् । वरम् । वृणामहै । समावच्छ इति सम-आवत्-शः । एव । नः । उपेति । अयः । इति । तस्मै । एतम् ॥ २५ ॥ आदित्यम् । चरुम् । निरिति । अवपन् । तेन । एव । एनम् । पापात् । स्रामात् । अमुञ्चन् । यः । पापयक्ष्मगृहीत इति

धावत् आर्तोस्मि प्रसीदन्तु भवत्य इति । अथ ता अब्रुवन् वरं वृणामहै सममेव चास्मानुपायः उपगच्छेति तुल्यप्रतिपत्तयो वयं स्यामेति । इत्थमिदं करिष्यामीति सोमेनाभ्युपगते तस्मै आदित्यं चरुं निरवपन् जायाः, तेनैव पापात्स्रामाद्रोगादेनममुञ्चन् ॥

[2] य इत्यादि ॥ गतम् । अमावास्यायामिति शुक्लप्रतिपत्प्रभृति

स्स्यात्तस्मा एतमादित्यं चरुं नि-
र्वपेदादित्यानेव स्वेन भागधेयेनो-
प धावति त एवैनं पापात्स्रामा-
न्मुञ्चन्त्यमावास्यायां निर्वपेदमु-
मेवैनमाप्यायमानमन्वा प्याययति
नवोनवो भवति जायमान इति पु-
रोनुवाक्या भवत्यायुरेवास्मिन्त-
यां दधाति यमादित्या अꣳशुमा-

पापयक्ष्म–गृहीतः । स्यात् । तस्मै । एतम् । आदित्यम् । चरुम् । निरिति । वपेत् । आदित्यान् । एव । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । ते । एव । एनम् । पापात् । स्रामात् । मुञ्चन्ति । अमावास्यायामित्यमा–वास्यायाम् । निरिति । वपेत् । अमुम् । एव । एनम् । आप्यायमानमित्या–प्यायमानम् । अनु । एति । प्याययति । नवोनव इति नवः–नवः । भवति । जायमानः । इति । पुरोनुवाक्येति पुरः–अनुवाक्या । भवति । आयुः । एव । अस्मिन् ।

आप्यायते चन्द्रः, तमनु यजमानमाप्याययति ॥

प्याययन्तीति याज्यैवैनमेतया प्या-
ययति ॥ २६ ॥
प्रजापतिर्देवेभ्योन्नाद्यं व्यादिशत्सो-
ऽब्रवीद्यदिमान्लोकानभ्यतिरिच्यातै

तया । दधाति । यम् । आदित्याः । अंशुम् । आप्यायायन्तीत्या–प्याययन्ति । इति । याज्या । एति । एव । एनम् । एतया । प्याययति ॥२६॥

एवोपैतमस्मिन्त्रयोदश च ॥ ५ ॥

[1]प्रजापतिरिति प्रजा–पतिः । देवेभ्यः । अन्नाद्यमित्यन्न–अद्यम् । व्यादिशदिति वि–आदिशात् । सः । अब्रवीत् । यत् । इमान् । लोकान् । अभीति । अतिरिच्याता इत्यति–रिच्यातै । तत् ।

---

एवैनमिति । एतया आप्याययत्येव ॥

इति द्वितीये तृतीये पञ्चमोनुवाकः.

---

[1]प्रजापतिर्देवेभ्य इत्यादि ॥ व्यादिशत् पृथक्त्वेन व्यावृत्तमादिशत्, एकैकलोकविशेषावधिकमित्यर्थः । अथ देवानां तथा व्यादिश्य सोऽब्रवीत्प्रजापतिः ; यदन्नाद्यमिमान् सर्वानपि लोकान्

तन्ममासदिति तदिमान्लोकानभ्य-
त्यरिच्यतेन्द्रꣳ राजानमिन्द्रमधिरा-
जमिन्द्रꣳ स्वराजानं ततो वै स
इमान्लोकाꣳस्त्रेधादुहत्तत्त्रिधातोस्त्रि-

मम । असत् । इति । तत् । इमान् । लोकान् ।
अभि । अतीति । अरिच्यत । इन्द्रम् । राजानम् ।
इन्द्रम् । अधिराजमित्यधि-राजम् । इन्द्रम् । स्व-
राजानमिति स्व-राजानम् । ततः । वै । सः ।
इमान् । लोकान् । त्रेधा । अदुहत् । तत् । त्रि-
धातोरिति त्रि-धातोः । त्रिधातुत्वमिति त्रिधातु-

अभ्यतिरिच्यते अतिव्याप्य वर्तते नैकैकलोकावधिकं भवति तत् ममासत् अस्तु । अतिरिच्यतेर्लेटि आडागमः, 'वैतोन्यत्र' इत्यैत्वम् । आस्तेर्लेट्याडागमः । तस्मादिमान् लोकान् अभ्यत्यरिच्यत प्राजापत्यमैश्वर्यम् । किमस्मान् लोकानित्याह—इन्द्रं राजानमित्यादि । तिस्र एतास्त्रिधातोर्देवता लोकत्रयात्मिकाः । ततः खलु त्रिधातुदेवतानां त्रित्वात्प्रजापतिः लोकत्रयव्यापी व्याप्तानिमान् लोकांस्त्रेधादुहत् त्रिप्रकारमदुहत् । उत्तरोत्तरज्यायस्त्वात्त्रिप्रकारलोकत्रयात्मना आत्मीयमैश्वर्यं विभक्तवान् । तदित्यादि । त्रयो धातवो धनान्यस्मिन्निति त्रिधातुः, त्रेधा धातव्यत्वात्पुरोडाशस्य । धातव्या वा पुरोडाशा धातवः, त्रिधा भिन्नाः पुरोडाशा अस्मिन्निति । यद्वा—सर्वाधारलोकत्रयात्मकत्वात् त्रिधातुः ॥

धातुत्वं यं कामयेतान्नादस्स्यादिति
तस्मा एतं त्रिधातुं निर्वपेदिन्द्राय
राज्ञे पुरोडाशम् ॥ २७ ॥ एकाद-
दशकपालमिन्द्रायाधिराजायेन्द्राय
स्वराज्ञे यं वा इन्द्रो राजायमिन्द्रो-
धिराजोसाविन्द्रस्स्वराडिमानेव लो-
कान्त्स्वेन भागधेयेनोप धावति त ए-

त्वम् । [2]यम् । कामयेत । अन्नाद इत्यन्न–अदः । स्यात् । इति । तस्मै । एतम् । त्रिधातुमिति त्रि-धातुम् । निरिति । वपेत् । इन्द्राय । राज्ञे । पुरो-डाशम् ॥ २७ ॥ एकादशकपालमित्येकादश–कपालम् । इन्द्राय । अधिराजायेत्यधि–राजाय । इन्द्राय । स्वराज्ञ इति स्व–राज्ञे । अयम् । वै । इन्द्रः । राजा । अयम् । इन्द्रः । अधिराज इत्यधि–राजः । असौ । इन्द्रः । स्वराडिति स्व–राट् । इमान् । एव । लोकान् । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । ते । एव । अ-

[2]यमित्यादि ॥ गतम् । तत्रायं प्रयोगः—चतुरश्चतुरो मुष्टीनेकैकस्यै देवतायै निरुप्य हविष्कृता वाचं विसृजते । समानं कर्माधिवपनात् । अथाध्वर्युः गार्हपत्य एकादशोत्तानानि कपालान्युपदधाति । तेष्वेव त्रीन् पुरोडाशानधिश्रयति । प्रथममधि-

वास्मा अन्नं प्रयच्छन्त्यन्नाद एव भ-
वति यथा वथ्सेन प्रत्तां गां दुह ए-
वमेवेमान्लोकान्प्रत्तान्काममन्नाद्यं
दुह उत्तानेषु कपालेष्वधि श्रयत्ययां-
तयामत्वाय त्रयः पुरोडाशा भवन्ति

स्मै । अन्नम् । प्रेति । यच्छन्ति । अन्नाद इत्यन्न-अदः । एव । भवति । [3]यथा । वत्सेन । प्रत्ताम् । गाम् । दुहे । एवम् । एव । इमान् । लोकान् । प्रत्तान् । कामम् । अन्नाद्यमित्यन्न-अद्यम् । दुहे । [4]उत्तानेष्वित्युत्-तानेषु । कपालेषु । अधीति । श्रयति । अयातयामत्वायेत्ययातयाम-त्वाय । त्रयः । पुरोडाशाः । भवन्ति । त्रयः । इमे । लोकाः ।

---

श्रित्य परितपनान्तं कृत्वा तस्मिन्नुत्तरं ततो ज्यायांसमधिश्रयति । पुनस्तदन्तं कृत्वा तस्मिन्नुत्तरं ततो ज्यायांसमधिश्रयतीति ॥

[3]यथेति ॥ प्रत्तां प्रदातुं क्षीरमारब्धाम् । आदिकर्मणि निष्ठा । यथा वत्ससंसर्गेण बृंहितोधोभारा दुहे दुग्धे । 'लोपस्त आत्मनेपदेषु' इति तलोपः । एवमेवेमान् लोकान् अनेन त्रिधातुना वत्सस्थानीयेन प्रत्तां कामं स्वाभिमतमन्नाद्यं दुग्धे यजमानः ॥

[4]उत्तानेष्विति ॥ गतम् । यातयामत्वं गतरसत्वम् । त्रय इति । पुरोडाशात्रित्वेन लोकत्रयाप्तिः । उत्तरउत्तर इति । लोकानामुत्तरोत्तरज्यायस्त्वात् पुरोडाशानामप्युत्तरोत्तरज्यायस्त्वं समृद्ध्यै भवति । सदृशयोगात्समृद्धिः ॥

त्रयं इमे लोका एषां लोकाना-
माप्त्या उत्तरउत्तरो ज्यायान्भवत्ये-
वमिव हीमे लोकास्समृद्ध्यै सर्वे-
षामभिगमयन्नव द्यत्यछंम्बट्कारं व्य-

एषाम् । लोकानाम् । आप्त्यै । उत्तरउत्तर इत्युत्त-
रः–उत्तरः । ज्यायान् । भवति । एवम् । इव ।
हि । इमे । लोकाः । समृद्ध्या इति सं–ऋद्ध्यै । [5]सर्वेषाम् । अभिगमयन्नित्यभि–गमयन् । अवेति । द्यति । अछंम्बट्कारमित्यछंम्बट्–कारम् । [6]व्य-

[5]सर्वेषामिति । सर्वेषां पुरोडाशानां अभिगमयन् पार्श्वे गमनं कुर्वन् अवद्यति । यत्र प्रथमस्यावद्यति तत्पार्श्वे द्वितीयस्यापि, तत्पार्श्वे तृतीयस्य । एतदुक्तं भवति—दक्षिणार्धात्प्रथमां देवतां यजेत्, मध्याद्द्वितीयां, उत्तरार्धात्तृतीयामिति । अछम्बट्कारं अनार्तत्वं, (य) एकस्मिन् भागे त्रयाणामवदाने त्रयमप्यार्तं स्यात् ॥

[6]व्यत्यासमिति । व्यत्यासो विनिमयः । व्यत्यासं व्यत्यस्य । णमुलि प्रत्ययात्पूर्वस्योदात्तत्वम् । प्राच्यां दिशि 'त्वमिन्द्र'* इत्यादयस्तिस्र ऋचः । तत्र प्रथमामनूच्य मध्यमया यजेत् प्रथमे, मध्यमामनूच्य उत्तमया यजेत् द्वितीये, उत्तमामनूच्य प्रथमया यजेत् तृतीये, इति । एवं सर्वा याज्याः पुरोनुवाक्याश्च भवन्ति । तद्यथा—'इन्द्राय राज्ञेनुब्रूहि' इत्युक्ते प्राच्यां दिशि

* सं. २–४–१४.

त्यासमन्वाहानिर्दाहाय ॥ २८ ॥
देवासुरास्संयत्ता आसन्तान्देवानसु-
रा अजयन्ते देवाः पराजिग्याना

त्यासमिति वि–अत्यासम् । अन्विति । आह । अनिर्दाहायेत्यनिः–दाहाय ॥ २८ ॥

पुरोडाशं त्वयुष्षड्विꣳशतिश्च ॥ ६ ॥

[1]देवासुरा इति देव–असुराः । संयत्ता इति सं–यत्ताः । आसन् । तान् । देवान् । असुराः । अजयन् । ते । देवाः । पराजिग्ग्याना इति परा–

'त्वमिन्द्र'* इत्यन्वाह पुरोनुवाक्याम्, 'इन्द्रो जयाति न परो जयातै'* इति यजति । 'इन्द्रायाधिराजाय' इत्युक्ते 'इन्द्रो जयाति न परो जयातै' इत्यन्वाह पुरोनुवाक्याम्, 'अस्ये देव प्रिरिरिचे'* इति यजति । 'इन्द्राय स्वराज्ञेनुब्रूहि' इत्युक्ते 'अस्ये देव'* इति पुरोनुवाक्यामन्वाह, प्राच्यां दिशि 'त्वमिन्द्र'* इति यजति । एवं क्रियमाणमनिर्दाहाय भवति । इतरथा हवींषि निर्दग्धानि विनाशितानि स्युः ॥

इति द्वितीये तृतीये षष्ठोनुवाकः.

---

[1] देवासुरा इत्यादि ॥ पराजिग्यानाः पराजयं प्राप्तवन्तः ।

* सं. २–४–१४.

असुराणां वैश्यमुपायन्तेभ्य इन्द्रियं
वीर्यमपाक्रामत्तदिन्द्रोऽचायत्तदन्वपा-
क्रामत्तदवरुधं नाशक्नोत्तदस्मादभ्य-
र्धोऽचरत्स प्रजापतिमुपाधावत्तमेतया

जिगग्यानाः । असुराणाम् । वैश्यम् । उपेति । आयन्न् । तेभ्यः । इन्द्रियम् । वीर्यम् । अपेति । अक्रामत् । तत् । इन्द्रः । अचायत् । तत् । अनु । अपेति । अक्रामत् । तत् । अवरुधमित्यव–रुधम् । न । अशक्नोत् । तत् । अस्मात् । अभ्यर्ध इत्यभि–अर्धः । अचरत् । सः । प्रजापतिमिति प्रजा–पतिम् । उपेति । अधावत् । तम् । एतया ।

---

लिटः कानच्, 'सन्लिटोर्जेः' इति कुत्वम् । वैश्यं विट्त्वं, विशः प्रजाः किङ्करादयः । गुणवचनलक्षणष्यञ् । तेभ्य इति । वैश्यं प्रतिपद्यमानेभ्यः देवेभ्यस्तेषामिन्द्रियं वीर्यं चापाक्रामत् । इन्द्रस्तच्छ्रुत्वा तदनु देवसकाशादपाक्रामत् तदवरुरुत्सया । अथ तदवरोद्धुं नाशक्नोत् । 'शकिणमुल्कमुलौ' इति कमुल् । तदस्मादिति । तत् तदा अस्मादिन्द्रियात् वीर्याच्च अभ्यर्धः अर्धमभिगतः न सर्वं, स्ववीर्येणार्धं लब्ध्वाचरदिन्द्रः । अथार्धान्तरं लिप्समानः प्रजापतिमुपाधावत् । स चैनं सर्वपृष्ठेष्ट्यायाजयत् । सर्वाणि पृष्ठानि स्तोत्राणि रथन्तरबृहद्वैरूपवैराजशाक्वररैवता-

सर्वपृष्ठयायाजयत्तयैवास्मिन्निन्द्रियं-
वीर्यमदधाद्य इंद्रियकामः ॥ २१ ॥
वीर्यकामस्स्यात्तमेतया सर्वपृष्ठया
याजयेदेता एव देवतास्स्वेन भागधे-
येनोप धावति ता एवास्मिन्निन्द्रियं
वीर्यं दधति यदिन्द्राय राथन्तराय

सर्वपृष्ठयेति सर्व–पृष्ठया । अयाजयत् । तया । एव । अस्मिन्न् । इन्द्रियम् । वीर्यम् । अदधात् । [2]यः । इन्द्रियकाम इतीन्द्रिय–कामः ॥ २१ ॥ वीर्यकाम इति वीर्य–कामः । स्यात् । तम् । एतया । सर्वपृष्ठयेति सर्व–पृष्ठया । याजयेत् । एताः । एव । देवताः । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । ताः । एव । अस्मिन्न् । इन्द्रियम् । वीर्यम् । दधति । यत् । इन्द्राय । राथन्तरायेति राथं–तराय । निर्वपतीति

ख्यानि यस्यामिन्द्रविशेषणत्वेन सन्ति सा तथोक्ता । तयेत्यादि । गतम् ॥

[2]एता इति ॥ राथन्तरादीन्द्रविशेषान् । यदित्यादि । रथन्तरस्य पृष्ठसाम्नस्सम्बन्धी राथन्तरः । उत्सादित्वादञ् । एवं बार्हतायेत्यत्रापि । वैरूपादयोऽणन्ताः ॥

निर्वपति यदेवाग्नेस्तेजस्तदेवाव रु-
न्धे यदिन्द्राय बार्हताय यदेवेन्द्रस्य
तेजस्तदेवाव रुन्धे यदिन्द्राय वैरू-
पाय यदेव सवितुस्तेजस्तत् ॥३०॥
एवाव रुन्धे यदिन्द्राय वैराजाय य-
देव धातुस्तेज स्तदेवाव रुन्धे यदि
न्द्राय शाक्वराय यदेव मरुतां तेज
स्तदेवाव रुन्धे यदिन्द्राय रैवताय

निः—वपति । [3]यत् । एव । अग्नेः । तेजः । तत् । एव । अव । इति । रुन्धे । यत् । इन्द्राय । बार्हताय। यत्। एव। इन्द्रस्य। तेजः। तत्। एव। अव। इति। रुन्धे। यत् । इन्द्राय । वैरूपाय । यत् । एव । सवितुः । तेजः । तत् ॥ ३० ॥ एव । अव। इति । रुन्धे । य-त् । इन्द्राय । वैराजाय । यत् । एव । धातुः । तेजः । तत् । एव । अव । इति । रुन्धे । यत् । इन्द्रा-य । शाक्वराय । यत् । एव । मरुताम् । तेजः । तत् । एव । अव । इति । रुन्धे । यत् । इन्द्राय । रैवताय । यत् । एव । बृहस्पतेः । तेजः । तत् ।

[3]यदेवाग्नेरित्यादि ॥ रथन्तरस्याग्निभक्तत्वात् । यथा ‘तमग्नि-

यदेव बृहस्पतेस्तेजस्तदेवावं रुन्ध एतावन्ति वै तेजांसि तान्येवावं रुन्ध उत्तानेषु कपालेष्वधि श्रयत्ययातयामत्वाय द्वादशकपालः पुरोडाशः ॥ ३१ ॥ भवति वैश्वदेवत्वाय समन्तं पर्यवं द्यति समन्त-

एव । अवेति । रुन्धे । एतावन्ति । वै । तेजांसि । तानि । एव । अवेति । रुन्धे । [4]उत्तानेष्वित्युत्-तानेषु । कपालेषु । अधीति । श्रयति । अयातयामत्वायेत्ययातयाम—त्वाय । [5]द्वादशकपाल इति द्वादश—कपालः । पुरोडाशः ॥ ३१ ॥ भवति । वैश्वदेवत्वायेति वैश्वदेव—त्वाय । [6]समन्तमिति सं—अन्तम् । पर्यवद्यतीति परि—अवद्यति । समन्त-

दैवतान्वसृज्यत गायत्री छन्दो रथन्तरं साम'* इति । एवं सर्वत्र द्रष्टव्यम् ॥

[4]उत्तानेष्वित्यादि ॥ व्याख्यातम् । तत्रायं प्रयोगः—इन्द्राय राथन्तराय चतुरो मुष्टीन् व्रीहीणां निरुप्य पुनरपि बार्हताद्यै एकैकस्यै देवतायै चतुरश्चतुरो मुष्टीन्निरुप्य हविष्कृता वाचं विसृज्य गार्हपत्ये द्वादशोत्तानानि कपालान्युपधायाधिश्रयतीति ॥

[5]द्वादशकपाल इति ॥ एकः पुरोडाशो द्वादशकपालः कार्यः वैश्वदेवत्वाय, द्वादशकपालस्य विश्वेदेवसम्बन्धित्वात् ॥

[6]समन्तमिति ॥ पूर्वार्धादारभ्य प्रदाक्षिणमुत्तरापवर्गं परितोवद्यति ॥

*सं. ७-१-१.

मेवेन्द्रियं वीर्यं यजमाने दधाति व्यत्यासमन्वाहानिर्दाहायाश्वं ऋषभो-

मिति सं–अन्तम् । एव । इन्द्रियम् । वीर्यम् । यजमाने । दधाति । [7]व्यत्यासमिति वि–अत्यासम् । अन्विति । आह । अनिर्दाहायेत्यनिः–दाहाय । [8]अश्वः । ऋषभः । वृष्णिः । बस्तः । सा ।

[7]व्यत्यासमिति ॥ 'त्वामिद्धि हवामहे'* इति पडृचो व्यत्यस्यान्वाह । तद्यथा—'इन्द्राय राथन्तरायानुब्रूहि' इत्युक्ते 'अभि त्वा शूर नोनुमः' इत्यनूच्य 'त्वामिद्धि हवामहे'* इति यजति । 'इन्द्राय बार्हतायानुब्रूहि' इत्युक्ते 'त्वामिद्धि हवामहे'* इति यजति । 'इन्द्राय बार्हतायानुब्रूहि' इत्युक्ते 'त्वामिद्धि हवामहे'* इत्यनूच्य 'यद्याव इन्द्र ते'* इति यजति । 'इन्द्राय वैरूपायानुब्रूहि' इत्युक्ते 'यद्याव इन्द्र'* इत्यनूच्य 'पिबा सोममिन्द्र'* इति यजति । 'इन्द्राय वैराजायानुब्रूहि' इत्युक्ते 'पिबा सोममिन्द्र'* इत्यनूच्य 'कदा चन स्तरीरसि'* इति यजति । 'इन्द्राय शाक्वरायानुब्रूहि'* इत्युक्ते 'कदा चनस्तरीरसि'* इत्यनूच्य 'रेवतीर्नस्सधमादः'* इति यजति । 'इन्द्राय रैवतायानुब्रूहि' इत्युक्ते 'रेवतीर्नस्सधमादः'* इत्यनूच्य 'अभि त्वा शूर नोनुमः'* इति यजति ॥

[8]अश्व इत्यादि ॥ अन्वाहार्यमासाद्य अश्वादीन् दक्षिणां

*सं. २-४-१४.

वृष्णिर्वस्तस्या दक्षिणा वृषत्वायै त-
यैव यजेताभिशस्यमान एताश्चेद्वा
अस्य देवता अन्नमदन्त्यदन्त्युवेवास्य
मनुष्याः ॥ ३२ ॥

दक्षिणा । वृषत्वायेति वृष—त्वाय । [1]एतया । एव । यजेत । अभिशस्यमान इत्यभि—शस्यमानः । एताः । च । इत् । वै । अस्य । देवताः । अन्नम् । अदन्ति । अदन्ति । उ । एव । अस्य । मनुष्याः ॥ ३२ ॥

इन्द्रियकामस्सवितुस्तेजस्तत्पुरोडाशो-
ष्टात्रिꣳशच्च ॥ ७ ॥

दद्यात् । वृषत्वायेति । वृषत्वं सेक्तृत्वं वीर्यवत्त्वम् । एषां दानं वृषत्वाय भवति यजमानस्य; सेक्तृत्वादेषाम् ॥

[1]अभिशस्यमान इति ॥ परिवदनारोपणं दूषणमभिशंसः । एताश्चेदिति । एता देवता अस्यान्नमदन्ति चेत् अदन्त्येवास्यान्नं मनुष्याः; अभिशस्तत्वान्मुक्तो भोज्यान्न एव भवतीति यावत् । 'उकारोऽपृक्तः प्रकृत्या वकारोन्तरेः'* इति संहितायां वकार आगमः, 'तन्वादीनां बहुलम्' इति संहितायामुवङ्† ॥

इति द्वितीये तृतीये सप्तमोनुवाकः.

---

* तै. प्रा. ९–१६.

† ख—मुत्वञ्च [मुवङ्]

रजनो वै कौणेयः क्रतुजितं जानं-
किं चक्षुर्वन्यंमयात्तस्मा एतामिष्टिं
निरंवपदग्नये भ्राजंस्वते पुरोडाशंम-
ष्टाकंपाल२ सौर्यं चरुमग्नये भ्राजं-
स्वते पुरोडाशंमष्टाकंपालं तयै-

[1]रजंनः । वै । कौणेयः । क्रतुजितमिति क्रतु—जितंम् । जानंकिम् । चक्षुर्वन्यमिति चक्षुः—वन्यंम् । अयात् । तस्मैं । एताम् । इष्टिम् । निरिति । अवपत् । अग्नयें । भ्राजंस्वते । पुरोडाशंम् । अष्टाकंपालमित्यष्टा—कपालम् । सौर्यम् । चरुम् । अग्नयें । भ्राजंस्वते । पुरोडाशंम् । अष्टाकंपालमित्यष्टा—कपालम् । तया । एव । अस्मिन् ।

---

[1]रजनो वा इत्यादि ॥ रजनो नाम कुणेरपत्यम् । 'इतश्चानिञः' इति ढक् । क्रतुजितं नाम जनकस्यापत्यं अयात्प्रापद्यत । कीदृशम्? चक्षुर्वन्यं चक्षुषो वनितारं संविभक्तारं चक्षुषः प्रदातारम् । छान्दसः कर्तरि कृत्यः । यद्वा—कूणिताक्षः कूणिर्विपन्नाक्षः; तस्यापत्यं कौणेयः । पितुरक्षिव्यापत्तिकथनं पुत्रस्य व्यापन्नाक्षित्वं द्योतयितुम् । पित्रा सरूपो हि सन् पुत्रो भवतीति । जानकिमयात् चक्षुषो लाभाय, चक्षुषो वननं संभजनं चक्षुर्वन्यं, तत् जानकिमयात् । याच्ञाकर्मा वा यातिः;

वास्मिंश्चक्षुरदधाद्यश्चक्षुष्कामस्स्या-
त्तस्मा एतामिष्टिं निर्वपेदग्नये भ्राज-
स्वते पुरोडाशमष्टाकपालꣳ सौर्यं चरु
मग्नये भ्राजस्वते पुरोडाशमष्टाकपा-
लमग्नेर्वै चक्षुषा मनुष्या वि॥३३॥पश्य-
न्ति सूर्यस्य देवा अग्निं चैव सूर्यं च स्वे

चक्षुः । अदधात् । [2]यः । चक्षुष्काम इति चक्षुः–कामः । स्यात् । तस्मै । एताम् । इष्टिम् । निरिति । वपेत् । अग्नये । भ्राजस्वते । पुरोडाशम् । अष्टाकपालमित्यष्टा–कपालम् । सौर्यम् । चरुम् । अग्नये । भ्राजस्वते । पुरोडाशम् । अष्टाकपालमित्यष्टा–कपालम् । अग्नेः । वै । चक्षुषा । मनुष्याः । वीति ॥ ३३ ॥ पश्यन्ति । सूर्यस्य । देवाः । अग्निम् । च । एव । सूर्यम् । च । स्वेन ।

चक्षुर्लाभं तमयाचतेति । चक्षुरेव वा वननीयं चक्षुर्वन्यं; तत् तमयाचतेति । भ्राजस्वान् दीप्तिमान् । उभयतः आग्नेयावष्टाकपालौ पुरोडाशौ, मध्ये सौर्यश्चरुः ॥

[2]अग्नेर्वै चक्षुषेति ॥ अग्नेर्हेतोर्यच्चक्षुः प्रवर्तते तेनेत्यर्थः ।

न भागधेयेनोप धावति तावेवास्मि-
ञ्चक्षुर्धत्तश्चक्षुष्मानेव भवति यदाग्नेयौ
भवतश्चक्षुषी एवास्मिन्तत्प्रति दधाति
यत्सौर्यो नासिकां तेनाभितस्सौर्य-
माग्नेयौ भवतस्तस्मादभितो नासि-
कां चक्षुषी तस्मान्नासिकया चक्षुषी

भागधेयेनेति भाग-धेयेन । उपेति । धावति । तौ ।
एव । अस्मिन्न् । चक्षुः । धत्तः । चक्षुष्मान् । एव।
भवति । [3]यत् । आग्नेयौ । भवतः । चक्षुषी इति ।
एव । अस्मिन्न् । तत् । प्रतीति । दधाति । यत् ।
सौर्यः । नासिकाम् । तेन । अभितः । सौर्यम् ।
आग्नेयौ । भवतः । तस्मात् । अभितः । नासि-
काम् । चक्षुषी इति । तस्मात् । नासिकया । च-

विभक्तिव्यत्यये वा अग्निना चक्षुषेति । एवं—सूर्यस्येति ॥

[3]यदाग्नेयाविति ॥ यस्मादभितः आग्नेयौ पुरोडाशौ भवतः, तस्मादाग्नेये चक्षुषी अस्मिन् यजमाने विपन्नचक्षुषि प्रतिदधाति पुनः स्थापयति । यत्सौर्यो मध्ये भवति नासिकां तेनास्मिन् प्रतिदधात्येव; नासिकया विधृते हि चक्षुषी पश्यतः । अभितस्सौर्य-मिति । अभितः उभयतः आदावन्ते च सौर्यस्य । • ‘ अभितः

विधृते समानी याज्यानुवाक्ये भव-
तस्समानꣳ हि चक्षुस्समृद्धया उदु
त्यं जातवेदसꣳ सप्त त्वा हरितो रथे

क्षुषी इति । विधृते इति वि—धृते । [4]समानी इति। याज्यानुवाक्ये इति याज्या—अनुवाक्ये । भवतः । समानम् । हि । चक्षुः । समृद्ध्या इति सं—ऋद्ध्यै । [5]उदिति । उ । त्यम् । जातवेदसमिति जात—वेदसम् । सप्त । त्वा । हरितः । रथे । चित्रम् ।

परितः’ इति द्वितीया । यस्मादेवं तस्मान्नासिकामभितश्चक्षुषी तस्मादेव चक्षुषी नासिकया विधृते ॥

[4]समानी इति । ‘समानं हि चक्षुः’ इति वचनात् चक्षुस्थानीययोराग्नेययोः समानी समान्यौ समानरूपे याज्यानुवाक्ये भवतः; ‘उदग्नेशुचयस्तव’* ‘विज्योतिषा’† इति । सौर्यस्य तु ‘उदु त्यं जातवेदसम्’‡ ‘चित्रं देवानाम्’‡ इति । ‘केवलमामक’ इति समानशब्दात् ङीष्, ‘वा च्छन्दसि’ इति पूर्वसवर्णदीर्घत्वम् ॥

[5]उदु त्यमित्यादि ॥ चतुर्धाकरणकाले सौर्यात्त्रीन्पिण्डानुद्धृत्य ‘उदु त्यम्’ इत्यादिभिर्मन्त्रैः यजमानाय प्रयच्छति । स च प्राश्नातीति गम्यते । मन्त्रत्रयस्य सौर्यत्वात् सौर्यादेवोद्धृत्य प्रय-

*सं. १-३-१४.28 †सं. १-२-१४.17
‡सं. १-४-४३.1—2

चित्रं देवानामुदगादनीकमिति पि-
ण्डान्प्र यच्छति चक्षुरेवास्मै प्रयच्छ-
ति यदेव तस्य तत् ॥ ३४ ॥
ध्रुवोसि ध्रुवोहꣳ संजातेषु भूयासं

देवानाम् । उदिति । अगात् । अनीकम् । इति ।
पिण्डान् । प्रेति । यच्छति । चक्षुः । एव । अस्मै ।
प्रेति । यच्छति । यत् । एव । तस्य । तत् ॥३४॥

विह्वष्टाविꣳशतिश्च ॥ ८ ॥

[1]ध्रुवः । असि । ध्रुवः । अहम् । सजातेष्विति
स-जातेषु । भूयासम् । धीरः । चेत्ता । वसुवि-

च्छतीति । ननु चक्षुष्कामस्य किं पिण्डैरित्याह—चक्षुरेवास्मै सनासिकमिदानीं दीयते, न पिण्डत्रयमात्रम् । किं यत्किञ्चित् चक्षुर्देहाननुगुणमेव दीयते? नेत्याह—यदेव तस्य चक्षुः तदेव दीयते, न यत्किञ्चित् ॥

इति द्वितीये तृतीयेष्टमोनुवाकः.

---

[1]अथ साङ्ग्रहिणी मिष्टिं विधास्यति । तस्यां परिधिपरिधानमन्त्राः एते—ध्रुवोसीत्याद्याः । याजमानेषु* व्याख्यातप्रायाः ।

*सं. १-५-३.[1-3]

धीरश्चेत्ता वसुविद्ध्रुवोसि ध्रुवोहꣳ संजातेषु भूयासमुग्रश्चेत्ता वसुविद्ध्रुवोसि ध्रुवोहꣳ संजातेषु भूयासमभिभूश्चेत्ता वसुविदा मंनमस्यामं-

दिति वसु-वित् । [2]ध्रुवः । असि । ध्रुवः । अहम् । सजातेष्विति स-जातेषु । भूयासम् । उग्रः । चेत्ता । वसुविदिति वसु-वित् । [3]ध्रुवः । असि । ध्रुवः । अहम् । सजातेष्विति स-जातेषु । भूयासम् । अभिभूरित्यभि-भूः । चेत्ता । वसुविदिति वसु-वित् । [4-5]आमनमित्या-मनम् । असि । आ-

ध्रुवो नित्योसि; अहमपि सजातेषु ध्रुवो भूयासम् । धीरो धारयिता चेत्ता ज्ञाता वसुवित् धनानां वा लब्धा च भूयासम् ॥

[2]अथ द्वितीयः—ध्रुवोसीत्यादि ॥ गतम्* । उग्र उद्गूर्णः† चेत्ता च वसुविच्च भूयासम् ॥

[3]अथ तृतीयः—ध्रुवोसीत्यादि ॥ गतम्* अभिभूः अभिभविता शत्रूणां छेत्ता वसुविच्च भूयासमिति ॥

[1]अथ तस्यामेव पुरस्तात् स्विष्टकृत उपहोमाः—आमनमसीत्याद्याः ॥ एताश्च तिस्रः पञ्चपदाः पङ्क्तयः । 'आमनमस्यामनस्य देवा ये सजातास्समनसः' इति प्रथमा । 'ये कुमाराः'

*स. १-६-२.[1] †क-इन्द्रान्.

नस्य देवा ये संजाताः कुमारास्स-
मनसस्तानहं कामये हृदा ते मां

मनस्येत्या-मनस्य । देवाः । ये । सजाता इति
स-जाताः । कुमाराः । समनस इति स-मनसः ।
तान् । अहम् । कामये । हृदा । ते । माम् । का-

इति द्वितीया । 'यास्स्त्रियः' इति तृतीया । तत्र 'आमनमसि' इत्यादिकं सर्वं द्वितीयेपि मन्त्रे विनियुज्यते । तृतीये तु मन्त्रलिङ्गाद्भेदात् सर्वं पुनराम्नायते । एते उपहोमाः सांग्रहिण्या एवाङ्गभूताः । आमनमिति च आमननकारणं* सांग्रहिण्याख्यं कर्मोच्यते, हूयमानं वाज्यम् । अत्र सामर्थ्यात् समस्समासे आकार आगतः । संगृहीतं मनोस्मिन्निति आमनं । छान्दसोन्त्यलोपः । यद्वा—आभिमुख्येन मननं करोतीत्यामनम् । पचाद्यच्, छान्दसं पूर्वपदप्रकृतिस्वरत्वम् । पचाद्यजन्तेन वा प्रादिसमासः । ईदृशस्यास्य संबन्धिनो हे देवाः यूयमपीदं श्रोतुमर्हन्ति यदामनं ब्रूमहे इति देवेभ्य आवेद्य पुनरप्यामनमाह—ये सजाता मया समानजन्मानः । कुमाराणां स्त्रीणां च वक्ष्यमाणत्वात् महान्तः पुंस इति गम्यते । ब्राह्मणं च भविष्यति—'एतावन्तो वै सजाता ये महान्तो ये क्षुल्लका यास्स्त्रियः'† इति । तत्र गोबलीवर्दन्यायेन प्रथमे महतां ग्रहणम् । समनसः समानमनसः संगतमनसो वा ये सजाता महान्तो मम समनसः तानहं कामये हृदा हृदयेन ; समनस एव सदा कामये । तेपि मां तादृशमेव कामयन्ताम् हृदा हृदयेन । अवधानार्थं हृदयग्रहणम् ।

*क-ख—आमनकदं. †सं. २-३-९.१

कामयन्ताꣳ हृदा तान्म आमनसः कृधि स्वाहा मनमसि ॥३५॥ आमनस्य देवायास्त्रियस्समनसस्ता अहं कामये हृदा ता मां कामयन्ताꣳ हृदा ता म आमनसः कृधि स्वाहा वैश्वदेवीꣳ साङ्ग्रहणीं निर्वपे

मयन्ताम् । हृदा । तान् । मे । आमनस इत्या—मनसः । कृधि । स्वाहा । [6]आमनमित्या—मनम् । असि ॥ ३५ ॥ आमनस्येत्या—मनस्य । देवाः । याः । स्त्रियः । समनस इति स—मनसः । ताः । अहम् । कामये । हृदा । ताः । माम् । कामयन्ताम् । हृदा । ताः । मे । आमनस इत्या—मनसः । कृधि । स्वाहा । [7]वैश्वदेवीमिति वैश्व—देवीम् । साङ्ग्रहणीमिति सां—ग्रहणीम् । निरिति । वपेत् ।

---

त्वमपि तानामनसः आगतमनसः संगृहीतमनसः कृधि कुरु । शपो लुकि ‘श्रुशृणुपृकृवृभ्यः’ इति धिभावः । स्वाहुतमिदं करोमीति ॥

[5]अथ द्वितीयः—आमनमित्यादि ॥ बाल्ययौवनयोर्मध्ये वर्तमानाः कुमाराः । समानमन्यत् स्वाहान्तम् ॥

[6]अथ तृतीयः—आमनमित्यादि ॥ सर्वं समानम् ; स्त्रीलिङ्गन्तु विशेषः ॥

[7]इदानीमिष्टिं विदधाति—वैश्वदेवीमित्यादि ॥ मनसस्संग्रहणस्य हेतुत्वेन संबन्धिनी सांग्रहणी इष्टिः । चरुरत्रश्रप्यते ॥

ग्रामकामो वैश्वदेवा वै सजाता विश्वानेव देवान्थ्स्वेन भागधेयेनोप धावति त एवास्मै सजातान्प्र यच्छन्ति ग्राम्येव भवति साङ्ग्रहणी भवति मनोग्रहणं वै सङ्ग्रहणं मन एव सजातानाम् ॥ ३६ ॥ गृह्णाति ध्रुवोसि ध्रुवोहꣳ सजातेषु भूयासमिति

ग्रामकाम इति ग्राम–कामः । वैश्वदेवा इति वैश्व–देवाः । वै । सजाता इति स–जाताः । विश्वान् । एव । देवान् । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । ते । एव । अस्मै । सजातानिति स–जातान् । प्रेति । यछन्ति । ग्रामी । एव । भवति । साङ्ग्रहणीति सां–ग्रहणी । भवति । मनोग्रहणमिति मनः–ग्रहणम् । वै । सङ्ग्रहणमिति सं–ग्रहणम् । मनः । एव । सजातानामिति स–जातानाम् ॥ ३६ ॥ गृह्णाति । [8]ध्रुवः । असि । ध्रुवः । अहम् । सजातेष्विति स–जातेषु । भूयासम् । इति । परिधीनिति परि–धीन् । प–

[8]ध्रुवोसीत्यादिना आम्नातानां मन्त्राणां विनियोगं दर्शयति—आशिषमिति ॥ ध्रुवो भूयासमित्यादिकाम् । अथो अपिच, सजातेषु

परिधीन्परि दधात्याशिषमेवैतामा
शास्तेथो एतदेव सर्वꣳ सजातेष्वधि
भवति यस्यैवं विदुष एते परिधयः
परिधीयन्त आमनमस्यामनस्य दे-
वा इति तिस्र आहुतीर्जुहोत्येताव-
न्तो वै सजाता ये महान्तो ये क्षु-

रीति । दधाति । आशिषमित्या–शिषम् । एव । एताम् । एति । शास्ते । अथो इति । एतत् । एव । सर्वम् । सजातेष्विति स–जातेषु । अधीति । भवति । यस्य । एवम् । विदुषः । एते । परिधय इति परि–धयः । परिधीयन्त इति परि–धीयन्ते । आमनमित्या–मनम् । असि । आमनस्येत्या–मनस्य । देवाः । इति । तिस्रः । आहुतीरित्या–हुतीः। जुहोति । एतावन्तः । वै । सजाता इति स–जाताः । ये । महान्तः । ये । क्षुल्लकाः । याः ।

---

मध्ये एतत्सर्वं भवति यद्भूवत्वं धीरत्वं वसुवित्त्वमित्यादि । एतत्सर्वं यथा श्रूयते तथा भवति एतत्सर्वं प्राप्नोति । भू प्राप्तौ । न ग्रामप्राप्तिमात्रमेवेति भावः । यस्यैवंविदुष एतैर्मन्त्रैरेते परिधयः परिधीयन्ते ॥

9 'आमनम्' इत्यादि स्विष्टकृतः पुरस्तात् तिस्रस्स्रुवाहुतीरुप-

ल्लुका यास्त्रियस्तानेवाव रुन्धे त
एनमवरुद्ध उप तिष्ठन्ते ॥ ३७ ॥
यन्नवमैत्तन्नवनीतमभवद्यदसर्पत्तथ्स

स्त्रियः । तान् । एव । अवेति । रुन्धे । ते । एनम् ।
अवरुद्ध इत्यव-रुद्धः । उपेति । तिष्ठन्ते ॥ ३७॥

स्वाहामनमसि सजातानाꣳ रुन्धे पञ्च च ॥ १ ॥

[1]यत् । नवम् । ऐत् । तत् । नवनीतमिति नव-नी-
तम् । अभवत् । यत् । असर्पत् । तत् । सर्पिः ।

जुहोति । क्षुल्लकाः क्षुद्राः कुमाराः । क्षुधा लान्तीति क्षुल्लकाः ।
कान्तात्कुत्सायां प्रतिषेधः [....यां प्रागिवीयः] कः ॥

तृतीये नवमोनुवाकः.

---

[1]अथ 'अग्नि वा एतस्य'* इत्यादिपञ्चहविरिष्टिर्वक्ष्यते । तस्या-
माज्यावेक्षण अनुवर्तयति—यन्नवमैदित्यादि ॥ यत् यस्मात् नव-
मैत् नवमेव लब्धं† गच्छति उद्धृतमभवत् तस्मान्नवनीतमभवत्,
नवनीतं गतम् । उद्धृतमिति । नवनीतम् । दासीभारादिर्द्रष्टव्यः ।
यद्वा—नवं नीतमस्येति बहुव्रीहिः । यस्मादसर्पत् विसृतमभवत्
तस्मात्सर्पणाद्विसर्पणात् सर्पिरभवत् । यस्मादुपरि तदाध्रियत

*सं-२-३-११.[1] †तं-भेवोपलब्धं.

परिंभवद्यदध्रियत तद्घृतमभवदश्विनोः
प्राणोऽसि तस्यं ते दत्तां ययोः प्राणो
सि स्वाहेन्द्रस्य प्राणोऽसि तस्यं ते
ददातु यस्यं प्राणोऽसि स्वाहा मित्रा

अभवत् । यत् । अध्रियत । तत् । घृतम् । अभ-
वत् । [2]अश्विनोः । प्राण इति प्र—अनः । असि ।
तस्यं । ते । दत्ताम् । ययोः । प्राण इति प्र—अनः।
असि । स्वाहा । [3]इन्द्रस्य । प्राण इति प्र—अनः ।
असि । तस्यं । ते । ददातु । यस्यं । प्राण इति
प्र—अनः । असि । स्वाहा । [4]मित्रावरुणयोरिति

तस्मादपि मृतं संहतमभवत्, तस्माद्घृतमभवत् । धृङ् अवस्थाने । छान्दसो वर्णविपर्यासः । तादृशं च त्वमसि । तव खल्वेता अवस्थाः परोक्षवन्निर्दिश्यन्ते* ॥

[2]अथोपहोमाः—'अश्विनोः' इत्यादयश्चत्वारः ॥ अश्विनोः प्राणस्त्वमसि हे यजमान, त[त्व]दधीनजीवनत्वात् । प्राणितीति प्राणः, पचाद्यच् । प्राणवायुर्वा । उपचारो वा—अश्विनोः प्राणस्थानीयस्त्वमसि यागद्वारेणोपकारकत्वात् । तस्य तादृशस्य ते तव दत्तां अश्विनौ, कम्? प्राणं, सामर्थ्यात् आयुष्कामेष्टित्वात् । कौ? अश्विनौ ययोः प्राणस्त्वमसि, अत आत्मार्थमेव तव प्राणं दत्तामिति ॥

*क—...रोक्षवन्तहंश्यते.

वरुणयोः प्राणोसि तस्य ते दत्तां
ययोः प्राणोसि स्वाहा विश्वेषां देवा
नां प्राणोसि ॥ ३८ ॥ तस्य ते दद
तु येषां प्राणोसि स्वाहा घृतस्य धा
राममृतस्य पन्थामिन्द्रेण दत्तां प्रयं-

मित्रा-वरुणयोः । प्राण इति प्र-अनः । असि । तस्य । ते । दत्ताम् । ययोः । प्राण इति प्र-अनः। असि । स्वाहा । [5]विश्वेषाम् । देवानाम् । प्राण इति प्र-अनः । असि ॥ ३८ ॥ तस्य । ते । द-दतु । येषाम् । प्राण इति प्र-अनः । असि । स्वा-हा । [6]घृतस्य । धाराम् । अमृतस्य । पन्थाम् । इन्द्रेण । दत्ताम् । प्रयतामिति प्र-यताम् । मरु-

---

[3-5]इन्द्रस्येत्यादि ॥ समानम् ॥

[6]पुनराज्यमवेक्षयति—घृतस्य धारामिति ॥ त्रिष्टुबियम्, बृहती वा ॥ हे आज्य घृतस्य क्षरितस्य विलीनस्य तव धाराम् । यद्वा—उदकधारां वृष्टिहेतुं अमृतस्य अमृतत्वस्य पन्थां यागद्वारेण प्राप्तिहेतुं इन्द्रेण ईश्वरेण दत्तां उत्पादिताम् । यद्वा—इन्द्रेण यजमानेन देवेभ्यो दत्तां प्रयतां प्रकर्षेणोत्पादितां शोधितां वा मरुद्भिः । तत्तादृक्स्वभावं त्वां विष्णुर्व्यापको यजमानो वा पर्यपश्यत् ।

तां मुरुद्भिः । तत्त्वा विष्णुः पर्यप-
श्यत्तत्त्वेडा गव्यैरयत् । पावमानेन
त्वा स्तोमेन गायत्रस्य वर्तन्योपाꣳ-
शोर्वीर्येण देवस्त्वा सवितोथ्सृजतु

द्भिरिति मरुत् भिः । तत् । त्वा । विष्णुः । परीति । अपश्यत् । तत् । त्वा । इडा । गवि । ऐरयत् । [7]पावमानेन । त्वा । स्तोमेन । गायत्रस्य । वर्तन्या । उपाꣳशोरित्युप–अꣳ–शोः । वीर्येण । देवः । त्वा । सविता । उदिति । सृजतु ।

तत्तादृशं त्वां इडा पृथिवी गवि ऐरयत् उदयादिक्रमेण ऐरयत् उदपादयत् ॥

[7]ऋत्विजः पर्याहुः—पावमानेनेत्यादि ॥ हे यजमान त्वां पावमानेन पवमाना बहिष्पवमानादयः तेषां संबन्धिना स्तोमेन स्तवनेन गायत्रस्य छन्दसः वर्तन्या मार्गेण सोमानयनमार्गेण उपांशोः ग्रहस्य वीर्येण त्वामुत्सृजत्विति देवस्सविता त्वामुत्सृजतु आमया न्निर्गमयतु । प्रत्येकान्वयाय त्वेत्यस्यानुवृत्तिः । पावमानेन स्तोमेन त्वामुत्सृजतु, गायत्रस्य वर्तन्या त्वामुत्सृजतु, उपांशोर्वीर्येण त्वामुत्सृजत्विति । जीवातवे जीवनहेतवे औषधादयो जीवनस्यार्थे जीवनप्रदायै । जीवनशब्दात् क्यच् , छन्दस्यसुगागमः, 'अ प्रत्ययात्' इत्यकारप्रत्ययः ॥

जीवातवे जीवनस्यायै बृहद्रथन्तर-
योस्त्वा स्तोमेन त्रिष्टुभो वर्तन्या
शुक्रस्य वीर्येण देवस्त्वा सवितोत्॥
॥ ३१ ॥ सृजतु जीवातवे जीवन-
स्यायां अग्नेस्त्वा मात्रया जगत्यै
वर्तन्याग्रयणस्य वीर्येण देवस्त्वा स-
वितोथ्सृजतु जीवातवे जीवनस्या-

जीवातवे । जीवनस्यायै । [8]बृहद्रथन्तरयोरिति बृ-
हत्-रथन्तरयोः । त्वा । स्तोमेन । त्रिष्टुभः । व-
र्तन्या । शुक्रस्य । वीर्येण । देवः । त्वा । सविता ।
उदिति ॥ ३१ ॥ सृजतु । जीवातवे । जीवन-
स्यायै । [9]अग्नेः । त्वा । मात्रया । जगत्यै । वर्तन्या ।
आग्रयणस्य । वीर्येण । देवः । त्वा । सविता ।
उदिति । सृजतु । जीवातवे । जीवनस्यायै ।

[8]बृहद्रथन्तरयोस्त्वेत्यादि ॥ समानम् ॥

[9]अग्नेस्त्वेत्यादि ॥ अग्निर्मीयते यया सा अग्नेर्मात्रा अग्नेरात्मा अग्नेरात्मस्थानीयमग्निष्टोमसाम यज्ञायज्ञियम् । समानमन्यत् । जगत्या इति षष्ठ्यर्थे चतुर्थी ॥

या इममग्न आयुषे वर्चसे कृधि
प्रियꣳ रेतो वरुण सोम राजन्।
मातेवास्मा अदिते शर्म यच्छ विश्वे

[10]इमम्। अग्ने। आयुषे। वर्चसे। कृधि। प्रियम्। रेतः। वरुण। सोम। राजन्। माता। इव। अस्मै। अदिते। शर्म। यच्छ। विश्वे। देवाः। जरदष्टिरिति जरत्-अष्टिः। यथा। असत्।

[10]हिरण्याद्धृतं निष्पिबन्तमनुमन्त्रयते—इममग्न इति। त्रिष्टुबेषा॥ हे अग्ने इमं घृतम्। उभयलिङ्गो घृतशब्दः। आयुषे वर्चसे बलाय चास्य कृधि कुरु। पूर्ववच्छपो लुक्, धिभावश्च। प्रियं रेतः, सर्वस्य प्रकृतिभूतत्वात् प्रियत्वम् रेतस्त्वं च। हे वरुण हे सोमलताभिमानिन्, हे राजन् चन्द्र। यद्वा—वल्लीनिवृत्त्यर्थं राजशब्देन सोमो विशेष्यते। यूयमप्यस्यायुषे कुरुत। किञ्च—हे अदिते त्वमपि अस्मै यजमानाय मातेव शर्म सुखं यच्छ देहि। हे विश्वेदेवा यूयमपीदं कर्तुमर्हथ। किम्? यथायं यजमानो जरदष्टिः जीर्णत्वेन अष्टिर्व्याप्तिर्यस्य। जराम-श्नुत इति वा जरदष्टिः। छान्दसी रूपसिद्धिः। असत् भवेत् दीर्घायुर्यथा स्यात्तथा कुरुत। यद्वा—अस्य यजमानस्य जरदष्टिः जराव्याप्तिः असत् भवेत् तथा कुरुत दीर्घायुषं कुरुत। जीर्यते-रतृन्प्रत्ययो भावे द्रष्टव्यः। अस्तेर्लेटि अडागमः॥

देवा जरदष्टिर्यथासत् । अग्निरायु-
ष्मान्त्स वनस्पतिभिरायुष्मान्तेन
त्वायुषायुष्मन्तं करोमि सोम आ-
युष्मान्त्स ओषधीभिर्यज्ञ आयु-
ष्मान्त्सदक्षिणाभिर्ब्रह्मायुष्मत्तद्ब्राह्म-
णैरायुष्म द्देवा आयुष्मन्तस्तेमृतेन
पितर आयुष्मन्तस्ते स्वधयायुष्म-

[11]अग्निः । आयुष्मान् । सः । वनस्पतिभिरिति वनस्पति-भिः । आयुष्मान् । तेन । त्वा । आयुषा । आयुष्मन्तम् । करोमि । [12]सोमः । आयुष्मान् । सः । ओषधीभिरित्योषधि-भिः । [13]यज्ञः। अयुष्मान् । सः । दक्षिणाभिः । ब्रह्म । आयुष्मत् । तत् । ब्राह्मणैः । आयुष्मत् । [15]देवाः । आयुष्मन्तः। ते । अमृतेन । [16]पितरः । आयुष्मन्तः । ते । स्वधयेति स्व-धया । आयुष्मन्तः । तेन । त्वा ।

---

[11-16]ब्रह्मा यजमानस्य हस्तं गृह्णाति—अग्निरायुष्मानिति ॥ अग्निरायुष्मान् दीर्घायुः । स वनस्पतिभिरायुष्मान् तैर्हेतुभिस्तैर्वा-सह । तेनायुषा उभयेनायुषा त्वामायुष्मन्तं करोमि दीर्घायुषं करोमि । हे यजमान सोमादिषु 'आयुष्मान्तेन' इत्याद्यनुषज्यते ।

न्तस्तेन त्वायुषायुष्मन्तं करोमि ॥४०॥
अग्निं वा एतस्य शरीरं गच्छति
सोमꣳ रसो वरुण एनं वरुणपाशे-
न गृह्णाति सरस्वतीं वागग्नाविष्णू

आयुषा । आयुष्मन्तम् । करोमि ॥ ४० ॥
विश्वेषां देवनां प्राणोसि त्रिष्टुभो वर्तन्या
शुक्रस्य वीर्येण देवस्त्वा सवितोत्सोम
आयुष्मान्पञ्च विꣳशतिश्च ॥१०॥

[1]अग्निम् । वै । एतस्य । शरीरम् । गच्छति । सोमम् । रसः । वरुणः । एनम् । वरुणपाशेनेति वरुण—पाशेन । गृह्णाति । सरस्वतीम् । वाक् । अग्नाविष्णू इत्यग्ना—विष्णू । आत्मा । यस्य । ज्यो-

सोम ओषधीभिः, यज्ञो दक्षिणाभिः, ब्रह्म ब्राह्मणैः, देवा अमृतेन, पितरस्स्वधया ॥

इति द्वितीये तृतीये दशमोनुवाकः.

---

[1]इदानीं तां पञ्चहविषमिष्टिं विदधाति—अग्निं वा इत्यादि ॥ यस्य ज्योक् नित्यमामयत्यामयः तस्य शरीरादीन्यग्न्यादीन् देवान् गच्छन्ति स्व*कारणानुप्रवेशात् कार्यरूपनाशात्कर्तरि का†र्यश-

*तं—स्वस्य स्व. †तं—शात्तत्का.

आत्मा यस्य ज्योगामयति यो ज्यो-
गामयावी स्याद्यो वा कामयेत स-
र्वमायुरियामिति तस्मा एतामि-
ष्टिनिर्वपेदाग्नेयमष्टाकपाल॰ सौम्यं
चरुं वारुणं दशकपाल॰ सारस्वतं
चरुमाग्नावैष्णवमेकादशकपालम॰
ग्नेरेवास्य शरीरं निष्क्रीणाति सो-

क् । आमयति । यः । ज्योगामयावीति ज्योक्-
आमयावी । स्यात् । यः । वा । कामयेत । सर्वम् ।
अयुः । इयाम् । इति । तस्मै । एताम् । इष्टिम् ।
निरिति । वपेत् । आग्नेयम् । अष्टाकपालमित्यष्टा-
कपालम् । सौम्यम् । चरुम् । वारुणम् । दशक-
पालमिति दश-कपालम् । सारस्वतम् । चरुम् ।
अग्नावैष्णवमित्याग्ना-वैष्णवम् । एकादशकपाल-
मित्येकादश-कपालम् । अग्नेः । एव । अस्य ।
शरीरम् । निष्क्रीणातीति निः-क्रीणाति । सो-

क्त्युपसंहारस्स्यात् । 'रुजार्थानाम्' इति यस्येति कर्मणि षष्ठी ।
यो ज्योगामयावीत्यादि ॥ गतम् ॥

[2]अग्नेरेवेत्यादि ॥ यत्रयत्र शरीरादीनि गतानि तेभ्यस्तानि निष्क्री-

मादृसम् ॥ ४१ ॥ वारुणेनैवेनं व-
रुणपाशान्मुंञ्चति सारस्वतेन वाचं
दधात्यग्निस्सर्वा देवता विष्णुर्यज्ञो
देवताभिश्चैवैनं यज्ञेनं च भिषज्य-
त्युत यदीतासुर्भवंति जीवंत्येव य-
न्नवमैत्तन्नवंनीतमभवदित्याज्यमवें-

मात् । रसम् ॥ ४१ ॥ वारुणेन । एव । एनम् ।
वरुणपाशादिति वरुण–पाशात् । मुञ्चति । सार-
स्वतेन । वाचम् । दधाति । अग्निः । सर्वाः । देव-
ताः । विष्णुः । यज्ञः । देवताभिः । च । एव ।
एनम् । यज्ञेन । च । भिषज्यति । उत । यदि ।
इतासुरितीत–असुः । भवति । जीवति । एव ।
[3]यत् । नवम् । ऐत् । तत् । नवनीतमिति नव–
नीतम् । अभवत् । इति । आज्यम् । अवेति ।

णाति हविःप्रदानेन । ततोसौ यजमानः यद्यपि गतासुर्भवति जीवत्येव, किं पुनरायुश्शेषवतामामयनिवृत्तिर्भवतीति । यद्वा— यागबलेन आमयश्च नश्यति, सर्वं चायुश्शतसंवत्सरप्रमाणं लभते ॥

[3]आज्यमवेक्षत इति ॥ अस्य मन्त्रस्यैतद्रूपमेव विनैव व्याख्यानं आज्यस्य महिमानं व्याचष्टे व्याकरोति अवस्थात्रयविवरणात् ॥

क्षते रूपमेवास्यैतन्महिमानं व्याचष्टेऽश्विनोः प्राणोऽसीत्याहाश्विनौ वै देवानाम् ॥ ४२ ॥ भिषजौ ताभ्यामेवास्मै भेषजं करोतीन्द्रस्य प्राणोऽसीत्याहेन्द्रियमेवास्मिन्नेतेन दधाति मित्रावरुणयोः प्राणोऽसीत्याह प्राणापानावेवास्मिन्नेतेन दधाति विश्वेषां देवानां प्राणोऽसीत्याह वीर्य-

ईक्षते । रूपम् । एव । अस्य । एतत् । महिमानम् । व्याचष्ट इति वि-आचष्टे । [4]अश्विनोः । प्राण इति प्र-अनः । असि । इति । आह । अश्विनौ । वै । देवानाम् ॥ ४२ ॥ भिषजौ । ताभ्याम् । एव । अस्मै । भेषजम् । करोति । इन्द्रस्य । प्राण इति प्र-अनः । असि । इति । आह । इन्द्रियम् । एव । अस्मिन्न् । एतेन । दधाति । मित्रावरुणयोरिति मित्रा-वरुणयोः । प्राण इति प्र-अनः । असि । इति । आह । प्रणापानाविति प्राण-अपानौ । एव । अस्मिन्न् । एतेन । दधाति । विश्वेषाम् । देवानाम् । प्राण इति प्र-अनः । असि । इति । आह । वीर्यम् । एव । अस्मिन्न् ।

[4]अश्विनोरित्यादि ॥ पुरस्तात्स्विष्टकृतः स्रुवाहुत्युपहोममन्त्रा एते ॥

मेवास्मिन्नेतेन दधाति घृतस्य धा-
राममृतस्य पन्थामित्याह यथायजु-
रेवैतत्पावमानेन त्वा स्तोमेनेति
॥ ४३ ॥ आह प्राणमेवास्मिन्नेतेन
दधाति बृहद्रथन्तरयोस्त्वा स्तोमेने-
त्याहौर्ज एवास्मिन्नेतेन दधात्यग्ने-
स्त्वा मात्रयेत्याहात्मानमेवास्मिन्ने-

एतेन । दधाति । [5]घृतस्य । धाराम् । अमृतस्य । पन्थाम् । इति । आह । यथायजुरिति यथा—यजुः । एव । एतत् । [6]पावमानेन । त्वा । स्तोमेन । इति ॥ ४३ ॥ आह । प्राणमिति प्र—अनम् । एव । अस्मिन्न् । एतेन । दधाति । बृहद्रथन्तरयोरितिबृहत्—रथन्तरयोः । त्वा । स्तोमेन । इति । आह । ओर्जः । एव । अस्मिन्न् । एतेन । दधाति। अग्नेः । त्वा । मात्रया । इति । आह । आत्मानम् । एव । अस्मिन्न् । एतेन । दधाति । ऋत्विजः ।

[5]घृतस्य धारामित्यादि ॥ अनेन यजमानमाज्यमवेक्षयति । यथायजुरिति । अमृतत्वप्राप्तिहेतुत्वमस्य यथा यजुर्वदति एतदेव भवति ॥

[6]पावमानेनेत्यादि ॥ ब्रह्मणो हस्तमन्वारभ्य ऋत्विजः पर्याहुरिमान् मन्त्रान् । तदेवाह—ऋत्विजः पर्याहुरिति । परित

तेन॑ दधात्यृ॒त्विज॒ः पर्या॑हु॒र्याव॑न्त
ए॒वर्त्वि॑ज॒स्त ए॑नं भिषज्यन्ति ब्रह्म॒-
णो॒ हस्त॑मन्वा॒रभ्य॒ पर्या॑हु॒रेक॒धैव य
ज॑मान॒ आयु॑र्दधाति॒ यदे॒व तस्य॒ त-
द्धिर॑ण्यात् ॥ ४४ ॥ घृ॒तं निष्पि॑ब॒-
त्यायु॒र्वै घृ॒तम॒मृत॒ꣳ॒ हिर॑ण्यम॒मृता॑दे॒-
परीति॑ । आ॒हुः । याव॑न्तः । ए॒व । ऋ॒त्विज॑ः । ते ।
ए॒न॒म् । भि॒ष॒ज्य॒न्ति॒ । ब्र॒ह्मण॑ः । हस्त॑म् । अ॒न्वा॒-
रभ्येत्य॑नु॒-आ॒रभ्य॑ । परीति॑ । आ॒हु॒ः । ए॒क॒धेत्ये॑क-
धा । ए॒व । यज॑माने । आयु॑ः । द॒धा॒ति॒ । [7]यत् ।
ए॒व । तस्य॑ । तत् । हिर॑ण्यात् ॥ ४४ ॥ घृ॒तम् ।
निरिति॑ । पि॒ब॒ति॒ । आयु॑ः । वै । घृ॒तम् । अ॒मृत॑-
म् । हिर॑ण्यम् । अ॒मृता॑त् । ए॒व । आयु॑ः । नि-

---

आसीना आहुः । ब्रह्मण इति । हस्तमन्वारभ्य परिवचना त्सर्वमस्यायुरेकधा कृत्वा अस्मिन् दधाति यदेव तस्यायुस्तदेव दधाति ॥

[7]हिरण्यादिति ॥ अयमत्र प्रयोगः—यावतीस्समा एष्यन्मन्येत तावन्मानं सौवर्णं प्रवर्तं कुण्डलमुपकल्प्य खादिरे नवे पात्रे उप-स्तीर्णाभिघारितं सह हविर्भिरन्तर्वेद्यासाद्य उपहोमान् हुत्वा संस्रा-वैः प्रवर्तमभिघार्य अग्रेणाहवनीयं पर्याहृत्य दक्षिणतो निधाय यजमानमवेक्षयति । अथायमवेक्ष्यास्माद्धिरण्यान्निष्पतत् घृतं पिब-ति । यद्वा—हिरण्यलग्नं घृतं निश्शेषं पिबति । आयुर्वा इति ।

वायुर्निष्पिबति शतमानं भवति श-
तायुः पुरुषश्शतेन्द्रिय आयुष्येवेन्द्रि
ये प्रति तिष्ठत्यथो खलु यावतीस्स
मा एष्यन्मन्येत तावन्मानꣳ स्या-
थ्समृद्ध्या इममग्न आयुषे वर्चसे

रिति । पिबति । शतमानमिति शत–मानम् । भवति । शतायुरिति शत–आयुः । पुरुषः । शते-न्द्रिय इति शत–इन्द्रियः । आयुषि । एव । इन्द्रिये । प्रतीति । तिष्ठति । अथो इति । खलु । यावतीः । समाः । एष्यन् । मन्येत । तावन्मानमिति तावत्–मानम् । स्यात् । समृद्ध्या इति सं–ऋद्ध्यै । [8]इमम् । अग्ने । आयुषे । वर्चसे ।

उभयत्रापि तद्धेतुत्वात्ताच्छब्द्यम् । शतमानमिति । शतगुञ्जाप्रमाणं प्रवर्ताकारं सुवर्णं भवति । गुञ्जफलाकारः कर्णवेष्टः । प्रवर्तस्य शतसंख्यात्वात्तत्प्रमाणायुषामस्य लाभः । अथो खल्विति पक्षान्तरं दर्शयति । यावतस्संवत्सरानेष्यन् जीवितुं मन्येत तावन्मानं कुर्यात् प्रवर्तकम् । यजमानस्य गतानि वर्षाणि शताच्छोधयित्वा शिष्टसम्मितक्रमनिर्मितं कुर्यात् । एवं हि अभिमतसङ्ख्यान्वयात् समृद्ध्यै भवति ॥

[8]इममग्न आयुष इति ॥ घृतं निष्पिबन्तमनुमन्त्रयते । जरदष्टिमेवेति । जराप्राप्तया दीर्घायुष्ट्वं लक्ष्यते ॥

कृधीत्याहायुरेवास्मिन्वर्चो दधाति विश्वे देवा जरदष्टिर्यथासदित्याह जरदष्टिमेवैनं करोत्यग्निरायुष्मानिति हस्तं गृह्णात्येते वै देवा आयुष्मन्तस्त एवास्मिन्नायुर्दधति सर्वमायुरेति ॥ ४५ ॥

कृधि । इति । आह । आयुः । एव । अस्मिन् । वर्चः । दधाति । विश्वे । देवाः । जरदष्टिरिति जरत्–अष्टिः । यथा । असत् । इति । आह । जरदष्टिमिति जरत्–अष्टिम् । एव । एनम् । करोति। [9]अग्निः । आयुष्मान् । इति । हस्तम् । गृह्णाति । एते । वै । देवाः । आयुष्मन्तः । ते । एव । अस्मिन् । आयुः । दधति । सर्वम् । आयुः । एति ॥ ११ ॥

रसं देवानाꣳ स्तोमेनेति हिरण्यादसदिति द्वाविꣳशतिश्च ॥ ११ ॥

[9]अग्निरायुष्मानिति ब्रह्मा यजमानस्य हस्तं गृह्णाति ॥

इति द्वितीये तृतीये एकादशोनुवाकः.

———

प्रजापतिर्वरुणायाश्वमनयत्स स्वां देवतामार्छत्स पर्यदीर्यत स एतं वारुणं चतुष्कपालमपश्यत्तं निरवपत्ततो वै स वरुणपाशादमुच्यत वरु-

[1]प्रजापतिरिति प्रजा–पतिः । वरुणाय । अश्वम् । अनयत् । सः । स्वाम् । देवताम् । आर्छत् । सः । परीति । अदीर्यत । सः । एतम् । वारुणम् । चतुष्कपालमिति चतुः–कपालम् । अपश्यत् । तम् । निरिति । अवपत् । ततः । वै । सः । वरुणपाशादिति वरुण–पाशात् । अमुच्यत । वरुणः । वै । एतम् । गृह्णाति । यः । अश्वम् ।

[1]प्राजापत्यो वा अश्व इति ॥ प्रजापतिरात्मदेवत्यमश्वं वरुणायानयत् अददात् । सोश्वं ददत्स्वामात्मानमश्वस्य देवतामार्छत् आर्तामकरोत्, ईशितव्यापगमात् देवतात्वहानिरेवार्तिः । ततश्च स प्रजापतिः विगळितदेवताभावः परितस्सर्वतोऽदीर्यत विपन्नोभवत् वरुणपाशैर्गृहीत इत्यर्थः । तदेवाह—वरुणो वा इत्यादि । ननु प्रतिग्रहीतुरिदमुच्यते; प्रतिगृह्णातीतिदर्शनात् । नैवम् । उपक्रमावगतदातृश्रुतिविरोधात्; दातृविषयमेवेदं विपरिणाम्यते । उक्तं चेदं न्यायविद्भिः 'अवैदिकं च [अचोदितं] कर्मभेदात्'* इत्यत्र 'सालिङ्गादार्त्विजे स्यात्'* इति । तस्मादुपक्रमोपसंहाराविरो-

*मीमां. ३–४–३६,३७

णो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेद्वरुणमेव स्वेन भागधेयेनोप धावति स एवैनं वरुणपाशान्मुञ्चति ॥ ४६ ॥ चतुष्क

प्रतिगृह्णातीति प्रति-गृह्णाति । यावतः । अश्वान् । प्रतिगृह्णीयादिति प्रति-गृह्णीयात् । तावतः । वारुणान् । चतुष्कपालानिति चतुः-कपालान् । निः । वपेत् । वरुणम् । एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः । एव । एनम् । वरुणपाशादिति वरुण-पाशात् । मुञ्चति ॥ ४६ ॥ चतुष्कपाला इति चतुः-क-

धात्मकलिङ्गबलेन प्रतिग्राहयतीत्यर्थो युज्यते । तस्माद्दाता प्रजापतिः वारुणेन चतुष्कपालेन वरुणपाशादमुच्यत । तस्मादन्योपि यावतोऽश्वान्प्रतिगृह्णीयात्प्रतिग्राहयेत् तावतो वारुणान् चतुष्कपालान्निर्वपेदिति । इदं वैदिकेऽश्वप्रतिग्रह इति वेदितव्यम् । उक्तं हि 'दोषात्त्विष्टिर्लौकिके स्यात्'* इत्यत्र 'अर्थवादो वानपवादात्तस्माद्यज्ञे प्रतीयेत'* इति । तत्रान्तर्भावितण्यर्थो गृह्णातिर्वेदितव्यः । यद्वा—ण्यन्तादेव लकारे 'बहुलमन्यत्रापि' इति णिलुक्, तत्र व्यत्ययेन श्नाप्रत्ययः । केचिदाहुः—'वारुणो वा अश्वः'†

*मीमां. ३·४·३४,३५. †ब्रा. ३·९·१६.

पाला भवन्ति चतुष्पाद्ध्यश्वस्समृ-
द्ध्या एकमतिरिक्तं निर्वपेद्यमेव प्र-
तिग्राही भवति यं वा नाध्येति त-

पलाः । भवन्ति । चतुष्पादिति चतुः–पात् । हि । अश्वः । समृद्ध्या इति सं–ऋद्ध्यै । [2]एकम् । अतिरिक्तमित्यति–रिक्तम् । निरिति । वपेत् । यम् । एव । प्रतिग्राहीति प्रति–ग्राही । भवति । यम् । वा । न । अध्येतीत्यधि–एति । तस्मात् । एव ।

इति वरुणदेवत्योऽश्वः ; स प्रजापतिना वरुणाय दीयमानो वरुणं स्वां देवतामपि आत्मीयदेवतात्वेन वर्तमानमपि प्रतिग्रहस्य दुष्टत्वात् आर्तमकरोत् । स वरुणः पर्यदीर्यत वरुणपाशेर्गृहीतो व्यापद्यत । अथ स वरुणो वारुणं चतुष्कपालं दृष्ट्वा वरुणाय निरवपत् । ततो वरुणो वरुणपाशादमुच्यत । वारकं वा पापं वरुणः । यो नाम कश्चित् वरुणाख्यो वा अश्वं प्रतिगृह्णाति वरुण एनं गृह्णाति । तस्मात् ‘यावतोऽश्वान्’ इति प्रतिग्रहीतुरेव विधीयते इति । तदिदं न्यायविरुद्धमित्यादिना नाद्रियामहे । ननु कथमेकस्यैव देवतात्वं यजमानत्वं च स्यात्? । नैष दोषः । ‘इन्द्रो वै सदृङ् देवताभिरासीत्’* इत्यत्र यथा इन्द्र आत्मार्थमैन्द्रमानुषूकमेकादशकपालं विदधाति, यथा ‘वरुणं सुषुवाणम्’† इत्यत्र वरुणो वारुणीं वशामालभते एवमिदं भविष्यति ॥

[2]एकमतिरिक्तमिति ॥ यावतः प्रतिगृह्णीयात्तेभ्योतिरिक्तं निर्व-

*सं. २–२–८. † सं. २–१–९.

स्मादेव वरुणपाशान्मुच्यते यद्यपरं
प्रतिग्राही स्याथ्सौर्यमेकंकपालमनु
निर्वपेदमुमेवादित्यमुच्चारं कुरुते
पोंवभृथमवैत्यप्सु वै वरुणस्साक्षा-

वरुणपाशादिति वरुण–पाशात् । मुच्यते । [3]य-
दि । अपरम् । प्रतिग्राहीति प्रति–ग्राही । स्यात् ।
सौर्यम् । एकंकपालमित्येकं–कपालम् । अनु ।
निरिति । वपेत् । अमुम् । एव । आदित्यम् । उ-
च्चारमित्युत्–चारम् । कुरुते । [4]अपः । अवभृथमि-
त्यव–भृथम् । अवेति । एति । अप्स्वित्यप्–सु ।
वै । वरुणः । साक्षादिति स–अक्षात् । एव । व-

---

पेत्; यथा षड्प्रतिगृह्य सप्तमं निर्वपेदिति । यमेवेति । यं प्रति-ग्रहीष्यन्भवति यं वा पूर्वप्रतिगृहीतं नाध्येति नाधिगच्छति न स्मरति वा तस्मात्सर्वस्मान्निमित्तात् उपजाताद्वरुणपाशान्मुच्यते । 'अकेनोर्भविष्यदाधमर्ण्ययोः' इति षष्ठीप्रतिषेधः ॥

[3]यद्यपरमिति ॥ अश्वप्रतिग्रही कृत्वापि वारुणीमिष्टिं यदि भूयोऽपि प्रतिग्रहीष्यन् स्यात्सौर्यमेककपालमनुनिर्वपेत् । अपरमिति क्रियाविशेषणम् । अमुमादित्यमुच्चारं उच्छ्रिताचारं - उपरि चरन्तं वा कुरुते, ततस्स एव वरुणपाशादिदोषं परिहरिष्यतीति ॥

[4]अपोवभृथकर्मार्थमवैति ॥ अपोनप्त्रीयं चरुमवभृथादेत्य पुन-र्निर्वपेत् । 'अपोनप्त्रपांनप्तृभ्यां घः' 'छ च' इति छप्र-

देव वरुणमवं यजतेपोनप्त्रीयं चरुं पुनरेत्यनिर्वपेदप्सु योनिर्वा अश्वस्स्वा मेवैनं योनिं गमयति स एनꣳ शा न्त उप तिष्ठते ॥ ४७ ॥

या वामिन्द्रावरुणा यतव्या तनूस्तये

रुणम् । अवेति । यजते । अपोनप्त्रीयमित्यपः—न-प्त्रीयम् । चरुम् । पुनः । एत्येत्या—इत्य । निरि-ति । वपेत् । अप्सुयोनिरित्यप्सु—योनिः । वै । अश्वः । स्वाम् । एव । एनम् । योनिम् । गमय-ति । सः । एनम् । शान्तः । उपेति । तिष्ठते ॥

मुञ्चति चरुꣳ सप्तदश च ॥ १२ ॥

[1]या । वाम् । इन्द्रावरुणेतीन्द्रा—वरुणा । यत-व्या । तनूः । तया । इमम् । अꣳहसः । मुञ्चत-

त्ययः । अपांनप्ता चतुर्थः अपोनप्ता । छान्दसो युगगं [सोलुक्] । अप्सुयोनिरिति । 'अपो योनियन्मतुषु सप्तम्या अलुक्' इत्यलुक् । शान्त इति । निवृत्तवरुणपाशादिदोषस्सुखहेतुरेवोपतिष्ठते मित्रव-दुपसंप्राप्नोति ॥

इति तृतीये द्वादशोनुवाकः.

---

[1]'यः पाप्मना गृहीतस्स्यात्तस्मा एतामैन्द्रावरुणीं पयस्यां

ममꣳहंसो मुञ्चतं यो वामिन्द्राव-
रुणा सहस्या रक्षस्या तेजस्या त-

म् । [2-1]या । वाम् । इन्द्रावरुणेतीन्द्रा—वरुणा ।
सहस्या । रक्षस्या । तेजस्या । तनूः । तया । इ-

निर्वपेत् '* इत्यादि कारणं वक्ष्यति । तां पुरोडाशाच्चतुर्धा कृत्वा व्यूहति—यावामिन्द्रावरुणेति चतुर्भिर्मन्त्रैः ॥ यतव्या सहस्या रक्षस्या तेजस्येति चतुर्णां विशेषः । शेषस्तुल्यः । हे इन्द्राव-रुणा इन्द्रावरुणौ । 'सुपां सुलुक्' इत्याकारः । 'देवताद्वन्द्वे च' इति पूर्वपदस्यानङ् । वां युवयोः या यतव्या तनूः शरीरं । यातूनि यातुधानाः रक्षांसि तेषां हननी रक्षोयातूनां हन्त्रीति यावत् । तया तन्वा इमं यजमानं अंहसः पापात् अमुञ्चतं शोधयतम् ॥

[2]यावामित्यादि ॥ या सहस्या तनूः सहो बलं अभिभवितृत्वं तद्वती । 'मत्वर्थे मासतन्वोः' इति यत् । समानमन्यत् ॥

[3]यावामित्यादि ॥ या रक्षस्या तनूः रक्षसां हननी । स एव यत् । ततोनुषङ्गः ॥

[4]यावामित्यादि ॥ या तेजस्या तनूः तेजस्विनी । पूर्ववन्मत्व-र्थीयो यत् । स्पष्टमन्यत् ॥

*सं. २-३-१३.[13].

नूस्तयेमम१ँहसो मुञ्चतं यो वा-
मिन्द्रावरुणावग्नौ स्रामस्तं वामेते-
नावं यजे यो वामिन्द्रावरुणा द्विपा
थ्सु पशुषु चतुष्पाथ्सु गोष्ठे गृहेष्व-

मम् । अ१ँहसः । मुञ्चतम् । [5-12]यः । वाम् । इ-
न्द्रावरुणावितीन्द्रा—वरुणौ । अग्नौ । स्रामः । तम्।
वाम् । एतेन । अवेति । यजे । यः । वाम् । इ-
न्द्रावरुणेतीन्द्रा—वरुणा । द्विपात्स्विति द्विपात्—सु ।
पशुषु । चतुष्पात्स्वितिचतुष्पात्—सु । गोष्ठ
इति गो—स्थे । गृहेषु । अप्स्वित्यप्—सु । ओषधी-

---

[5-12]अथोपहोमा अष्टौ—योवामित्यादयः ॥ अग्न्यादयो वन-स्पत्यन्ता विशेषाः । शिष्टमष्टस्वप्यनुषज्यते । स्रावयति नाशयतीति स्रामः पाप्मा येनायं गृहीतः । यो वां युवयोस्सम्बन्धिनो यजमानस्य अग्नौ स्रामः अग्न्याधारः पाप्मा तेन कृतः तं वा युवयोस्सम्बन्धिनानेन कर्मणा अवयजे नाशयामि हे इन्द्रावरुणौ । अवपूर्वो यजिर्विनाशकर्मा । 'यो द्विपात्सु पशुषु स्रामः' इति द्वितीये । द्विपादो मनुष्याः । 'सङ्ख्यासुपूर्वस्य' इति लोपस्समासान्तः, 'पादः पत्' इति पद्भावः, 'द्वित्रिभ्यां पद्दन्' इत्युत्तरपदान्तोदात्तत्वम् । 'यश्चतुष्पात्सु पशुषु स्रामः' इति तृतीये । स्वरवर्जं पूर्ववत् । गवादयः चतुष्पादः । 'यो-गोष्ठे' इति चतुर्थे । गावस्तिष्ठन्त्यस्मिन्निति 'सुपि स्थः' इति

प्स्वोषधीषु वनस्पतिषु स्त्रामस्तं वा-
मेतेनाव यज इन्द्रो वा एतस्य ॥
इन्द्रियेणाप क्रामति वरुण एनं वरु
णपाशेन गृह्णाति यः पाप्मना गृही-
तो भवति यः पाप्मना गृहीतस्स्या
त्तस्मा एतामैन्द्रावरुणीं पयस्यां नि-

षु । वनस्पतिषु । स्त्रामः । तम् । वाम् । एतेन ।
अवेति । यजे । [13]इन्द्रः । वै । एतस्य ॥ ४८ ॥
इन्द्रियेण । अपेति । क्रामति । वरुणः । एनम् ।
वरुणपाशेनेति वरुण–पाशेन । गृह्णाति । यः ।
पाप्मना । गृहीतः । भवति । यः । पाप्मना । गृ-
हीतः । स्यात् । तस्मै । एताम् । ऐन्द्रावरुणीमि-
त्यैन्द्रा–वरुणीम् । पयस्याम् । निरिति । वपेत् ।

कः । 'अम्बाम्ब' इत्यादिना षत्वम् । 'यो गृहेषु' इति पञ्चमे । 'गेहे कः' इति कः । 'योप्सु' इति षष्टे । 'ऊडिदम्' इति विभक्तेरुदात्तत्वम् । 'य ओषधीषु' इति सप्तमे । यवादयः ओषधयः । 'ओषधेश्च विभक्तौ' इति दीर्घत्वम् । 'यो वनस्पतिषु' इत्यष्टमे । पलाशादयो वनस्पतयः । वनस्पत्यादित्वात्पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् । पारस्करप्रभृतित्वात् सुट् ॥

[13]अथातः पयस्यां विदधाति ब्राह्मणम्—इन्द्रो वा एतस्येत्यादि ॥

वैपेदिन्द्रं एवास्मिन्निन्द्रियं दंधाति वरुण एनं वरुणपाशान्मुञ्चति पयस्या भवति पयो हि वा एतस्माद-पक्रामत्यथैष पाप्मना गृहीतो यत्पंयस्या भवंति पयं एवास्मिन्तया

इन्द्रः । एव । अस्मिन्न् । इन्द्रियम् । दधाति । वरुणः । एनम् । वरुणपाशादिति वरुण–पाशात्। मुञ्चति ।[14] पयस्या । भवति । पयः । हि । वै । एतस्मात् । अपक्रामतीत्यंप–क्रामति । अथ । एषः । पाप्मना । गृहीतः । यत् । पयस्या । भवंति । पयः । एव । अस्मिन्न् । तया । दधाति ।

अस्येन्द्रियेण सह इन्द्रोपक्रामति, वरुणश्चैनं वरुणपाशेन गृह्णाति, यः पाप्मना गृहीतो भवति । यस्मादेवं तस्माद्यः पाप्माना गृहीतस्स्यात् तस्मै तत्पापशमनार्थं ऐन्द्रावरुणीं पयस्यां निर्वपेत् । पयसि भवः पयस्या आमिक्षा । अत्रायं प्रयोगः—इन्द्रावरुणाभ्यां चतुरो मुष्टीन्व्रीहीणान्निरुप्य दक्षिणार्धे गार्हपत्यस्यैकादश कपालान्युपदधाति । यदैवं पुरोडाशमधिवृणक्ति तदा एतामामिक्षां गार्हपत्ये अधिश्रयति । अथैतं पुरोडाशमुपस्तीर्णाभिघारितमुद्वास्यामिक्षायां संप्रवेश्या*न्तर्वेद्यासादयतीति ॥

[14]पयस्या भवतीत्यादि ॥ गतम् ॥

---

*क. मिक्षया संपृक्तम.

दधाति पयस्यायाम् ॥ ४९ ॥ पुरो
डाशमवं दधात्यात्मन्वन्तमेवैनं करो
त्यथो आयतनवन्तमेव चतुर्धा व्यू
हति दिक्ष्वेव प्रति तिष्ठति पुनस्स-
मूहति दिग्भ्य एवास्मै भेषजं करो-

[15]पयस्यायाम् ॥ ४९ ॥ पुरोडाशम् । अवेति । दधाति । आत्मन्वन्तमित्यात्मन्न्–वन्तम् । एव । एनम् । करोति । अथो इति । आयतनवन्तमित्यायतन–वन्तम् । एव । [16]चतुर्धेति चतुः–धा । वीति । ऊहति । दिक्षु । एव । प्रतीति । तिष्ठति । [17]पुनः । समिति । ऊहति । दिग्भ्य इति दिक्–

[15]पयस्यायामिति ॥ आमिक्षायां संप्रच्छाद्य पुरोडाशमासादयति—आत्मन्वन्तमिति । आत्मवत्त्वं बलवत्त्वम् । 'अनोनुट्' 'ह्रस्वनुड्भ्याम्' इति मतुप उदात्तत्वम् । अथो अपि च आयतनवन्तं गृहवन्तमेवैनं करोति अनेन प्रच्छादनेन पयस्यायां पिधानेन ॥

[16]चतुर्धेति ॥ प्रतिदिशं पयस्यां व्यूहति पुरोडाशं चतुर्धा कृत्वा व्यूहति । एतेन दिक्षु प्रतिष्ठितो भवति ॥

[17]पुनस्समूहतीति ॥ दिग्भ्योवकृष्य समूहीकरोति । दिग्भ्य एवाकृष्यास्मै यजमानाय भेषजं पापरोगशमनं करोति ॥

ति स॒मूह्याव॑ द्यति॒ यथावि॑द्धं नि-
ष्कृ॒न्तति॑ ता॒दृगे॒व तद्यो वा॑मिन्द्राव-
रुणाव॒ग्नौ स्त्राम॒स्तं वा॑मे॒तेनाव॑ यज॒
इत्या॑ह॒ दु॒रि॑ष्ट्या ए॒वैनं॑ पाति॒ यो
वा॑मिन्द्रावरुणा द्विपाथ्सु॑ प॒शुषु॒ स्त्रा-

भ्यः । ए॒व । अ॒स्मै॒ । भे॒ष॒जम् । क॒रोति॒ । [18]स॒मू-
ह्येति॑ सं-ऊह्य॑ । अवेति॑ । द्यति॒ । यथा॑ । आवि॑-
द्ध॒मित्या-वि॒द्धम् । नि॒ष्कृ॒न्तती॑ति॑ निः-कृ॒न्तति॑ ।
ता॒दृक् । ए॒व । तत् । [19]यः । वा॒म् । इ॒न्द्रा॒व॒रु॒णा॒-
विती॑न्द्रा-व॒रु॒णौ । अ॒ग्नौ । स्त्राम॑ः । तम् । वा॒म् ।
ए॒तेन॑ । अवेति॑ । य॒जे॒ । इति॑ । आ॒ह॒ । दु॒रि॑ष्ट्या
इति॒ दुः-इ॒ष्ट्याः । ए॒व । ए॒नम् । पा॒ति॒ । [20]यः ।
वा॒म् । इ॒न्द्रा॒व॒रु॒णेती॑न्द्रा-व॒रु॒णा । द्वि॒पात्स्विति॑
द्वि॒पात्-सु॒ । प॒शुषु॑ । स्त्राम॑ः । तम् । वा॒म् । ए॒ते-

[18]समूह्येति ॥ पयस्यया सह पुरोडाशस्यावद्यति । यथेति । आविद्धं दोषेण पीडितं निष्कृन्तति कर्तनेन निष्कालितदोषं करोति तादृशीदं [दृशमिदं] समूह्यावदानम् ॥

[19]यो वामित्यादय उक्ता उपहोमाः ॥ दुरिष्ट्या इति । अग्नौ कृतं पापं दुरिष्टिरेवेति । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् ॥

[20]'यो वामिन्द्रावरुणा द्विपास्सु पशुषु स्त्रामः' इति द्वितीय-

मस्तं वामेतेनावं यज इत्याहैतावं-
तीर्वा आप ओषंधयो वनस्पतंयः
प्रजाःपशवंउपजीवनीयास्ता एवा-
स्मैं वरुणपाशान्मुंञ्चति ॥ ५० ॥

नं । अवेति । यजे । इति । आह । एतावंतीः ।
वै । आपंः । ओषंधयः । वनस्पतंयः । प्रजा इति
प्र–जाः । पशवंः । उपजीवनीया इत्युंप-जीव-
नीयाः । ताः । एव । अस्मै । वरुणपाशादिति
वरुण–पाशात् । मुञ्चति ॥ ५० ॥

एतस्यं पयस्यांयां पाति षड्विꣳशतिश्च ॥ १३ ॥

मन्त्रं दर्शयति । उपलक्षणं चैतत्तृतीयादीनाम् । एतावतीर्वा इत्यादि । प्रजायन्त इति प्रजाः । 'अन्येष्वपि दृश्यते' इति डः । आप ओषधयो वनस्पतयः पशवश्च द्विप्रकारा इत्येतावत्यः प्रजाः प्राणिनामुपजीवनीयाः । तस्मादुपजीवनत्वादेषामेव मन्त्रेषूपादानम् न सर्वादीनामिति भावः । एताश्च एतैरुपहोमैः वरुणपाशात् मुञ्चत्यस्मै यजमानाय, यथास्यापहतपाप्मान उपजीवास्स्युरिति ॥

इति तृतीये त्रयोदशोनुवाकः ॥

स प्रत्नवन्नि काव्येन्द्रं वो विश्वत-

[1]सः । प्रत्नवदिति प्रत्न-वत् । [2]नीति । काव्या । [3]इन्द्रम् । वः । विश्वतः । परीति । [4]इन्द्रम् । नरः ।

[1]अथेष्टिकाण्डे याज्याकाण्डम् । तत्र 'यो यज्ञविभ्रष्टस्स्यात्तस्मा एतामिष्टिं निर्वपेदाग्नेयमष्टाकपालमैन्द्रमेकादशकपालं सौम्यं चरुम्' *इत्येतस्यास्त्रिहविषः आग्नेयस्य पुरोनुवाक्या—स प्रत्नवदिति गायत्री॥ व्याख्यातेयं 'हिरण्यगर्भः'† इत्यत्र; इह तु प्रतीकग्रहणम् । हे अग्ने स त्वं प्रत्नवत् प्रागिव । यद्वा—पुराणो हि । नवीयसा नवतरेण द्युम्नेन यशसा संयता त्वामेव संगच्छता [ता भानुना भासनशीलेन] बृहत्ततन्थ भृशं विश्वं विस्तारयेति ॥

[2]तत्रैव याज्या—निकाव्येति त्रिष्टुप् ॥ इयमपि तत्रैव† व्याख्याता । इदं न प्रतीकग्रहणम् । काव्या कवित्वेन द्रष्टृत्वेनात्मीयेन वेधसो यजमानान् शश्वत अविच्छिन्नयागान् निकः नियमेन करोतु । नर्या नर्याणि नरेभ्यो हितानि पुरूणि बहूनि धनानि हस्ते दधानः ददानः । एवं कुर्वन्नयमग्निः रयीणां सर्वेषां सम्बन्धी रयिपतिः भवतु । विश्वान्यपि अमृतानि अमरणहेतुभूतानि सत्रा सहभूतानि हिरण्यादीनि चक्राणः सोऽस्माकं यज्ञविभ्रेषदोषं अपनयत्विति ॥

[3]अथैन्द्रस्य पुरोनुवाक्या—इन्द्रं व इति गायत्री ॥ इयमपि षष्ठान्ते‡ व्याख्याता । प्रतीकमत्र गृह्यते । हे ऋत्विग्यजमानाः वः युष्माकं जनेभ्यः पुत्रादिभ्यः युष्मभ्यमस्मभ्यं च सर्वार्थं विश्वत उपरि स्थितं इन्द्रं हवामहे आह्वायामः । यद्वा—विश्वस्मादुपरि

*सं. २-३-३. †सं-२-२-१२. ‡सं. १-६-१२[1].

स्परीन्द्रं नरः । त्वन्नस्सोम विश्व-
तो रक्षा राजन्नघायतः । न रिष्ये-

[6]त्वम् । नः । सोम । विश्वतः । रक्ष । राजन् ।
अघायत इत्यघ—यतः । न । रिष्येत् । त्वावत

आह्वायामः । अस्माकमेव केवलस्साधकः यज्ञविभ्रेषादिदोषापनयनेन स्वामी भवत्विति ॥

[4]तत्रैव याज्या—इन्द्रं नर इति त्रिष्टुप् ॥ इयमपि तत्रैव* व्याख्याता, प्रतीकग्रहणमिदम् । नरो मनुष्याः इन्द्रमेव नेमधिता सर्वेषां हविषामर्धेन धार्यं भवते आह्वयामि । कदा? यदा पार्याः परलोकाय हिताः परप्राप्तेर्वा साध्वीर्वा धियः कर्माणि ताः इन्द्रमेवापेक्षमाणा युनजते युञ्जते । तस्मात्स त्वं शूरो नृपाता नृभिस्सम्भक्ता शवसः बलस्य, नृभ्यो दाता वा । इत्थंभूतः चकानः तृप्तिशीलः गोमति व्रजे अस्मानाभज यज्ञविभ्रेषदोषापनयनेन गोमतोस्मान् कुर्विति ॥

[5]अथ सौम्यस्य पुरोनुवाक्या—त्वन्न इति गायत्री ॥ हे सोमराजन् नः अस्मान् विश्वतः विश्वस्मात् अघायतः अघं पापमस्माकमिच्छतो जनात् रक्ष । 'छन्दसि परेच्छायामपि' इति क्यच्, 'अश्वाघस्यात्' इत्यात्वम्, 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् । त्वावतः त्वत्सदृशस्य । 'युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसङ्ख्यानम्' इति वार्तिः, 'आ सर्वनाम्नः' इत्यात्वम् । त्वावतो हि सखा कश्चिदपि न रिष्येत् यज्ञविभ्रेषादिभिः हिंस्यो भवितुं नार्हति । तस्मात्तदनुरूपमस्मान्रक्ष । 'द्व्यचोतस्तिङः' इति संहितायां रक्षेत्यस्य दीर्घत्वम् ॥

*सं. १-६-१२[2].

त्वावतस्सखा । या ते धामानि दि-
वि या पृथिव्यां या पर्वतेष्वोषधीष्व-
प्सु । तेभिर्नो विश्वैस्सुमना अहेड-
न्राजन्त्सोम प्रति हव्या गृभाय ।
अग्नीषोमा सवेदसा सहूती वनतं

इति त्व-वतः । सखा । [6]या । ते । धामानि । दिवि । या । पृथिव्याम् । या । पर्वतेषु । ओषधीषु । अप्स्वित्यप्-सु । तेभिः । नः । विश्वैः । सुमना इति सु-मनाः । अहेडन्न् । राजन्न् । सोम । प्रतीति । हव्या । गृभाय । [7]अग्नीषोमेत्यग्नी-

[6]तत्रैव याज्या—या त इति त्रिष्टुप् ॥ हे सोमराजन् या यानि ते तव धामानि स्थानानि नामानि वा, जन्मानि वा, तेजांसि वा दिवि सन्ति, यानि च पृथिव्यां सन्ति, यानि च पर्वतेषु, यानि ओषधीषु, यानि वाप्सु तेभिः तैर्विश्वैर्धामभिः नामभिः सर्वात्मनास्मभ्यमुपकुर्वद्भिः, स्थानैर्वा सर्वत्र सन्निधानहेतुभिः, जन्मभिर्वा नानोपकारहेतुभिः, तेजोभिर्वा सर्वदोषक्षाळनैः अहेडन् अक्रुद्ध्यन् अस्या*नादिकः [अज्ञानादिकं] सहमानः, अपि तु सुमना सानुग्रहमना एव भूत्वा । 'सोर्मनसी' इत्युत्तरपदाद्युदात्तत्वम् । हेडृ अनादरे । अस्माकं हव्यानि प्रतिगृभाय प्रतिगृहाण । 'छन्दसि शायजपि', 'हृग्रहोर्भः' इति भत्वम् । प्रतिगृह्य चास्माकं श्रेषदोषं अपनयेति ॥

[7]'अग्नीषोमीयमेकादशकपालं निर्वपेद्यं कामो नोपनमेत्' †

*ख—आसा. †सं. २-३-३.

गिरः । सं देवत्रा बभूवथुः । युवम्
॥ ५१ ॥ एतानि दिवि रोचनान्य-
ग्निश्च सोम सक्रतू अधत्तम् । युवꣳ
सिन्धूꣳरभिशस्तेरवद्यादग्नीषोमावमु

सोमा । सवेदसेति स-वेदसा । सहूती इति स-हूती । वनतम् । गिरः । समिति । देवत्रेति देव-त्रा । बभूवथुः । युवम् ॥ ५१ ॥ एतानि । दिवि । रोचनानि । अग्निः । च । सोम । सक्रतू इति स-क्रतू । अधत्तम् । युवम् । सिन्धून् । अभिशस्तेरित्यभि-शस्तेः । अवद्यात् । अग्नीषोमा-

इत्यस्य पुरोनुवाक्या—अग्नीषोमा इति गायत्री ॥ हे अग्नीषोमा अग्नीषोमौ । पूर्ववदाकारः, 'ईदग्नेस्सोमवरुणयोः' इतीकारः, 'अग्नेः स्तुत्स्तोमसोमाः' इति षत्वम् । युवां सवेदसा सवेदसौ समानधनौ सहूती समानहूतौ समानाह्वानौ । 'समानस्य छन्दसि' इति सभावः । ईदृशा युवां वनतं भजतं अस्माकं गिरः स्तुतिवचनानि । देवत्रा देवांश्च संबभूवथुः संगतौ भवतः । प्रमाणानतिरेकस्सम्भवः । देवानामप्याराध्यत्वेन वर्तेथाम् । यद्वा—युवां सवेदसा सहूती देवत्रा देवेष्वपि देवोपकारेष्वपि संबभूवथुः संगतौ भवतः । 'देवमनुष्य' इति त्राप्रत्ययः । तौ युवां अस्माकमपि काममुपनयतमिति ॥

[६]तत्रैव याज्या—युवमेतानीति त्रिष्टुप् ॥ हे सोम त्वं च अ-

श्चतं गृभीतान् । अग्नीषोमाविमꣳ
सु मे शृणुतं वृषणा हवम् । प्रति
सूक्तानि हर्यतं भवतं दाशुषे मयः ।

वित्यग्नी–सोमौ । अमुञ्चतम् । गृभीतान् । [९]अग्नी-षोमावित्यग्नी–सोमौ । इमम् । स्विति । मे । शृणुतम् । वृषणा । हवम् । प्रतीति । सूक्तानीति सु–उक्तानि । हर्यतम् । भवतम् । दाशुषे । मयः ।

ग्निश्च युवं युवां एतानि प्रसिद्धानि दिवि स्थितानि रोचनानि दीपनशीलानि ग्रहनक्षत्रादीनि अधत्तं धारयथः । छान्दसो लङ् । यद्वा—युवमेव रोचनानि दिवि अधत्तं स्थापितवन्तौ । सक्रतू समानकर्माणौ । किञ्च—युवमेव सिन्धून् नदीः । स्यन्दनात् सिन्धवः । रुत्वानुनासिकौ उक्तौ । अभिशस्तेः पातकाद्यारोपात् पापात् अवद्यात् परिवादपापाच्च तत्स्थानीयात् कालुष्यादिदोषात् अमुञ्चतम् । गृभीतान् तेन दोषेण गृहीतानपि तान् सिन्धूनपि अमुञ्चतम् । तस्मादेवम्महानुभावौ युवामस्माकं काममुपनयतमिति ॥

[९]'अग्नीषोमीयमष्टाकपालं निर्वपेत् ब्रह्मवर्चसकामः'* इत्यस्य पुरोनुवाक्या—अग्नीषोमावित्यनुष्टुप् ॥ हे अग्नीषोमौ वृषणा कामानां वर्षितारौ । 'सुपां सुलुक्' इत्याकारः । इमं मे हवं आह्वानं सुशृणुतं सुष्ठु शृणुतं आह्वानप्रयोजनं यथावत्कुरुतमिति यावत् । 'भावेनुपसर्गस्य' इति ह्वयतेः अप् सम्प्रसारणं च । किञ्च—श्रुत्वाह्वानं अस्माकं सूक्तानि प्रतिहर्यतं मनसा प्रतिगृह्णीतम् ।

*सं. २–३–३.

आन्यं दिवो मातरिश्वा जभारामं-
थ्नादन्यं परि श्येनो अद्रेः । अग्नी-
षोमा ब्रह्मणा वावृधानोरुं यज्ञाय

10 एति । अन्यम् । दिवः । मातरिश्वा । जभार ।
अमंथ्नात् । अन्यम् । परीति । श्येनः । अद्रेः ।
अग्नीषोमेत्यग्नी-सोमा । ब्रह्मणा । वावृधाना ।

---

हर्य गतौ । तथा कृत्वा दाशुषे हविर्दत्तवते तस्मै यजमानाय मयः सुखहेतू भवतम् ॥

10 अत्रैव याज्या—आन्यं दिव इति त्रिष्टुप् ॥ उपरिष्टाल्लक्षणा त्रिष्टुप्त्वाच्च [' उपरि.... ल्लक्ष्मा ' इत्युक्तत्वाच्च ] केचिदिमां याज्यामाहुः । आचार्यस्तु इमां विहाय ' अग्नीषोमा हविषः ' इत्युत्तरां याज्यां दर्शितवान् । तत्र विकल्पः । अन्यमेकं युवयोर्मध्ये अग्निं दिवः आदित्यात् मातरिश्वा वायुः प्राणवृत्तिरूपः आजभार आजहार आनीतवान्, यथा—' आदूतो अग्निमभरद्विवस्वतो वैश्वानरं मातरिश्वा परावतः '* इति । अन्यमेकं सोमं श्येनो गायत्री श्येनो भूत्वा अद्रेः उच्छ्रितात् स्थानात् तृतीयस्या दिवः पर्यमथ्नात् आहरत् तस्माद्धे अग्नीषोमौ एवं महानुभावौ ब्रह्मणा ऋगादिना मन्त्रेण परिबृढेन वा अनेन हविषा वावृधाना वावृधानौ वर्धमानौ । ताच्छीलिकश्चानश्, ' तुजादीनाम् ' इत्यभ्यासस्य दीर्घत्वम्, पूर्ववदात्वम् । उरुं

---

*ऋ. ६-८-४.

†ख-यज्ञपतये.

चक्रथुरु लोकम् । अग्नीषोमा ह-
विषः प्रस्थितस्य वीतम् ॥ ५२ ॥
हर्यतं वृषणा जुषेथाम् । सुशर्माणा
स्ववसा हि भूतमथा धत्तं यजमा-

उरुम् । यज्ञार्य । चक्रथुः । उ । लोकम् । [11]अग्नी-षोमेत्यग्नी–सोमा । हविषः । प्रस्थितस्येति प्र–स्थितस्य । वीतम् ॥ ५२ ॥ हर्यतम् । वृषणा । जुषेथाम् । सुशर्माणेति सु–शर्माणा । स्ववसेति सु–अवसा । हि । भूतम् । अथ । धत्तम् । यज-

विस्तीर्णं लोकं स्थानं यत्र यजमानो गच्छति तादृशं यज्ञाय यज्ञवते यजमानाय, यद्वा—यज्ञाय यज्ञफलभोगार्थं यजमानाय, लोकं चक्रथुः कुरुतम् । उ इति पादपूरणः अवधारणार्थो वा । तदर्थमस्मै ब्रह्मवर्चसं दत्तमिति ॥

[11]अथ याज्याविकल्पः—अग्नीषोमा हविष इति त्रिष्टुप् ॥ हे अग्नीषोमौ हविषः प्रस्थितस्य उपस्थितस्य प्रारब्धस्य वा वीतं खादतम् । वी गत्यादिषु, आदादिकः । हर्यतं मनसा प्रतिगृह्णीतं स्पृहयतम् । 'अदुपदेशात्' इति लसार्वधातुकानुदात्तत्वे धातुस्वरः । जुषेथां नित्यं सेवेथाम् । पूर्ववल्लसार्वधातुकानुदात्तत्वे शस्योदात्तत्वम् । हे वृषणा वर्षितारौ कामानां युवां सुशर्माणा सुशर्माणौ सुग्रहौ सुसुखौ वा स्ववसा स्ववसौ शोभनरक्षणौ । उभयत्र पूर्ववदात्वम् ।

नाय शं योः । आ प्यायस्व सं

मानाय । शम् । योः । [12]एति । प्यायस्व । [13]समि-

'सोर्मनसी' इत्युत्तरपदाद्युदात्तत्वम् । ईदृशौ युवां यजमानो भूतं भवतम् । 'बहुळं छन्दसि' इति शपो लुक्, 'हि च' इति निघाताभावः । अथानन्तरं यजमानाय धत्तं दत्तं शं शमनं रोगाणां योः यावतश्च आगामिनां भयानाम् । शाम्यतियौतिभ्यां व्यत्ययेन भावे विचि वचनव्यत्ययः । यौतेर्वा असुनि अडादेशाभावः । अपदान्तेपि पूर्ववद्रुत्वं, णिद्वद्भावाभावश्च । ब्रह्मवर्चसिनं च कुरुतमिति ॥

[12]'सोमाय वाजिने श्यामाकं चरुं निर्वपेद्यः क्लैब्यात् बिभीयात्'* इत्यस्य पुरोनुवाक्या—आप्यायस्वेति गायत्री ॥ इयमग्निकाण्डे व्याख्यास्यते यत्राम्नायते प्रकृतौ हि हीयुः ['मा नो हिंसीः'†] इत्यत्र । इह तु प्रतीकग्रहणम् । हे सोम तव प्रसादात् वृष्णियं वीर्यं विश्वतः समेतु समागच्छताम् । त्वदर्थं च मामाप्यायस्व दध्यात् [दध्यादिना] । किञ्च—वाजस्यान्नस्य सङ्गथे सङ्गमनार्थं भवेति ॥

[13]तत्रैव यज्या—सन्त इति त्रिष्टुप् ॥ इमामपि तत्रैव† व्याख्यास्यामः, इह तु प्रतीकग्रहणमस्याः । हे सोम तव प्रसादात् पयांसि वाजाः वृष्ण्यानि च मां संगच्छन्तु । अभिमातिषाहः अभिमातिः पाप्मा क्लैब्यहेतुः, तस्याभिभवितुः तव ।

*सं. २-३-३, †सं. ४-२-७.

तें । गणानां त्वा गणपतिꣳ हवा-
महे कविं कवीनामुपमश्रवस्तमम् ।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ

तिं । ते । [14]गणानाम् । त्वा । गणपतिमितिं गण—पतिम् । हवामहे । कविम् । कवीनाम् । उपमश्रवस्तममित्युपमश्रवः—तमम् । ज्येष्ठराज-मितिं ज्येष्ठ—राजम् । ब्रह्मणाम् । ब्रह्मणः । पते । एतिं । नः । शृण्वन् । ऊतिभिरित्यूति—भिः ।

किञ्च—अमृताय अमृतत्वार्थमाप्यायमानो दिवि श्रवांसि अन्नानि उत्तमानि धिष्व स्थापयेति ॥

[14]'ब्राह्मणस्पत्यमेकादशकपालं निर्वपेत् ग्रामकामः'* इत्यस्य पुरोनुवाक्या—गणानां त्वेति जगती ॥ हे ब्रह्मणः परिबृढस्य कर्मणो वा पते पालयितः । 'षष्ठ्याः पतिपुत्र' इति सत्वम्, 'सुबामन्त्रिते' इति पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायो निहन्यते । त्वां गणानां सर्वेषां सम्बन्धिनं गणपतिं ग्रामादिसङ्घातस्वामिनं हवामहे आह्वयामः । पूर्ववत्सम्प्रसारणम् । कवीनां क्रान्तदर्शनानामपि कविं क्रान्तदर्शिनम् । उपमश्रवस्तमं उपमीयते अनेनेत्युपमः, सर्वेषां श्रवसामन्नानां उपमानं यस्य श्रवः, न तु केन चिदुपमीयते प्रसिद्धमुपमानमिति, स उपमश्रवाः । 'आतश्चोपसर्गे' इत्यङ्, 'ङ्यापोस्संज्ञाच्छन्दसोः' इति ह्रस्वत्वम् । यद्वि[द्वा—श्यन्वि]करणस्य कर्मविवक्षायां 'आतश्चोपसर्गे'

*सं. २-३-३.

नंश्शृण्वन्नूतिभिस्सीद सादनम् ।
स इज्जनेन स विशा स जन्मना
स पुत्रैर्वाजं भरते धना नृभिः । दे-
वानां यः पितरमाविवासति ॥५३॥
श्रद्धामना हविषा ब्रह्मणस्पतिम् ।

सीद । सादनम् । सः । इत् । जनेन । सः । विशा । सः । जन्मना । सः । पुत्रैः । वाजम् । भरते । धना । नृभिरिति नृ–भिः । देवानाम् । यः । पितरम् । आविवासतीत्या–विवासति ॥५३ श्रद्धामना इति श्रद्धा–मनाः । हविषा । ब्रह्मणः ।

इति कः । यद्वा—श्रूयत इति श्रवः यस्य[यस्तु]सर्वदा श्रूयते । त एवो [स इवो] पमश्रवाः न कदाचिद्दृश्यते स उपमश्रवाः, श्रूयमाणोपम इति यावत् । आहिताग्नि [ताग्न्यादि] द्रष्टव्यः । अनुभवाभावार्थैव श्रूयमाणत्वोक्तिः, 'विषं भुङ्क्ष्व' इतिवदन्यपरत्वात् । सर्वानुपमश्रवसः अतिशेत इति उपमश्रवस्तमम् । ज्येष्ठराजं ज्येष्ठं प्रशस्तं राजतीति ज्येष्ठराट् । स त्वं एवं महानुभावः अस्माकं स्तुतीः शृण्वन् ऊतिभिः रक्षणैः तर्पणैर्वा हेतुभूतैः ताभिर्व्याप्रियमाणाभिरुपलक्षितः सादनं आत्मीयमासनं आसीद अधितिष्ठ । सीदन्त्यस्मिन्निति सादनं, च्छान्दसं दीर्घत्वम् । तथा ग्रामाधिपतिरिवासीदन् अस्मभ्यं ग्रामं देहीति ॥

स सुष्टुभा स ऋक्वता गणेन वलꣳ रुरोज फलिगꣳ रवेण । बृहस्पतिरुस्रिया हव्यसूदः कनिक्रदद्वावशतीरु-

पतिम् । [16]सः । सुष्टुभेति सु—स्तुभा । सः । ऋक्वता । गणेन । वलम् । रुरोज । फलिगम् । रवेण । बृहस्पतिः । उस्रियाः । हव्यसूद इति हव्य—सूदः । कनिक्रदत् । वावशतीः । उदिति ।

[15]तत्रैव याज्या—स इज्जनेनेति जगती ॥ स एव जनेन परिजनेन किङ्करादिना, स एव विशा विड्भिरुपजीविनीभिः प्रजाभिः, स एव जन्मना जनोः जन्मप्रभृति स एव पुत्रैः पुत्रपौत्रादिभिः एतैस्सर्वैस्सह वाजं भरते दधाति । धना धनानि च नृभिः अन्यैश्च बन्धुसुहृदादिभिः सह स एव दधाति । 'नृ चान्यतरस्याम्' इति विभक्तेरुदात्तत्वाभावः, 'साविकाचः' इति हि प्राप्नोति । स एव दधातीति, क इत्याह—यः श्रद्धामनाः श्रद्धायुक्तमनाः देवानां पितरं पातारं ब्रह्मणस्पतिं हविषा आविवासति परिचरति । आविवासतिः परिचरणकर्मा ॥

[16]अथ बार्हस्पत्य उपहोमः—स सुष्टुभेति ॥ त्रिष्टुबेषा । स बृहस्पतिः सुष्टुभा शोभनस्तुव[तिम]ता । स्तोभतिस्स्तुतिकर्मा । स्तौतेर्वा क्विपि वर्णव्यत्यये तुकौ भत्वम्, 'उपसर्गात्सुनोति' इत्यादिना षत्वम् । ऋक्वता स्तुतिमता, (पुरुवता ?) वा । 'झयः' इति मतुपो वत्वम्, अयस्मयादित्वेन पदत्वात्कुत्वम्, भत्वाज्जस्त्वा-

दांजत् । मरुंतो यद्धं वो दिवो या वश्शर्म । अर्यमा याति वृष-

आजत् । [17]मरुतः । यत् । ह । वः । दिवः । [18]या । वः । शर्म । [19]अर्यमा । एति । याति । वृषभः ।

भावः । ईदृशेन गणेन सहितः वलं मेघम् । वृणोतेः पचाद्यच्, कपिलकादित्वाल्लत्वम् । रुरोज भिनत्ति फलिगं स्वच्छोदकपूर्णं, बलवदुदकं वा रवेण शब्देन उपलक्षितं बलं । रवेण वा फलिगं गिरिगुहादिषु प्रतिफलवन्तम् । किञ्च—अयं बृहस्पतिः हव्यसूदः हविषो भोक्ता । कर्मणि 'कुलसूदस्थलकषाः' इत्युत्तरपदाद्युदात्तत्वम् । उस्रियाः अपः वावशतीः अत्यर्थं कामयमानाः । वशेर्यङि 'न वशः' इति सम्प्रसारणाभावः । पूर्ववदाद्युदात्तत्वम् । उदाजत् भञ्जनानन्तरं बलात् उद्गमयति । अजगतिक्षेपणयोः, छान्दसो लुङ् ॥

[17] 'एतामेव निर्वपेद्यः कामयेत ब्रह्मन् विशं विनाशयेयमिति मारुतीयाज्यानुवाक्ये कुर्यात्'* इत्यस्याः पुरोनुवाक्या—मरुतो यद्ध व इति गायत्री ॥ व्याख्याता चेयं 'वैश्वानरो नः'† इत्यत्र । इह त्वस्याः प्रतीकग्रहणम् । हे मरुतः वः युष्मान् यस्माद्वयं सुम्नायन्तः सुखमिच्छन्तः हवामहे आह्वयामः तस्मान्नः अस्मान् क्षिप्रं दिवः ओपगन्तन अस्मत्सकाशमागच्छतेति ब्रह्मणि विशं स्थापयितुमिति ॥

[18] तत्रैव याज्या—या वश्शर्मेति त्रिष्टुप् ॥ इयमपि तत्रैव‡

*सं. २-३-३. †सं. १-५-११[15]. ‡सं. १-५-११[16].

भस्तुविष्मान्दाता वसूनां पुरुहूतो अरहन्न्। सहस्राक्षो गोत्रभिद्वज्रबाहु-

तुविष्मान् । दाता । वसूनाम् । पुरुहूत इति पुरु-हूतः । अरहन्न् । सहस्राक्ष इति सहस्र-अक्षः। गोत्रभिदिति गोत्र-भित् । वज्रबाहुरिति वज्र-

व्याख्याता; प्रतीकग्रहणमिदम् । हे मरुतः युष्माकं यानि शर्माणि सुखानि त्रिधातूनि त्रिलोकस्थानानि शशमानाय युष्मान् भजमानाय दातुं सन्ति भवन्ति यानि च दाशुषे हविर्दत्तवते यजमानाय अधिकं यच्छत प्रयच्छत तानि अस्मभ्यं वियन्त विशेषेण दत्त । किञ्च—हे वृषणा कामानां वर्षितारः अस्मभ्यं सुवर्षं सुवीरं शोभनपुत्रादिकं रयिं दत्तेति ॥

19 'अर्यम्णे चरुन्निर्वपेत् स्वर्गकामः'* इत्यस्याः पुरोनुवाक्या—अर्यमायातीति त्रिष्टुप् ॥ अरीन् यमयति उपय[रमय]तीत्यर्यमा इन्द्र उच्यते, वक्ष्यमाणेभ्यो लिङ्गेभ्यः । सः आयाति आगच्छति आगच्छतु वा । वृषभः वर्षिता कामानां तुविष्मान् महाबलः दाता वसूनां धनानां पुरुहूतः बहुभिर्यजमानैराहूतः, बहुषु वा स्थानेषु आहूतः । तेन 'तृतीयाकर्मणि' इत्यस्याप्रसङ्गः । अर्हन् दानादिकं कर्तुमर्हन् । अर्हच्छब्दः पूज्यवाची । हे पूजनीय सहस्राक्षः बह्विन्द्रियः बहुकार्यकरणसमर्थेन्द्रियो वा गोत्रभृत् मेघानां पर्वतानां वा भेत्ता विदारयिता वज्रबाहुः वज्रपाणिः । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः' इति परानिपातः । ईदृशो देवः अस्मासु द्रविणं स्वर्गाख्यं धनं ददातु ॥

*सं. २-३-४.

रस्मासु देवो द्रविणं दधातु । ये
तेर्यमन्बहवो देवयानाः पन्थानः ॥
॥ ५४ ॥ राजन्दिव आचरन्ति ।
तेभिर्नो देव महि शर्म यच्छ शं न
एधि द्विपदे शं चतुष्पदे। बुध्नादग्र-
बाहुः । अस्मासु । देवः । द्रविणम् । दधातु ।[20] ये ।
ते । अर्यमन्न् । बहवः । देवयाना इति देव-यानाः।
पन्थानः ॥ ५४ ॥ राजन्न् । दिवः । आचरन्तीत्या-चरन्ति । तेभिः । नः । देव । महि । शर्म ।
यच्छ । शम् । नः । एधि । द्विपद इति द्वि-पदे ।
शम् । चतुष्पद इति चतुः-पदे । [21]बुध्नात् । अग्र-

---

[20]तत्रैव याज्या—ये तेर्यमन्निति त्रिष्टुप् ॥ हे अर्यमन राजन् दीप्यमान ते तव ये बहवः देवयानाः देवा यैर्गच्छन्ति देवान्वा यैर्गच्छन्ति तादृशाः दिवः द्युलोकात् आचरन्ति आभिमुख्येन यावत्कर्मस्थानं आतन्यन्ते तेभिः तैः पथिभिः नः अस्मभ्यं हे देव देवनादिमन् महि महत् शर्म सुखं यच्छ देहि । किञ्च—नः अस्माकं द्विपदे चतुष्पदे च शं एधि सुखहेतुर्भव ; तादृशमार्गगम्यस्वर्गहेतुर्भवेति यावत् । स्वरसमासान्तावुक्तौ ॥

[21]'यो राजन्य आनुजावरस्स्यात्तस्मा एतमैन्द्रमानुषूकमेकादशकपालं निर्वपेत्....बुध्नवती अग्रवती याज्यानुवाक्ये भवतः'* इत्यस्याः

---

*सं. २-३-४.

मङ्गिरोभिर्गृणानो वि पर्वतस्य दृꣳहितान्यैरत्। रुजद्रोधाꣳसि कृत्रिमाण्येषाꣳ सोमस्य ता मद इन्द्रश्चकार।

म् । अङ्गिरोभिरित्यङ्गिरः–भिः । गृणानः । वीति । पर्वतस्य । दृꣳहितानि । ऐरत् । रुजत् । रोधाꣳसि । कृत्रिमाणि । एषाम् । सोमस्य । ता । मदे ।

पुरोनुवाक्या—बुध्नादग्रमङ्गिरोभिरिति त्रिष्टुप् ॥ बुध्नात् मूलादारभ्य यावदग्रं उपक्रमादारभ्य यावत्समाप्ति उग्रावदानि(?) गृणानः गृणानैस्स्तुवद्भिरङ्गिरोभिरित्थंभूतः । 'सुपां सुलुक्' इति तृतीयाया (एकवचनस्य) स्वादेशः । यद्वा—व्यत्ययेन कर्मणि कर्तृप्रत्ययः। अङ्गिरोभिः स्तूयमानः पर्वतस्य मेघस्य दृंहितानि स्तम्भितानि रोधांसि उदकस्य रोधनानि द्वारपिधानानि रुजत् भिनत् प्रथमं ततो व्यैरत् विविधं प्रेरयति विश्लेषयति यथोदकं पतति । यद्वा—उदकमेव व्यैरत् विकिरति । 'बहुलं संज्ञाच्छन्दसोः' इति णिलुक् । कीदृशानि रोधांसि? कृत्रिमाणि कृत्रिमाण्येव आत्मकृतानीव अ*यत्नेन भिनत्ति एषां मेघानां सम्बन्धीनि । पर्वतस्येति वचनस्य तृतीये [स्येति बहुवचनस्य व्यत्ययेनै] कवचनम् । इत्येवंविधानि यानि कर्माणि तानि सर्वाण्यपि सोमस्य मदे सोमपाननिमित्ते मदे सति इन्द्रश्चकार करोति । एवंमहानुभाव इन्द्र इमं राजन्यं समानानामग्रं परिणयत्विति ॥

*क.—कृतेन प्र.

बुध्नादग्रेण वि मिमाय मानैर्वज्रेण खान्यतृणन्नदीनाम् । वृथासृजत्पथिभिर्दीर्घयाथैस्सोमस्य ता मद इन्द्रश्चकार ॥ ५५ ॥ प्र यो जज्ञे

इन्द्रः । चकार । [22]बुध्नात् । अग्रेण । वीति । मिमाय । मानैः । वज्रेण । खानि । अतृणत् । नदीनाम् । वृथा । असृजत् । पथिभिरिति पथि-भिः । दीर्घयाथैरिति दीर्घ-याथैः । सोमस्य । ता । मदे । इन्द्रः । चकार ॥ ५५ ॥ [23]प्रेति । यः । जज्ञे । वि-

[22]तत्रैव याज्या—बुध्नादग्रेण विमिमायेति त्रिष्टुप् ॥ मूलादारभ्य अग्रेण सह यावदग्रं मानैर्मानयित्रीभिः विमिमाय विविधं परिच्छिनत्ति मेघान् । अथ तथा विमितेषु मेघेषु नदीनामपां, नदनान्नद्यः, खानि द्वाराणि वज्रेण अतृणत् भिनत्ति विहि [विमि] तानि विदारयति । उ तृ दिर् हिंसायां, रौधादिकः । यद्वा—नदीनामिति चतुर्थ्यर्थे षष्ठी, नदीभ्यः ; नद्यो यथा प्रवहेयुरित्येवमर्थमभिनत् भिनत्ति द्वाराणि ; सामथर्यादुदकस्येति लभ्यते । ततः वृथा भित्त्वा तथा क्रीडन्निव असृजन्निव [....सृजत्] नदीः प्रवर्तयति पथिभिः दीर्घयाथैः चिरप्रवृत्तैः । तादृशाविधानि कर्माणि सोमस्य मदे सतीन्द्रश्चकोराति । गतम् ॥

[23]अथोपहोमादिष्वन्यत्र विनियोगा द्रष्टव्याः—प्र यो जज्ञे इति त्रिष्टुप् ॥ वक्ष्यमाण एव बार्हस्पत्यः । आचार्येण तु त्यक्त्वेमा-

विद्वाꣳ अस्य बन्धुं विश्वानि देवो जनिमा विवक्ति । ब्रह्म ब्रह्मण उज्जभार मध्यान्नीचादुच्चा स्वधयाभि

द्वान् । अस्य । बन्धुम् । विश्वानि । देवः । जनिमा । विवक्ति । ब्रह्म । ब्रह्मणः । उदिति । जभार । मध्यात् । नीचा । उच्चा । स्वधयेति स्व-धया । अभि । प्रेति ।

मुत्तरेण[....त्तरे] बार्हस्पत्ये विनियुक्ते । देवो विद्वान् आत्माधिकारज्ञः सर्वज्ञो वा अस्य मेत्रस्य बन्धुं बन्धनं यात्रायां बध्यते मेत्रेन वाऽयं बध्यते । तद्विद्वान् यो बन्धनमस्य जज्ञे जानाति । कथं ज्ञायते बन्धनमस्यायं जानातीति? तत्राह—विश्वानि जनिमा जन्मानि अयं हि देवो अस्य विवक्ति ब्रूते परेभ्यः कथयति तं जनमयं जानातीति जानीमः । वचेः 'बहुलं छन्दसि' इति शपश्लुः, अभ्यासस्य दीर्घ[सस्ये]त्वम् । एवमुत्पादितं ब्रह्म परिबृढं उदकं ब्रह्मणः परिबृढायाः पृथिव्याः उज्जहार उद्धरति । मध्यात् मध्यप्रदेशात् नीचा नीचप्रदेशात् । पञ्चम्येकवचनस्य 'सुपां सुलुक्' इत्याजादेशः । सांहितिको दकारोपजनश्छान्दसः । उक्तं च प्रातिशाख्ये—'नीचापूर्वो दकार उच्चापरः'* इति । उच्चा उच्चात् प्रदेशात् । पूर्ववदाजादेशः । एवं सर्वस्य उद्धृतं उदकं स्वधया अन्नेन सह अभिप्रतस्थौ आदित्ये अभिप्रतितिष्ठतु आभिमुख्येन प्रकृष्टं तिष्ठतु । स्वधया वा हेतुभूतया । यद्वा—स्वधया हविषा सह स्थितिहेतुना आदित्ये उदकं तिष्ठत्विति

* तै. प्रा—५-८.

प्र तंस्थौ । महान्मही अंस्तभायद्वि
जातो द्याᳫ सद्म पार्थिवं च रजंः ।
स बुध्नादांष्ट जनुषाभ्यग्रं बृहस्पतिर्दे-

तस्थौ । [24]महान् । मही इति । अस्तभायत् ।
वीति । जातः । द्याम् । सद्मं । पार्थिवम् । च ।
रजंः । सः । बुध्नात् । आष्ट । जनुषा । अभीति ।
अग्रंम् । बृहस्पतिः । देवता । यस्यं । सम्राडिति

यावत् । पक्वमितिते [क्लृमादित्ये] ततोन्नमुत्पद्यते, सोस्माकमभिमतं सम्पादयतु बृहस्पतिरिति ॥

[24]'यो ब्राह्मण आनुजावरस्स्यात्तस्मा एतं बार्हस्पत्यमनुपृक्तं चरुं निर्वपेत् बुध्नवती अग्रवती याज्यानुवाक्ये भवतः '* इत्यस्याः पुरोनुवाक्या—महान्महीति त्रिष्टुप् ॥ महान् बृहस्पतिः मही महत्यौ पृथिवीमन्तरिक्षं च व्यस्तभायत् विविधमस्तम्भयत् । जातः जातमात्र एव द्यां द्युलोकं व्यस्तम्भयत् इत्येव । सद्म सदनं स्थानमुदकस्य मध्यं मुख्यं तत्र स्थितं पार्थिवं च रजः उदकं व्यस्तम्भयत् । स महानुभावो बृहस्पतिर्बुध्नात् मूलादारभ्य अभ्यग्रं यावदग्रं आष्ट व्याप्नोतु । जनुषा जन्मनैव अयत्नेनैव तेजस्विनं करोतु । कं ? यस्यायं देवता ईश्वरः सम्राट् सङ्गतदीप्तिः तं यजमानं तेजसा व्याप्नोतु यस्यायं देवता बृहस्पतिः । यत्सर्वमेवमयं व्याप्तवान् तस्मान्महानुभावोयमस्माकमानुजावरत्वं निवर्त्य समाना-

*सं. २-३-४.

वता यस्य सम्राट् । बुध्नाद्यो अग्रमभ्यत्योजसा बृहस्पतिमा विवासन्ति देवाः । भिनद्वलं वि पुरो दर्द-

सं-राट् । [25]बुध्नात् । यः । अग्रम् । अभ्यर्तीत्यभि-अर्ति । ओजसा । बृहस्पतिम् । एति । विवासन्ति । देवाः । भिनत् । वलम् । वीति । पुरः ।

नामग्रं परिणयन्निति । अश्नोतेर्लेङि 'बहुलं छन्दसि' इति शपो लुक् ॥

[25]तत्रैव याज्या—बुध्नाद्यो अग्रमिति त्रिष्टुप् ॥ बुध्नादारभ्य यावदग्रं योयमोजसा बलेन अभ्यर्ति आभिमुख्येन प्राप्नोति इदं विश्वमात्मीयेन तेजसा व्याप्नोति, यद्वा—यजमानं वा आत्मीयम् । तादृशं बृहस्पतिं देवा अपि आविवासन्ति परिचरन्ति, ऋत्विजो वा । स च एवं देवैः परिचर्यमाणो वलं मेघं भिनत् भिनत्ति वृष्ट्यर्थम् । पुरः असुरनगराणि च विदर्दरीति अत्यर्थं विदारयति । दृ विदारणे, यङ्लुकि 'रुग्रिकौ च लुकि' इति रुक्, 'यङो वा' इति ईडागमः । कनिक्रदत् अत्यर्थं शब्दं कुर्वन् अत्यर्थं क्रन्दन् । दाधर्त्यादौ निपात्यते । ततस्सुवरादित्यं अपश्च जिगाय जयति । आदित्यमदाकृष्य मध्यमस्थाने उदकं वृष्ट्युन्मुखं प्रवर्तयति पर्जन्यात्मना । छान्दसे लिटि 'सन् लिटोर्जेः'

रीति कनिक्रदथ्सुवरपो जिगाय ॥५६॥

दर्दरीति । कनिक्रदत् । सुवः । अपः । जिगाय ॥५६

युवं वीतमाविवासति पन्थानो दीर्घयाथैस्सोमस्य ता मद इन्द्रश्चकार देवा नवं च ॥ १४ ॥

आदित्येभ्यो देवा वै मृत्योर्देवा वै सत्रमर्यम्णे प्रजापं तेस्त्रयस्त्रिंशत्प्रजापतिर्देवेभ्योन्नाद्यं देवासुरास्तान्त्रजनो ध्रुवोसि यन्नवमैदग्निं वै प्रजापतिर्वरुणाय या वामिन्द्रावरुणा स प्रत्नवच्चतुर्दश ॥

आदित्येभ्यस्त्वष्टुरस्मै दानकामा एवाव रुन्धेग्निं वै स प्रत्नवथ्षट्पञ्चाशत् ॥

आदित्येभ्यस्सुवरपो जिगाय ॥

॥ हरिः ओम् ॥

---

इति जयतेः कुत्वम् । एवम्महानुभावोयं अस्मदीयं यजमानमानुजावरत्वान्मुक्त्वा समानानामग्रं परिणयत्विति ॥

इति श्रीभट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये द्वितीये काण्डे तृतीये प्रश्ने चतुर्दशोनुवाकः.

॥ प्रपाठकस्सम्पूर्णः ॥

देवा मनुष्याः पितरस्तेऽन्यत आ-
सन्नसुरा रक्षाꣳसि पिशाचास्तेऽन्यत-
स्तेषां देवानामुत यदल्पं लोहित-
मकुर्वन् तद्रक्षाꣳसि रात्रीभिरसु-
भ्नन्तांथ्सुब्धान्मृतानभि व्यौच्छत्

[1]हरिः ओम् ॥ देवाः । मनुष्याः । पितरः । ते । अन्यतः । आसन् । असुराः । रक्षाꣳसि । पिशाचाः । ते । अन्यतः । तेषाम् । देवानाम् । उत । यत् । अल्पम् । लोहितम् । अकुर्वन् । तत् । रक्षाꣳसि । रात्रीभिरिति रात्रि—भिः । असुभ्नन् । तान् । सुब्धान् । मृतान् । अभि । वीति । औ-

---

## अथ चतुर्थप्रपाठकः.

[1]देवा मनुष्या इत्यादि ॥ अन्यतः एकस्मिन् पक्षे देवादयोऽभवन् । असुरादयोऽप्येकस्मिन् । 'नपुंसकमनपुंसकेन' इत्येतद्व्यत्ययेन न प्रवर्तते । अथ तेषां देवानां शरीरेषु असुरादयः यदल्पमपि लोहितमकुर्वन् व्रणमुदपादयन् तत् असुरपक्षपातीनि रक्षांसि रात्रीभिरसुभ्नन् रात्रिष्वागम्य धर्षितमकुर्वन्, येन सुम्भनेन ते मृतास्स्युः । ततस्तान् सुब्धान् विव्रणान् तेनैव हेतुना मृतान् अभिव्यौच्छत् रात्रिरुपरताऽभवत्; रात्र्यवसाने मृतानपश्यन्निति यावत्, प्राणाद्युत्क्षोभस्य रक्षोहेतुत्वात् ॥

देवा अविदुर्यो वै नोयं म्रियते
रक्षाꣳसि वा इमं घ्नन्तीति तेरक्षाꣳ-
स्युपामन्त्रयन्त तान्यंब्रुवन्वरं वृणा-
महै यत् ॥ १ ॥ असुरान्जयाम
तन्नस्सहासदिति ततो वै देवा
असुरानजयन्तेसुरान्जित्वा रक्षाꣳ-
स्यपानुदन्त तानि रक्षाꣳस्य-

च्छत् । ते । [2]देवाः । अविदुः । यः । वै । नः । अ-
यम् । म्रियते । रक्षाꣳसि । वै । इमम् । घ्नन्ति ।
इति । ते । रक्षाꣳसि । उपेति । अमन्त्रयन्त ।
तानि । अब्रुवन् । वरम् । वृणामहै । यत् ॥ १ ॥
असुरान् । जयाम । तत् । नः । सह । असत् । इति ।
ततः । वै । देवाः । असुरान् । अजयन्न् । ते ।
असुरान् । जित्वा । रक्षाꣳसि । अपेति । अनुद-
न्त । तानि । रक्षाꣳसि । अनृतम् । अकर्त ।
इति । समन्तमिति सं—अन्तम् । देवान् । परीति ।

---

[2]ते देवा इत्यादि ॥ गतम् । तन्नस्सहेति । अस्मत्पक्षे यु-
ष्माभिर्वर्तितव्यमिति । ततो रक्षोभिस्सहायैः देवाः असुरानजयन् ।
जयानन्तरं रक्षांसि अपानुदन्त ॥

[3]अथ देवैरपनुन्नानि रक्षांसि देवान् समन्तं पर्यविशन् परीत्य

नृतमकर्तेति समन्तं देवान्पर्यविशन्ते
देवा अग्नावनाथन्त तेऽग्नये प्रव-
ते पुरोडाशमष्टाकपालं निरवपन्नग्नये
विबाधवतेऽग्नये प्रतीकवते यदग्नये

अविशन् । [4]ते । देवाः । अग्नौ । अनाथन्त । ते । अग्नये । प्रवत इति प्र—वते । पुरोडाशम् । अष्टाकपालमित्यष्टा—कपालम् । निरिति । अवपन् । अग्नये । विबाधवत इति विबाध—वते । अग्नये । प्रतीकवत इति प्रतीक—वते । यत् । अग्नये । प्रव-

देवानां शरीरादिष्वनुप्रविश्याबाधन्त । किं वदन्तीत्याह—अनृतमसत्यं अकर्त कृतवन्तो यूयमिति अन्याय्यं ख्यापयन्ति । निरुद्ध्येव स्थिता[नि] इति वा ॥

[4]अथैवं तैरभिभूयमाना देवा अग्नावनाथन्त; ऐश्वर्यमारोपयन् अग्निं नाथयन्ति स्मेति यावत् । यद्वा—अग्नौ याचितृत्वेनावर्तन्त । नाथृ नाधृ याच्ञोपतापैश्वर्याशीष्षु । त्वया वयं रक्ष्या इति । तत एतां त्रिहविष्कामिष्टिमग्नये निरवपन् देवाः । प्रवते । प्रवत्, 'उपसर्गाच्छन्दसि' इति वतिः । विश्लेष्य बाधो विबाधः, तद्वान् तत्समर्थः । प्रतिकूला वृत्तिः* तद्वान् प्रतीकवान् ॥

*घ—प्रतीकं व्यावृत्तिः.

प्रवते निरवपन् यान्येव पुरस्ताद्र-
क्षाꣳसि ॥ २ ॥ आसन्तानि तेन
प्राणुदन्त यदग्नये विबाधवते यान्ये-
वाभितो रक्षाꣳस्यासन्तानि तेन व्य-
बाधन्त यदग्नये प्रतीकवते यान्येव
पश्चाद्रक्षाꣳस्यासन्तानि तेनापानुद-

त इति प्र—वते । निरवपन्निति निः—अवपन् ।
यानि । एव । [5]पुरस्तात् । रक्षाꣳसि ॥२॥ आसन् ।
तानि । तेन । प्रेति । अनुदन्त । यत् । अग्नये ।
विबाधवत इति विबाध—वते । यानि । एव ।
अभितः । रक्षाꣳसि । आसन् । तानि । तेन ।
वीति । अबाधन्त । यत् । अग्नये । प्रतीकवत इति
प्रतीक—वते । यानि । एव । पश्चात् । रक्षाꣳसि ।
आसन् । तानि । तेन । अपेति । अनुदन्त । ततः ।

---

[5]पुरस्तादिति ॥ पूर्वस्यां दिशि । 'अस्ताति च' इति पुरादेशः । प्रहत[थम]त्वात्तस्याः । प्राणुदन्तेति । प्रथमतः उत्पत्तावेवानुदन् । अभित इति । दक्षिणत उत्तरतश्च । व्यबाधन्तेति । विश्लेष्यानाशयन् । पश्चादिति । अपरस्यां दिशि । 'पश्चात्' इति निपात्यते । अपानुदन्तेति । अपरस्यां दिशि अपकृष्यानाशयन् । तत इति । रक्षःपीडाया निर्मुक्ता[ः] [भू]ति-

न्त ततो देवा अभवन्परासुरा यो-
भ्रातृव्यवांथ्स्याथ्स स्पर्धमान एत-
येष्ट्या यजेताग्नये प्रवते पुरोडाश-
मष्टाकपालं निर्वपेदग्नये विबाधव-
ते ॥ ३ ॥ अग्नये प्रतीकवते यदग्न-
ये प्रवते निर्वपति य एवास्माच्छ्रे-

देवाः। अभवन्। परेति । असुराः । [6]यः। भ्रातृव्य-वानिति भ्रातृव्य-वान् । स्यात् । सः । स्पर्ध-मानः । एतया । इष्ट्या । यजेत । अग्नये । प्रवत इति प्र-वते । पुरोडाशम् । अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपेत् । अग्नये । विबाधवत इति विबाध-वते ॥३॥ अग्नये । प्रतीकवत इति प्रतीक-वते । यत् । अग्नये । प्रवत इति प्र-वते । निर्वपतीति निः-वपति । यः । एव । अस्मात् । श्रेयान् । भ्रातृव्यः । तम् । तेन । प्रेति । नुदते ।

मन्तोऽभवन् असुरानजयन्नित्यर्थः । अत एवाह—पराभूता असुरा इति ॥

[6]य इत्यादि ॥ गतम् । श्रेयान् प्रशस्यतरः । तं ताव-त्प्रणुदते स्वरूपाच्च्यावयति । सदृङिति । समानं पश्यतीति

यान्भ्रातृव्यस्तं तेन प्रणुदते यदग्नये
विबाधवते य एवैनेन सदृङ्ङ् तेन
वि बाधते यदग्नये प्रतीकवते य एवा-
स्मात्पापीयान्तं तेनाप नुदते प्र
श्रेयाꣳसं भ्रातृव्यं नुदतेति सदृशं
क्रामति नैनं पापीयानाप्नोति य

यत् । अग्नये । विबाधवत इति विबाध—वते । यः ।
एव । एनेन । सदृङ्ङिति स—दृङ् । तम् । तेन ।
वीति । बाधते । यत् । अग्नये । प्रतीकवत इति
प्रतीक—वते । यः । एव । अस्मात् । पापीयान् ।
तम् । तेन । अपेति । नुदते । [7] प्रेति । श्रेयाꣳसम् ।
भ्रातृव्यम् । नुदते । अतीति । सदृशम् । क्रामति ।
न । एनम् । पापीयान् । आप्नोति । यः । एवम् ।

सदृङ् । 'समानान्ययोश्च' इति दृग्भावः, 'दृक्स्ववस्स्ववतसां छन्दसि' इति नुम् । विबाधत इति । विश्लेष्य नाशयति । किं नैनं कदाचिदपि पीडा प्राप्नोति । साम्यमस्य निवर्तयति स्वयमतिशेत इति यावत् । पापीयान् पापतरः तमपनुदते नाशयति यथास्य न कदाचिदनुकरोति ॥

[7]अथ वेदितुस्स्तुतिः—श्रेयांसं प्रणुदते, सदृशमतिक्रामति, नैनं कदाचिदपि भ्रातृव्य आप्नोति । गतमन्यत् ॥

एवं विद्वानेतयेष्ट्या यजते ॥ ४ ॥
देवासुरास्संयत्ता आसन्ते देवा
अब्रुवन् यो नो वीर्यावत्तमस्तमनु
समारंभामहा इति त इन्द्रमब्रुव-

विद्वान् । एतया । इष्ट्या । यजते ॥ ४ ॥

वृणामहै यत्पुरस्ताद्रक्षांसि वपेदग्नये
विबाधवत एवं चत्वारि च ॥१॥

[1] देवासुरा इति देव–असुराः । संयत्ता इति सं–यत्ताः । आसन् । ते । देवाः । अब्रुवन् । यः । नः । वीर्यावत्तम इति वीर्यावत्–तमः । तम् । अन्विति । समारंभामहा इति सं–

इति द्वितीये चतुर्थे प्रथमोनुवाकः.

---

[1] देवासुरा इत्यादि ॥ गतम् । वीर्यावत्तमः, 'अन्येषामपि दृश्यते' इति दीर्घत्वम् । तमनु तं प्रधानभूतमनुसरन्तो वयं संभूय कर्माण्यारभामहे । 'हीने' इत्यनोः कर्मप्रवचनीयत्वम् । त इत्यादि । गतम् । एवं वीर्यावतीरिति । वीर्यवत्यः । पूर्वव-दीर्घत्वम्, 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । ता वा

न्त्वं वै नो वीर्यावत्तमोसि त्वामनु समारंभामहा इति सोऽब्रवीत्तिस्रो मं इमास्तनुवो वीर्यावतीस्ताः प्रीणीताथासुरानभि भविष्यथेति ता वै ब्रूहीत्यब्रुवन्नियमꣳहोमुगियं विमृधेयमिन्द्रियावती ॥ ५ ॥ इत्यब्रवीत्त

आरभामहै । इति । ते । इन्द्रम् । अब्रुवन् । त्वम् । वै । नः । वीर्यावत्तम इति वीर्यावत्–तमः । असि । त्वाम् । अन्विति । समारंभामहा इति सं–आरभामहै । इति । सः । अब्रवीत् । तिस्रः । मे । इमाः । तनुवः । वीर्यावतीरिति वीर्य–वतीः । ताः । प्रीणीत । अथ । असुरान् । अभीति । भविष्यथ । इति । ताः । वै । ब्रूहि । इति । अब्रुवन् । इयम् । अꣳहोमुगित्यꣳहः–मुक् । इयम् । विमृधेति वि–मृधा । इयम् । इन्द्रियावतीतीन्द्रिय–वती ॥ ५ ॥ इति । अब्रवीत् । [2]ते । इन्द्राय । अꣳहोमुच इत्यꣳहः–मुचे । पुरोडाशम् । एकाद-

---

इत्यादि । अब्रुवन् देवाः । इयमित्यादि । अब्रवीदिन्द्रः । विमृधेति । ‘अच्’ इति योगविभागादच्समासान्तः ॥

[2]अथ ते देवाः इन्द्रायैतां त्रिहविष्कामिष्टिं निरवपन् । त्रय-

इन्द्रायाꣳहोमुचे पुरोडाशमेकादश-
कपालं निरवपन्निन्द्राय वैमृधाये-
न्द्रायेन्द्रियावते यदिन्द्रायाꣳहोमुचे
निरवपन्नꣳहस एव तेनामुच्यन्त
यदिन्द्राय वैमृधाय मृध एव तेना-
पाघ्नत यदिन्द्रायेन्द्रियावत इन्द्रिय-
मेव तेनात्मन्नदधत त्रयस्त्रिꣳशत्क-

शकपालमित्येकादश-कपालम् । निरिति । अव-पन् । इन्द्राय । वैमृधाय । इन्द्राय । इन्द्रियावत इतीन्द्रिय-वते । यत् । इन्द्राय । अꣳहोमुच इत्यꣳहः-मुचे । निरवपन्निति निः-अवपन् । अꣳहसः । एव । तेन । अमुच्यन्त । यत् । इ-न्द्राय । वैमृधाय । मृधः । एव । तेन । अपेति । अघ्नत । यत् । इन्द्राय । इन्द्रियावत इतीन्द्रिय-वते । इन्द्रियम् । एव । तेन । आत्मन् । अदधत । त्रय-स्त्रिꣳशत्कपालमिति त्रयस्त्रिꣳशत्-कपालम् ।

---

स्त्रिंशत्कपालमिति. । त्रयाणामेकादशकपालानां त्रयस्त्रिंशत्कपाला भवन्तीति भावः । पुरोडाशमिति च जात्यभिधानम् । आत्म-न्निति । आत्मनि गुणभूतानकरोत्, तद्देवानां भूत्यै अभवत् । विजितिमिति । व्यावृत्तो जयो विजितिः । असुरेभ्यो व्यावृ-

पालं पुरोडाशं निरवपन्त्रयस्त्रिꣳशद्वै देवतास्ता इन्द्र आत्मन्ननु समारम्भयत भूत्यै ॥६॥ तां वाव देवा विजितिमुत्तमामसुरैर्व्यजयन्त यो भ्रातृव्यवान्थ्स्यात्स स्पर्धमान एत-

पुरोडाशम् । निरिति । अवपन्न् । त्रयस्त्रिꣳशदिति त्रयः-त्रिꣳशत् । वै । देवताः । ताः । इन्द्रः । आत्मन्न् । अन्विति । समारम्भयतेति सं-आरम्भयत । भूत्यै ॥ ६ ॥ ताम् । वाव । देवाः । विजितिमिति वि-जितिम् । उत्तमामित्युत्-तमाम् । असुरैः । वीति । अजयन्त । यः । भ्रातृव्यवानिति भ्रातृव्य-वान् । स्यात् । सः । स्पर्धमानः । एतया । इष्ट्या । यजेत । इन्द्राय । अꣳहोमुच-

त्तामुत्तमां विजितिमिति । व्यजयन्त प्राप्नुवन्, उत्तममसुरविजयमलभन्तेति यावत्; गोपोषं पुष्णातीतिवत् सामान्यविशेषाभिप्रायत्वादुभयोः । गतमन्यत् ॥

[3]यस्मादिति ॥ यस्माद्भ्रातृव्यः श्रेयान् प्रशस्यतरो भवति, सोयमंहसा गृहीतः, तस्मादंहोमुचे निर्वपेत् । तेनांहसो मुक्तो भवति । मृधा वा इत्यादि । समानेषु मध्ये अभ्रातृव्योपि नाम कश्चित् यस्मादन्यश्श्रेयान्प्रशस्यतरो भवति एष खलु मृधा अभिषण्णः संग्रा-

येष्ट्या यजेतेन्द्रायाꣳहोमुचे पुरोडा-
शमेकादशकपालं निर्वपेदिन्द्राय वै-
मृधायेन्द्रायेन्द्रियावतेꣳहसा वा एष
गृहीतो यस्माच्छ्रेयान्भ्रातृव्यो यदि-
न्द्रायाꣳहोमुचे निर्वपत्यꣳहस एव
तेन मुच्यते मृधा वा एषोभिषण्णो
यस्माथ्समानेष्वन्यश्श्रेयानुत ॥७॥
अभ्रातृव्यो यदिन्द्राय वैमृधाय मृधं
एव तेनाप हते यदिन्द्रायेन्द्रियावत

इत्यꣳहः–मुचे । पुरोडाशम् । एकादशकपालमि-
त्येकादश–कपालम् । निरिति । वपेत् । इन्द्राय ।
वैमृधाय । इन्द्राय । इन्द्रियावत इतीन्द्रिय–वते ।
अꣳहसा । वै । एषः । गृहीतः । यस्मात् । श्रे-
यान् । भ्रातृव्यः । यत् । इन्द्राय । अꣳहोमुच
इत्यꣳहः–मुचे । निर्वपतीति निः–वपति । अꣳ-
हसः । एव । तेन । मुच्यते । मृधा । वै । एषः ।
अभिषण्ण इत्यभि–सन्नः । यस्मात् । समानेषु ।
अन्यः । श्रेयान् । उत ॥७॥ अभ्रातृव्यः । यत् ।
इन्द्राय । वैमृधाय । मृधः । एव । तेन । अपेति ।
हते । यत् । इन्द्राय । इन्द्रियावत इतीन्द्रिय–व-

इन्द्रियमेव तेनात्मन्धत्ते त्रयंस्त्रिꣳशत्कपालं पुरोडाशं निर्वपति त्रयंस्त्रिꣳशद्वै देवतास्ता एव यजमान आत्मन्ननु समारम्भयते भूत्यै सा वा एषा विजितिर्नामेष्टिर्य एवं विद्वानेतयेष्ट्या यजत उत्तमामेव

ते । इन्द्रियम् । एव । तेन । आत्मन्न् । धत्ते । त्रयंस्त्रिꣳशत्कपालमिति त्रयंस्त्रिꣳशत्-कपालम् । पुरोडाशम् । निरिति । वपति । त्रयंस्त्रिꣳशदिति त्रयः-त्रिꣳशत् । वै । देवताः । ताः । एव । यजमानः । आत्मन्न् । अन्विति । समारम्भयत इति सं-आरम्भयते । भूत्यै । [4]सा । वै । एषा । विजितिरिति वि-जितिः । नाम । इष्टिः । यः । एवम् । विद्वान् । एतया । इष्ट्या । यजते । उत्तमामित्युत्-तमाम् । एव । विजितिमिति वि-

माभिभूत इव भवति । तस्मादिन्द्राय वैमृधाय निर्वपेत् मृधस्संग्रामानपहन्ति ॥

[4]विजितिर्नामेति ॥ विजयहेतुत्वात् । गतमन्यत् ॥

विजिंतिं भ्रातृंव्येण वि जंयते ॥८॥
देवासुरास्संयंत्ता आसन्तेषां गाय-
त्र्योजो बलंमिन्द्रियं वीर्यं प्रजां पशू-

जितिम् । भ्रातृंव्येण । वीति । जयते ॥ ८ ॥

इन्द्रियावंती भूत्यां उतैकान्न पंञ्चाशच्चं॥२॥

[1]देवासुरा इति देव—असुराः । संयत्ता इति सं—यत्ताः । आसन्न् । तेषाम् । गायत्री । ओजः । बलम् । इन्द्रियम् । वीर्यम् । प्रजामिति प्र—जाम् । पशून् । संगृह्येति सं—गृह्य । आदायेत्यां—दाय ।

---

इति द्वितीये चतुर्थे द्वितीयोनुवाकः.

---

[1]देवासुरा इत्यादि ॥ तेषां देवासुराणां ओजःप्रभृति संगृह्यादाय आच्छिद्यापक्रम्य तेन सह तत्सकाशादपक्रम्य क्वाप्यतिष्ठत् गायत्री । ते देवासुरा अमन्यन्त अस्माकं मध्ये यतरानियमुपावर्त्स्यति उपावर्तिष्यते ते इदं विश्वं भविष्यन्तीति अस्य विश्वस्य स्वामिनस्ते भविष्यन्तीति । यद्वा—इदं विश्वं ते भविष्यन्ति प्राप्स्यन्तीति । 'वृद्भ्यस्स्यसनोः' इति परस्मैपदम्, 'न वृद्भ्यश्चतुर्भ्यः' इतीडभावः । अथ देवासुरास्तां व्यह्वयन्त

न्थ्संगृह्यादायापक्रम्यातिष्ठुन्तेऽमन्यन्त
यतरान् वा इयमुपावथ्स्यति त इदं
भविष्यन्तीति तां व्यह्वयन्त विश्व-
कर्मन्निति देवा दाभीत्यसुरास्सा ना-
न्यतरांश्चनोपावर्तत. ते देवा

अपक्रम्येत्यप–क्रम्य । अतिष्ठुत् । ते । अमन्यन्त ।
यतरान् । वै । इयम् । उपावथ्स्यतीत्युप–आव-
थ्स्यति । ते । इदम् । भविष्यन्ति । इति । ताम् ।
वीति । अह्वयन्त । विश्वकर्मन्निति विश्व–कर्मन् ।
इति । देवाः । दाभि । इति । असुराः । सा । न ।
अन्यतरान् । चन । उपावर्ततेत्युप–आवर्तत । ते ।

---

विविधमाह्वयन्निति । 'निसमुपविभ्यो ह्वः' इत्यात्मनेपदम् । विश्वकर्मन्निति । विश्वानि कर्माण्यस्यामिति विश्वकर्मा । 'मनः' इति ङीप्प्रतिषेधः, आमन्त्रिताद्युदात्तत्वम् । हे विश्वकर्मन्निति देवा गायत्रीमाह्वयन् । हे दाभि इत्यसुरा आह्वयन्, सामर्थ्यात् ह्वयत्यर्थमात्रं संबध्यते । यद्वा—व्यह्वयन्त विलक्षणमाह्वानं कृतवन्तः । वैलक्षण्यं चाह्वानपदभेदः । दभनं दाहः, दभिः प्रकृत्यन्तरमस्ति, तस्माद्वजन्तान्मत्वर्थीयोकारः, गौरादिर्द्रष्टव्यः, पूर्ववदामन्त्रिताद्युदात्तत्वम्, 'अम्बार्थनद्योः' इति ह्रस्वत्वम् । यद्वा—पचाद्यजन्तात् स्वार्थिकोऽण्, ततः 'टिड्ढाणञ्' इति ङीप् । सेत्यादि । गतम् ॥

एतद्यजुरपश्यन्नोजोसि सहोसि ब-
लमसि ॥ १ ॥ भ्राजोसि देवानां
धाम नामासि विश्वमसि विश्वायु-
स्सर्वमसि सर्वायुरभिभूरिति वाव

देवाः । एतत् । यजुः । अपश्यन्न् । [2]ओजः । अ-
सि । सहः । असि । बलम् । असि ॥१॥ भ्राजः ।
असि । देवानाम् । धाम । नाम । असि । वि-
श्वम् । असि । विश्वायुरिति विश्व–आयुः । स-
र्वम् । असि । सर्वायुरिति सर्व–आयुः । अभिभू-
रित्यभि–भूः । [3]इति । वाव । देवाः । असुराणाम् ।

---

[2]ओजोसीत्यादि ॥ तेजोसि यशोसि देवानाम् । सर्वत्र तद्धेतुत्वात्ताच्छब्द्यम् । सहोसि अभिभवसाधनमपि शत्रूणाम् । बलं प्रसिद्धम् । भ्राजो दीप्तिः । धाम स्थानम् । नाम नमनमुपकारकम् । विश्वमसि अन्यदपि यद्भद्रं तदसि । विश्वायुः विश्वा [श्वमा] युर्जीवितमस्मिन्निति विश्वायुः । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति विश्वशब्दस्यान्तोदात्तत्वम् । सर्वमासि सर्वमपि जगतामेवासि । सर्वायुरसि । सर्वाणि चायूंषि अन्नानि अस्यामिति सर्वान्नहेतुरसि । अभिभूः यस्मादेवं तस्मात् त्वं सर्वस्योपरि भवासि सर्वस्याभिभवित्र्यसि ॥

[3]इति वावेत्यादि ॥ इत्यनेन यजुषा देवाः असुराणामप्यो-

देवा असुराणामोजो बलमिन्द्रियं
वीर्यं प्रजां पशूनवृञ्जत यद्गायत्र्यपक्र-
म्यातिष्ठत्तस्मादेतां गायत्रीतीष्टिमा-
हुस्संवथ्सरो वै गायत्री संवथ्सरो
वै तदपक्रम्यातिष्ठद्यदेतया देवा
असुराणामोजो बलमिन्द्रियं वीर्य-
म् ॥ १० ॥ प्रजां पशूनवृञ्जत त-

ओजः । बलम् । इन्द्रियम् । वीर्यम् । प्रजामिति प्र-जाम् । पशून् । अवृञ्जत । यत् । गायत्री । अपक्रम्येत्यप-क्रम्य । अतिष्ठत् । तस्मात् । एताम् । गायत्री । इति । इष्टिम् । आहुः । [4]संवत्थ्सर इति सं-वत्थ्सरः । वै । गायत्री । संवथ्सर इति सं-वथ्सरः । वै । तत् । अपक्रम्येत्यप-क्रम्य । अ-तिष्ठत् । यत् । एतया । देवाः । असुराणाम् । ओजः । बलम् । इन्द्रियम् । वीर्यम् ॥ १० ॥ प्रजामिति प्र-जाम् । पशून् । अवृञ्जत । तस्मात् ।

---

जआदिकं अवृञ्जत आवर्जयन् आत्मसात्कृतवन्तः न केवलमात्मीयमेव लब्धवन्तः । यदित्यादि । गायत्र्यपक्रमणहेतुत्वादेतां वक्ष्यमाणामिष्टिं गायत्रीत्याहुः वेदार्थविदः ॥

[4]संवत्सरो वा इत्यादि ॥ संवत्सरवत् सर्वार्थहेतुत्वात् बल-

स्मादेताः संवर्ग इतीष्टिमाहुर्यो भ्रा-
तृव्यवांत्स्यात्स स्पर्धमान एतयेष्ट्या
यजेताग्नये संवर्गाय पुरोडाशमष्टाक-
पालं निर्वपेत्तꣳ शृतमासन्नमेतेन
यजुषाभि मृशेदोज एव बलमि-

एताम् । संवर्ग इति सं—वर्गः । इति । इष्टिम् । आ-
हुः । [5]यः । भ्रातृव्यवानिति भ्रातृव्य—वान् । स्यात् ।
सः । स्पर्धमानः । एतया । इष्ट्या । यजेत । अग्नये ।
संवर्गायेति सं—वर्गाय । पुरोडाशम् । अष्टाकपा-
लमित्यष्टा—कपालम् । निरिति । वपेत् । तम् ।
शृतम् । आसन्नमित्या—सन्नम् । एतेन । यजुषा ।
अभीति । मृशेत् । ओजः । एव । बलम् । इन्द्रि-

---

साम्यात् [ताद्धर्म्यात्] तदानीं संवत्सर एव देवेभ्योपक्रम्यातिष्ठत् । यथा संवत्सरापक्रमेण ओजआदिकं नश्यति तद्वदिदमिति । यदेतयेत्यादि । संव्रज्यते ओजआदिकं सर्वं सहैवानेनाव्रज्यते आच्छिद्यते इति संवर्गो योगः । वृजी वर्जने, घञि 'चजोः कु घिण्यतोः' इति कुत्वम् ॥

[5]यो भ्रातृव्यवानित्यादि ॥ गतम् । एतेन यजुषेत्यादि । ओजोसीत्यादिना । अत्राचार्येण 'सर्वायुरभिभूरस्यभिभूरहं तेन हविषा-

न्द्रियं वीर्यं प्रजां पशून्भ्रातृव्यस्य वृङ्क्ते भवत्यात्मना परास्य भ्रातृव्यो भवति ॥ ११ ॥

प्रजापतिः प्रजा असृजत ता अ-

यम् । वीर्यम् । प्रजामिति प्र-जाम् । पशून् । भ्रातृव्यस्य । वृङ्क्ते । भवति । आत्मना । परेति । अस्य । भ्रातृव्यः । भवति ॥ ११ ॥

बलमस्येतया देवा असुराणामोजो बलमि-न्द्रियं वीर्यं पञ्चचत्वारिंशच्च ॥ ३ ॥

[1]प्रजापतिरिति प्रजा-पतिः । प्रजा इति प्र-जाः । असृजत । ताः । अस्मात् । सृष्टाः । परा-

(मिति) अमुं भ्रातृव्यमभिभूयासम्' इति शेषो दर्शितः ॥

इति द्वितीये चतुर्थे तृतीयोनुवाकः.

---

[1]प्रजापतिः प्रजा असृजतेत्यादि ॥ पराचीः पराचीनगतयः अपुनरावृत्ता एव यद्गताः ता यत्रावसन् ततो गर्मुदुदतिष्ठत् अकृष्टादेव प्रदेशात् स्वयमेवाजायत । विजातीयेन सहोत्पन्नः तृणवि-

स्मात्सृष्टाः पराचीरायन्ता यत्रावस-
न्ततो गर्मुदुदतिष्ठत्ता बृहस्पतिश्चान्व-
वैताᳪ सोऽब्रवीद्बृहस्पतिरनया त्वा
प्र तिष्ठान्यथ त्वा प्रजा उपावर्त्स्य-
न्तीति तं प्रातिष्ठत्ततो वै प्रजापतिं
प्रजा उपावर्तन्त यः प्रजाकाम-

चीः । आयन्न् । ताः । यत्र । अवसन्न् । ततः । गर्मुत् । उदिति । अ तिष्ठत् । ताः । बृहस्पतिः । च । अन्ववैतामित्यनु-अवैताम् । सः । अब्रवीत् । बृहस्पतिः । अनया । त्वा । प्रेति । तिष्ठानि । अथ । त्वा । प्रजा इति प्र-जाः । उपावर्त्स्यन्तीत्युप-आवर्त्स्यन्ति । इति । तम् । प्रेति । अतिष्ठत् । ततः । वै । प्रजापतिमिति प्रजा-पतिम् । प्रजा इति प्र-जाः । उपावर्तन्तेत्युप-आवर्तन्त । यः । प्रजाकाम इति प्रजा-कामः । स्यात् ।

शेषो गर्मुत् । ओषधीनां दुष्टपरिणाम इत्येके । अथ ताः बृहस्पतिः प्रजापतिश्चान्ववैतां पश्चादनुसृत्य अवगतवन्तौ । अथ सोऽब्रवीद्बृहस्पतिः प्रजापतिं अनया गर्मुता त्वां प्रतिष्ठानि प्रकर्षेण स्थापयामि । अथ प्रकृष्टस्थितिकं त्वां प्रजा उपावर्त्स्यन्तीति । अथ तं गार्मुतेन चरुणा प्रातिष्ठत् प्रकृष्टं स्थापितवान् । यत्र

स्स्यात्तस्मा॑ ए॒तं प्रा॑जाप॒त्यं गार्मु॑तं
च॒रुं निर्व॑पेत्प्र॒जाप॑तिम् ॥ १२९॥
ए॒व स्वेन॑ भाग॒धेये॒नोप॑ धावति॒ स
ए॒वास्मै॑ प्र॒जां प्र ज॑नयति प्र॒जाप॑तिः
प॒शून॑सृजत॒ तेऽस्मात्सृ॒ष्टाः परा॑ञ्च

तस्मै॑ । ए॒तम् । प्रा॒जा॒प॒त्यमिति॑ प्राजा–प॒त्यम् । गा॒र्मु॒तम् । च॒रुम् । निरिति॑ । व॒पे॒त् । प्र॒जाप॑ति॒मिति॑ प्र॒जा–प॒ति॒म् ॥ १२ ॥ ए॒व । स्वेन॑ । भा॒ग॒धेये॒नेति॑ भाग–धेये॑न । उपेति॑ । धा॒व॒ति॒ । सः । ए॒व । अ॒स्मै॒ । प्र॒जामिति॑ प्र–जाम् । प्रेति॑ । ज॒न॒य॒ति॒ । [2]प्र॒जाप॑ति॒रिति॑ प्र॒जा–प॒तिः । प॒शून् । अ॒सृ॒ज॒त॒ । ते । अ॒स्मा॒त् । सृ॒ष्टाः । परा॑ञ्चः । आ॒-

धात्वर्थनिवृत्तौ प्रशब्दः तत्रैव 'समवप्रविभ्यस्सथः' इत्यात्मनेपदमकर्मकस्यैव भवति, इह तु सकर्मक एव प्रकृष्टायां स्थितौ वर्तते, तेनात्मनेपदाभावः, यथा—'ब्रह्मन् प्रस्थास्यामः समिधमाधाय' इति । तत्रापि हि प्रकृष्टस्थितिकर्मा तिष्ठतिः, न तु स्थितिनिवृत्तिकर्मा । ततो वा इत्यादि । गतम् ॥

[2]पूषा चेति ॥ पूषा च प्रजापतिश्च, अथ सोऽब्रवीत्पूषा प्रजापतिं अनया गर्मुता प्रतिष्ठ ततो मयि प्रकृष्टस्थितिके सति त्वां पशव उपावर्त्स्यन्तीति । अत्रान्तरे सोमोऽपि मां प्रतिष्ठेति प्रजापतिमब्रवीत् । मदीयं ह्यकृष्टपच्यं, तस्मादनया मां प्रतिष्ठेति ।

आयन्ते यत्रावसन्ततो गर्मुदुदतिष्ठ-
त्तान्पूषा चान्ववैताꣳ सोऽब्रवीत्पूषाऽ-
नया मा प्र तिष्ठाथ त्वा पशव उपाव-
र्थ्स्यन्तीति मां प्र तिष्ठेति सोमोऽब्र-
वीन्मम वै ॥ १३ ॥ अकृष्टपच्यमि-
त्युभौ वां प्र तिष्ठानीत्यब्रवीत्तौ प्रा-
तिष्ठत्ततो वै प्रजापतिं पशव उपा-

यन् । ते । यत्र । अवसन् । ततः । गर्मुत् । उदिति । अतिष्ठत् । तान् । पूषा । च । अन्ववैतामित्यनु—अवैताम् । सः । अब्रवीत् । पूषा । अनया । मा । प्रेति । तिष्ठ । अथ । त्वा । पशवः । उपावर्थ्स्यन्तीत्युप—आवर्थ्स्यन्ति । इति । माम् । प्रेति । तिष्ठ । इति । सोमः । अब्रवीत् । मम । वै ॥ १३ ॥ अकृष्टपच्यमित्यकृष्ट—पच्यम् । इति । उभौ । वाम् । प्रेति । तिष्ठानि । इति । अब्रवीत् । तौ । प्रेति । अतिष्ठत् । ततः । वै । प्रजापतिमिति प्रजा—पतिम् । पशवः । उपावर्तन्तेत्युप—आ-

---

अकृष्टः स्वयमेव पच्यते इत्यकृष्टपच्यम् । 'अकृष्टे च' इति य[ क्यप् ]प्रत्ययः । अथ उभावपि युवां प्रतिष्ठानीति प्रजापतिरब्रवीत् सोमापूषणौ । तत-

वर्तन्त यः पशुकामस्स्यात्तस्मा एतꣳ सोमापौष्णं गार्मुतं चरुं निर्वपेत्सोमापूषणावेव स्वेन भागधेयेनोप धावति तावेवास्मै पशून्प्र जनयतस्सोमो वै रेतोधाः पूषा पशूनां प्रजनयिता सोम एवास्मै रेतो दधाति पूषा पशून्प्र जनयति ॥१४॥

वर्तन्त । यः । पशुकाम इति पशु–कामः । स्यात् । तस्मै । एतम् । सोमापौष्णमिति सोमा–पौष्णम् । गार्मुतम् । चरुम् । निरिति । वपेत् । सोमापूषणाविति सोमा–पूषणौ । एव । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । तौ । एव । अस्मै । पशून् । प्रेति । जनयतः । सोमः । वै । रेतोधा इति रेतः–धाः । पूषा । पशूनाम् । प्रजनयितेति प्र–जनयिता । सोमः । एव । अस्मै । रेतः । दधाति । पूषा । पशून् । प्रेति । जनयति ॥ १४ ॥

वपेत्प्रजापतिं वै दधाति पूषा त्रीणि च ॥४॥

स्तौ गार्मुतेन चरुणा प्रातिष्ठत् । ततो वा इत्यादि । गतम् ॥

इति द्वितीये चतुर्थे चतुर्थोनुवाकः.

अग्ने गोभिर्न आ गहीन्दो पुष्ट्या जुषस्व नः । इन्द्रो धर्ता गृहेषु नः । सविता यस्सहस्त्रियस्स नो गृहेषु रारणत् । आ पूषा एत्वा वसु । धाता ददातु नो रयिमीशानो ज-

[1]अग्ने । गोभिः । नः । एति । गहि । इन्दो इति । पुष्ट्या । जुषस्व । नः । इन्द्रः । धर्ता । गृहेषु । नः । [2]सविता । यः । सहस्त्रियः । सः । नः । गृहेषु । रारणत् । एति । पूषा । एतु । एति । वसु । [3]धाता । ददातु । नः । रयिम् । ईशानः ।

---

[1]अथ चित्रायागो वक्ष्यते । तस्यामेते उपहोममन्त्रास्सप्त । तत्राद्याश्चतस्रो गायत्र्यः । पञ्चमी (सतो) बृहती । ततो द्वे यजुषी । तत्र प्रथमा—अग्ने गोभिरिति ॥ हे अग्ने गोभिः नः अस्मानागहि आगच्छ । शपो लुक् । हे इन्दो पुष्ट्या पशुपुष्ट्या अस्माकं जुषस्व सेवस्व प्रीणय वा । इन्द्रश्च गृहेषु अस्माकं धर्ता धारको भवितुमर्हतीति । 'अर्हे कृत्यतृचश्च' इति तृच् ॥

[2]द्वितीया—सवितेति ॥ यस्सविता सहस्त्रियः सहस्रेण संमितः । 'सहस्रेण संमितौ घः' । सोस्माकं गृहेषु रारणत् रमताम् । रमतेर्लेटि शपश्श्लुः, तुजादित्वादभ्यासस्य दीर्घत्वम्, लेटोऽडागमः, वर्णव्यत्ययेन णत्वम् । पूषा चास्मद्गृहेषु ऐतु आगच्छतु । वसु पशुलक्षणं धनं चास्मद्गृहेष्वागच्छतु ॥

[3]तृतीया—धातेति ॥ धाता सर्वस्य विधाता देवोस्मभ्यं रयिं धनं

गतस्पतिः । स नः पूर्णेन वावनत् ।
त्वष्टा यो वृषभो वृषा स नो गृहेषु
रारणत् । सहस्रेणायुतेन च ।
येन देवा अमृतम् ॥ १५ ॥ दीर्घꣳ

जगतः । पतिः । सः । नः । पूर्णेन । वावनत् ।
[4]त्वष्टा । यः । वृषभः । वृषा । सः । नः । गृहेषु ।
रारणत् । सहस्रेण । अयुतेन । च । [5]येन । देवाः ।
अमृतम् ॥ १५ ॥ दीर्घम् । श्रवः । दिवि । ऐर-

---

पशुलक्षणं ददातु ईशानः दातुं समर्थः जगतः पतिः पालयिता । 'षष्ठ्याः पतिपुत्र' इति सत्वम् । किञ्च—स देवोऽस्मान् पूर्णेन सर्वाभिमतैराप्यायितेन धनेन वावनत् संभजतां अस्मान् परिगृह्णातु । वनषण संभक्तौ, लेटि शपश्श्लुः, अडादि पूर्ववत् ॥

[4]अथ चतुर्थी—त्वष्टेति ॥ यस्त्वष्टा वृषभः वर्षिता कामानां वृषा प्रधानभूतः सेक्ता वा सोऽस्माकं गृहेषु रारणत् रमताम् । व्याख्यातम् । सहस्रेण पशुना दशभिश्शतैः रमताम् । अयुतेन दशभिस्सहस्रैश्च रमताम् ॥

[5]अथ पञ्चमी—येनेति ॥ हे रायस्पोष धनपुष्ट येन त्वया देवा अमृतं अमृतत्वं दीर्घमविच्छिन्नं श्रवः अन्नं च दिवि ऐरयन्त द्युलोके प्राप्नुवन् स त्वमस्मभ्यं गवां कुल्मिं संघातं सन्तानं वा आयुवस्व अस्माभिर्मिश्रय, देहीति यावत् । यौतेर्व्य-

श्रवो दिवैरयन्त । रायस्पोष त्वम-
स्मभ्यं गवां कुल्मिं जीवस आ युं-
वस्व । अग्निर्गृहपतिस्सोमो विश्व-
वनिस्सविता सुमेधास्स्वाहा । अग्ने

यन्त । रायः । पोष । त्वम् । अस्मभ्यमित्यस्म-भ्यम् । गवाम् । कुल्मिम् । जीवसे । एति । युव-स्व । [6]अग्निः । गृहपतिरिति गृह-पतिः । सोमः । विश्ववनिरिति विश्व-वनिः । सविता । सुमेधा इति सु-मेधाः । स्वाहा ।[7]अग्ने । गृहपत इति गृह-

त्ययेनात्मनेपदम्, विकरणव्यत्ययेन शः । जीवसे अस्मान् जीवयितुम् । तुमर्थे असेप्रत्ययः ॥

[6]अथ षष्ठो मन्त्रः—अग्निरिति ॥ गृहाणां पतिः पाता अग्निः सोमः सर्वस्य धनस्य संभक्ता संविभक्ता । 'छन्दसि वनसन' इतीन्प्रत्ययः । सविता सुमेधाः शोभनमतिः सदा सानुग्रहबुद्धिः । तस्मादेतेभ्यो महानुभावेभ्यः इदं स्वाहुतमस्त्विवति ॥

[7]अथ सप्तमः—अग्न इति ॥ हे अग्ने गृहपते गृहाणां पातः । 'नामन्त्रिते समानाधिकरणे' इति पूर्वपदस्य विद्यमानत्वाभावादिदं निहन्यते । यस्ते भृत्यः भृतार्हः, छान्दसो यत् । भागः एकदेशोऽङ्गभेदः तेन कर्मणा आक्रममाणाय शत्रूनभिभवते अन्यग्भूताय मह्यं सहः बलं ओजस्तेजश्च धेहि देहि । यद्वा—यस्ते भागः

गृहपते यस्ते घृत्यो भागस्तेन सह
ओज आक्रमंमाणाय धेहि श्रैष्ठ्या-
त्पथो मा योषं मूर्धा भूयासꣳ स्वा-
हा ॥ १६ ॥

चित्रया यजेत पशुकाम इयं वै

पते । यः । ते । घृत्यः । भागः । तेन । सहः ।
ओजः । आक्रमंमाणायेत्या-क्रमंमाणाय । धेहि ।
श्रैष्ठ्यात् । पथः । मा । योषम् । मूर्धा । भूया-
सम् । स्वाहा ॥ १६ ॥

अमृतमष्टात्रिꣳशच्च ॥ ५ ॥

[1]चित्रया । यजेत । पशुकाम इति पशु-का-
मः । इयम् । वै । चित्रा । यत् । वै । अस्याम् ।

---

हविर्भागः घृत्यः घृते भवः घृतप्रकृतिर्वा, तेनानेन हेतुना शत्रूना-
क्रममाणाय मह्यं सह ओजश्च देहि । श्रैष्ठ्यात् पथो मार्गात्
मा योषं अपहृतो मा भूवम् । यौतेर्लिङि वृद्ध्यभावश्छान्दसः,
इडभावश्च । अपि च मूर्धा प्रधानभूतो भूयासम् । स्वाहुतं चेदं
घृतं तुभ्यमस्तु ॥

इति द्वितीये चतुर्थे पञ्चमोनुवाकः.

---

[1]चित्रया यजेतेत्यादि ॥ चित्रापूर्णमासे चित्रां निर्वपेत् । इयं

चित्रा यद्वा अस्यां विश्वं भूतमधि
प्रजायंते तेनेयं चित्रा य एवं विद्वा-
[२]श्चित्रया पशुकामो यजंते प्र प्रज-
या पशुभिर्मिथुनैर्जायते प्रैवाग्ने-
येनं वापयति रेतस्सौम्येनं दधाति
रेतं एव हितं त्वष्टा रूपाणि वि क-
रोति सारस्वतौ भंवत एतद्वै दैव्यं

विश्वम् । भूतम् । अधीति । प्रजायंत इति प्र-
जायंते । तेनं । इयम् । चित्रा । यः । एवम् ।
विद्वान् । चित्रया । पशुकाम इति पशु-कामः ।
यजंते । प्रेति । प्रजयेति प्र-जया । पशुभिरिति
पशु-भिः । मिथुनैः । जायते । [८]प्रेति । एव ।
आग्नेयेनं । वापयति । रेतः । सौम्येनं । दधाति ।
रेतः । एव । हितम् । त्वष्टा । रूपाणि । वीति ।
करोति । सारस्वतौ । भवतः । एतत् । वै । दै-

वा इति । विश्वं भूतजनाधिकरणतया चयनीयत्वादिष्टिपृथिव्योर-
भेदोपचारः । य एवमित्यादि । गतम् ॥

[२]आग्नेयोष्टाकपालः, सौम्यश्चरुः, त्वाष्ट्रोष्टाकपालः, सरस्वत्यै चरुः,
सरस्वते चरुः, सिनीवाल्यै चरुः, ऐन्द्र एकादशकपालः, सप्तैतानि
हवींषि भवन्ति—प्रैवेति ॥ आग्नेयेन प्रवापयति प्रजनने रेत-

मिथुनं दैव्यमेवास्मै ॥ १७ ॥ मिथुनं मध्यतो दधाति पुष्ट्यै प्रजननाय सिनीवाल्यै चरुर्भवति वाग्वै सिनीवाली पुष्टिः खलु वै वाक्पुष्टिमेव वाचमुपैत्यैन्द्र उत्तमो भवति तेनै-

व्यम् । मिथुनम् । दैव्यम् । एव । अस्मै ॥ १७ ॥ मिथुनम् । मध्यतः । दधाति । पुष्ट्यै । प्रजननायेति प्र-जननाय । सिनीवाल्यै । चरुः । भवति । वाक् । वै । सिनीवाली । पुष्टिः । खलु । वै । वाक् । पुष्टिम् । एव । वाचम् । उपेति । एति । ऐन्द्रः । उत्तम इत्युत्-तमः । भवति । तेन । एव ।

---

स्सिञ्चति सेचयति पुम्भिः स्त्रीषु, तत्सिक्तं सौम्येन दधाति धारयति । तत्र हितं धारितं त्वष्टा रूपाणि विकरोति विविधेन रूपेण परिणतं करोति त्वाष्ट्रेण । सारस्वताभ्यां दैव्यं मिथुनं, सरस्वत्सरस्वतीतिसंबन्धाभ्यां दैव्यं मिथुनं गर्भस्थस्य जन्तोः पुष्ट्यर्थं काले प्रजननार्थं च मध्यतः अन्तर्दधाति स्थापयति । ततो वाक्प्रवृत्तिहेतुभूतायास्सिनीवाल्याः चरुणा वाचश्च पुष्टिविशेषत्वात् पुष्टिं वाचं च प्राप्नोति गर्भस्थो जीवः । उत्तमस्यैन्द्रस्य भावात् । सिनीवाल्या हि तदपरं मिथुनं अन्ते भवति । ततस्तदपि पुष्ट्यै प्रजननाय च संपद्यते इति भावः । सप्तेति । गोजाविकपुरुष

व तन्मिथुनꣳ सप्तैतानि हवीꣳषि भवन्ति सप्त ग्राम्याः पशवस्सप्तारण्यास्सप्त छन्दाꣳस्युभयस्यावरुद्ध्या अथैता आहुतीर्जुहोत्येते वै देवाः पुष्टिपतयस्त एवास्मिन्पुष्टिं दधति पुष्यति प्रजया पशुभिरथो यदे-

तत् । मिथुनम् । सप्त । एतानि । हवीꣳषि । भवन्ति । सप्त । ग्राम्याः । पशवः । सप्त । आरण्याः । सप्त । छन्दाꣳसि । उभयस्य । अवरुद्ध्या इत्यव–रुद्ध्यै । [3]अथ । एताः । आहुतीरित्या–हुतीः । जुहोति । एते । वै । देवाः । पुष्टिपतय इति पुष्टि–पतयः । ते । एव । अस्मिन्न् । पुष्टिम् । दधति । पुष्यति । प्रजयेति प्र–जया । पशुभिरिति पशु–भिः । अथो इति । यत् । एताः ।

गर्दभाश्वोष्ट्राः सप्त ग्राम्याः पशवः । द्विखुरश्वापदपक्षिसरीसृपहस्तिमर्कटनादेयाः सप्तारण्याः । गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यः सप्त छन्दांसि प्रधानानि । उभयस्येति । पशूनां छन्दसां च ॥

[3]अथैता इति ॥ प्रधानयागादनन्तरं पुरस्तात्स्विष्टकृतः 'अग्ने गोभिर्न आ गहि'* इत्याद्यास्सप्ताहुतीर्जुहोति । एते वा इति ।

*तै. सं. २-४-५.

ता आहुतीर्जुहोति प्रतिष्ठित्यै॥१८॥
मारुतमसि मरुतामोजोपां धारां

आहुतीरित्या-हुतीः । जुहोति । प्रतिष्ठित्या इति प्रति-स्थित्यै ॥ १८ ॥

अस्मै त एव द्वादश च ॥ ६ ॥

[1]मारुतम् । असि । मरुताम् । ओजः । अपाम् ।

अग्रचादयः । अथो इति । अपि च एता आहुतयः प्रतिष्ठित्यै च भवन्ति एतेषां देवानां प्रतिष्ठाया अपि हेतुत्वात् ॥

इति द्वितीये चतुर्थे षष्ठोनुवाकः.

---

[1]अथ कारीरीमन्त्राः । तत्र यजमानः कृष्णं वासः कृष्णतूषं परिधत्ते—मारुतमसीति यजुषा ॥ अत्राहुः—

होतॄन्प्रवर्ग्यकाण्डं च याश्चोपनिषदो विदुः ।
अरुणाम्नायविधिश्चैव काठके परिकीर्तितौ ॥
रुद्रा नारायणश्चैव मेधो यश्चैव पित्रियः ।
एतदारण्यकं सर्वं नाव्रती श्रोतुमर्हति ॥
कारीर्यश्चापि पित्र्याश्च दिवाकीर्त्येति येषु च ।
रुद्रास्सन्ततिरित्येतावनुवाकौ च सात्रिकौ ॥

भिन्धि रमयत मरुतश्श्येनमायिनं

धाराम् । भिन्धि । रमयत । मरुतः । श्येनम् । आयिनम् । मनोजवसमिति मनः–जवसम् ।

होतृविध्यवसाने चाप्यनुवाकचतुष्टयम् ।
सूक्तेषु सूक्तं यत्सौर्यं मेधो यश्चैव पित्रियः ॥
काठकानि च सर्वाणि सर्वाण्यारण्यकानि च ।
दिवाकीर्त्यानि शाखायामेतावन्तीह धारणा ॥
कल्पे पितृविधिश्चैव प्रवर्ग्यविधिरेव च ।
काठकानां विधिश्चैव कारीरीविधिरेव च ॥
अरुणाम्नायविधिश्चैव शतरुद्रविधिस्तथा ।
कल्पेषु च य आम्नाता मन्त्रास्तानप्यतन्द्रितः ॥
यथाव्रतमुपाकृत्य अधीयीतेति चोच्यते* ॥ इति ॥

वास आमन्त्र्योच्यते—हे वासः मारुतं मरुतां संबन्धि त्वमसि, मरुतां ओजो बलं त्वमसि; त्वदधीनबलत्वात्तेषाम् । अतोपां धारां भिन्धि पातय । यद्वा—अपां धारयितारं मेघं भिन्धि । लिङ्गव्यत्ययः । अपां धारयित्रीं वा मेघपङ्क्तिं भिन्धि ॥

पश्चाद्वातं प्रतिमीवाति निवर्तयति—रमयतेति जगत्या ॥ हे मरुतः रमयत उपरमयत निवर्तयत श्येनं श्येनगतिमपि पश्चाद्वातं निवर्तयत । यद्वा—उदकस्य श्यातारं अपगमयितारं तनूकर्तारं† वा आयिनं आगमनवन्तं आवन्तं[यान्तं] निवर्तयत । अथ तन्निवर्त्य अन्यं मनोजवसं महावेगं वृषणं वर्षितारमुदकस्य सुवृक्तिं

*काण्डानु–३अ. †स—निकर्तारं.

मनोजवसं वृषणꣳ सुवृक्तिम् । येन
शर्धं उग्रमवसृष्टमेति तदश्विना प-
रिं धत्तꣳ स्वस्ति । पुरोवातो वर्-
षञ्जिन्वरावृथ्स्वाहा वातावद्वर्षन्नुग्र-
रावृथ्स्वाहा स्तनयन्वर्षन्भीमरा-

वृषणम् । सुवृक्तिमिति सु—वृक्तिम् । येन । श-
र्धः । उग्रम् । अवसृष्टमित्यव—सृष्टम् । एति । तत् ।
अश्विना । परीति । धत्तम् । स्वस्ति । [3]पुरोवात
इति पुरः—वातः । वर्षन् । जिन्वः । आवृदित्या—
वृत् । स्वाहा । [4]वातावदिति वात—वत् । वर्षन् ।
उग्रः । आवृदित्या—वृत् । स्वाहा । [5]स्तनयन् ।
वर्षन् । भीमः । आवृदित्या—वृत् । स्वाहा ।

शोभनशक्तिं पुरोवातं रमयतेत्येव । सामर्थ्यात् प्रवर्तयतेत्यर्थस्य गतिः । यद्वा—श्येनं प्रशस्तगमनं आयिनं उदकानयनकुशलं मनोजवसं वृषणं शोभनशक्तिं च पुरोवातं रमयत प्रवर्तयत । सामर्थ्याद्विपरीतस्वभावं पश्चाद्वातं निवर्तयतेति गम्यते । एवं श्रुत्यर्थाभ्यां लब्धमुभयं ब्राह्मणं प्रतिपादयति 'पश्चाद्वातं प्रति मीवति पुरोवातमेव जनयति'* इति । येन प्रकारेण कृते शर्धः उदकं बलहेतुर्वा मरुतां बलकृतं वा । उग्रं उद्गूर्णं अवसृष्टं

*सं. २–४–९.

वृथ्स्वाहाऽनशान्यंवस्फूर्जन्दिद्युद्वर्ष-
न्त्वेषरावृथ्स्वाहाऽतिरात्रं वर्षन्पू-
र्तिरावृत् ॥ ११ ॥ स्वाहा बहु हा-
यमवृषादिति श्रुतरावृथ्स्वाहाऽऽतप-
ति वर्षन्विराडावृथ्स्वाहाऽवस्फू-

[6]अनशानि । अवस्फूर्जन्नित्यव-स्फूर्जन्न् । दिद्युत् । वर्षन्न् । त्वेषः । आवृदित्या-वृत् । स्वाहा । [7]अतिरात्रमित्यति-रात्रम् । वर्षन्न् । पूर्तिः । आवृदित्या-वृत् ॥ ११ ॥ स्वाहा । [8]बहु । ह । अयम् । अवृषात् । इति । श्रुतः । आवृदित्या-वृत् । स्वाहा । [9]आतपतीत्या-तपति । वर्षन्न् । विराडिति वि-राट् । आवृदित्या-वृत् । स्वाहा । [10]अवस्फूर्ज-

मुक्तं एति आगच्छति तथा रमयतेति । हे अश्विनौ युवामपि तदुदकं परिधत्तं परितो धारयतं स्वस्ति अविनाशार्थं लोकस्य उदकस्यैव वा अक्षयाय ॥

[3--10]वातनामानि जुहोति—पुरोवात इत्यष्टौ ॥ पुरोवातः पूर्वस्या दिशः आगतः पुरोवातो वर्षन् जिन्वः प्रीणयिता लोकस्य पुरोवातस्य प्रीणनत्वात् । जिवि प्रीणने, इदित्वान्नुम्, पचाद्यच्, छान्दसस्सांहितिकोस्य रेफः, उक्तं च प्रातिशाख्ये—'आवृत्परः'* इति ।

* तै. प्रा. ८-११.

जैन्दिद्युद्वर्षन्भूतरावृथ्स्वाहा मान्दा

न्नित्यव–स्फूर्जन्न् । दिद्युत् । वर्षन्न् । भूतः । आ-
वृदित्या–वृत् । स्वाहा । [11]मान्दाः । वाशाः । शु-

---

आवृत् आवर्तमानः अस्त्विति शेषः । आवर्ततामिति यावत् । स्वाहुतं चेदमस्तु तस्मा इति । वातावत् वातेन युक्तं वर्षम् । छान्दसं दीर्घत्वम् । उग्रं उद्गूर्णम् । आवृत्परण्यं [....त्परत्वा-द्रेफः] वातयुक्तस्योद्गूर्णत्वात् । समानमन्यत् । स्तनयन् शुष्कं गर्जन् वर्षन् भीमः भीतिहेतुः प्रजानां, तस्य तत्स्वभावत्वात्, अनशनि अविद्यमानाशनिपातं अवस्फूर्जन् अवसेचनेन शब्दयन् दिद्युत् दीप्तिमत् विद्युत्संबन्धेन प्रकाशयन् आयुधवानिव वर्तमानो वा । अत एव त्वेषः दीप्यमानः । अतिरात्रं रात्रिमप्यतीत्य सर्वमप्यहोरात्रं, न रात्रिमात्रम् । ‘अहस्सर्वैक’ इत्यच्समासान्तः । पूर्तिः पर्याप्तिमान् पूरयद्वा महीतलं सर्वम् । क्विच्* । बहु प्रभूतम् । हेत्यवधारणे । बह्वेवायमवृषात् अवर्षत् । देव इत्येवं श्रुतः सर्वविख्यातिं गच्छन् आतपति आतपे सति, ईषत्तपति वा सूर्ये वर्षन् विराट् प्रशस्ततया विराजमानः अवस्फूर्जन्दिद्युद्वर्ष-न्भूतः प्रभूतः सर्वलोकधारणक्षमः पुनःपुनरित्थं वर्षत्विति प्रतिपाद-नार्थं अवस्फूर्जन्नित्यादेः पुनराम्नानम् ॥

[11–13]अन्तर्वेदि कृष्णाजिने कृष्णेन मधुषा करीरसक्तून् संयौति— मान्दा वाशा इति तिसृभिः ॥ प्रथमा एकपदा गायत्री । परे द्वे द्विपदे गायत्र्यौ । मान्दादीत्येतान्यपां नामानि एकादश । सर्वाण्यप्यामन्त्रिताद्युदात्तानि, पूर्वपूर्वविद्यमानतया उत्तरोत्तरनिघाता-

---

*स–मक्ति च.

वाशाश्शुन्ध्यूरजिराः । ज्योतिष्मतीस्तमस्वरीरुन्दतीस्सुफेनाः । मित्रभृतः क्षत्रभृतस्सुराष्ट्रा इह माऽवत । वृष्णो अश्वस्य संदानन्ध्यूः । अजिराः । [12]ज्योतिष्मतीः । तमस्वरीः । उन्दतीः । सुफेना इति सु-फेनाः । [13]मित्रभृत इति मित्र-भृतः । क्षत्रभृत इति क्षत्र-भृतः । सुराष्ट्रा इति सु-राष्ट्राः । इह । मा । अवत । [14]वृष्णः । अश्वस्य । संदानमिति सं-दानम् ।

भावः । मन्दयन्ति मोदयन्ति प्रजा इति मान्दाः । पचाद्यच्, व्यत्ययेनानुपधाभूतस्याप्याकारस्य णिचि वृद्धिः । वाशयन्ति शब्दयन्ति प्रजा इति वाशाः । वाशृ शब्दे । वष्टेर्वा घञ् । काम्याः । शुन्ध्यूः शोधयित्र्यः । औणादिकः क्विप्रत्ययः, 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । अजिराः अजनशीलाः, जनन्यादिरूपेण परिणामात् । ज्योतिष्मत्यः सच्छायाः दुर्ज्ञानयाथात्म्याः । तमस्वरीः दौर्दिन्यकारिण्यः । उन्दत्यः क्लेदयित्र्यो भुवः । सुफेनाः अलङ्कारभूतफेनाः उपर्युपरि वर्धमानाः । मित्रभृतः दुःखात्त्रायकाणां ओषध्यादीनां भर्त्र्यः । क्षत्रभृतः बलस्य पोषयित्र्यः । सुराष्ट्राः शोभनराष्ट्रं कर्तुं समर्थाः । ईदृश्यो यूयं इहास्मिन् कर्मणि मामवत अविघ्नेन प्रवर्तयत । यद्वा—कर्मफलप्रदानेन मां तर्पयत ॥

[14]अथ कारीरसक्तून् तिस्रः पिण्डीः कृत्वा समुद्धृत्य कृष्णा-

मसि वृष्ट्यै त्वोपं नह्यामि ॥२०॥
देवां वसव्या अग्ने सोम सूर्य ।

असि । वृष्ट्यै । त्वा । उपेति । नह्यामि ॥ २० ॥

पूर्तिरावृद्धिचत्वारिꣳशच्च ॥ ७ ॥

[1]देवाः । वसव्याः । अग्ने । सोम । सूर्य ।

---

जिनस्यान्तान् कृष्णेन सन्दानेनोपनह्यति—वृष्ण इति ॥ वृष्णः वर्षितुरश्वस्य व्यापकस्य सन्दानं बन्धनमसि । अतो वृष्ट्यै वृष्ट्यर्थं त्वामुपनह्यामि बध्नामि, त्वयोपनह्यामि वा ॥

इति द्वितीये चतुर्थे सप्तमोनुवाकः.

---

[1]अथोत्करे प्रागीषं त्रिगधमनोवस्थितं भवति पादत्रयप्रतिष्ठितत्रिच्छदिष्कम् । तत्र तिसृषु गधासु त्रिभिर्मन्त्रैः प्रतिदिशमाबध्नाति पिण्डीः । तत्र पूर्वस्यां गधायां छदिष्कमपि कृष्णाजिनमाबध्नीयात् 'देवा वसव्याः' इति । तच्चाहोरात्रावसक्तं भवति। यदि वर्षेत् पिण्डीरेव जुहुयात्, यदि न वर्षेत् 'देवाश्शर्मण्याः' इति मध्यमायामाबध्नीयात्, तत्र चाहोरात्रावसक्तं भवति । यदि वर्षेत्पिण्डीरेव जुहुयात्, यदि न वर्षेत् 'देवास्सपीतयः' इति जघन्यायामाबध्नीयात्, अहोरात्रावसक्तं भवति । यदि वर्षेत्पिण्डीरेव जुहुयात्, यदि न वर्षेत् श्वोभूते धामच्छदादीनि त्रीणि

हवींषि निर्वपति । एते च त्रयः पङ्क्तिप्रकाराः । 'उद्रो दत्त' इत्यादिकं च त्रिष्टुबनुषज्यते । तत्र प्रथमः—हे देवाः वसव्याः । स्वार्थिको यत् । जगतां वासहेतवो वसवः, वसुसमूहो वा वसव्यं, तद्वन्तः । मत्वर्थीयो लुप्यते, 'वसोस्समूहे च' इति यत् । वृष्टिहेतुत्वेन वसुसमूहवन्तः वासयितारश्च प्रजानाम् । वसुभ्यो वा हिता वसव्याः, वसूनि धनानि । तेषु च कांश्चिद्दर्शयति— अग्ने, सोम, सूर्य एवमादयो हे वसव्याः देवा यूयं उद्र उदकं दत्त । पद्दन्नादिना उदकस्य उदन्भावः, पूर्ववत्कर्मणि षष्ठी, उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । तदर्थमुदधिं मेघं भिन्त विदारयत यथोदकं पतेत् । उदकं धीयतेऽस्मिन्निति उदधिः । 'कर्मण्यधिकरणे च' इति किः, 'पेषंवासवाहनधिषु च' इत्युदभावः, पूर्ववत्कर्मणि षष्ठी, उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । दिवः द्युलोकादन्तरिक्षात् पृथिव्याः । ल्यब्लोपे पञ्चमी । द्युलोकमन्तरिक्षं पृथिवीं च व्याप्य या वृष्टिः पर्जन्यात्प्रवर्तते तया वृष्ट्या नः अस्मान् अवत रक्षत तर्पयत वा । अत्र 'विभाषितं विशेषवचने बहुवचनम्' इति देवा इत्यस्याविद्यमानवत्त्वनिषेधाद्वसव्या इति निहन्यते, 'आमन्त्रितं पूर्वमविद्यमानवत्' इति द्वयोरामन्त्रितयोः अविद्यमानवत्त्वात् अग्ने इति न निहन्यते । अथ यदा 'अयने प्राणः' इतिवत् वचनविशेषेपि सामान्यविशेषभावमात्रेण सामानाधिकरण्यं भवति तदा उपात्तदेवविशेषत्वात् अग्न्यादीनां यद्यपि 'नामन्त्रिते समानाधिकरणे' इत्यविद्यमानवत्त्वप्रतिषेधात् अग्न इत्यस्यापि निघातः प्राप्नोति । तथापि 'विभाषितं विशेषवचने' इति पक्षे अविद्यमानवत्त्वान्निघाताभावः । पक्षे विद्यमानवत्त्वात् उत्तरयोः निघातः प्रवर्तते । ननु अग्ने इत्यनेन विशेषवचने व्यवधानं न स्यात् । नैष दोषः 'आम-

देवाश्शर्मण्या मित्रावरुणाऽर्यमन्न् ।
देवास्सपीतयोपां नपादाशुहेमन्न् ।
उद्नो दत्तोदधिं भिन्त दिवः पर्ज-
न्यादन्तरिक्षात्पृथिव्यास्ततो नो वृ-

[2]देवाः । शर्मण्याः । मित्रावरुणेति मित्रा-वरुणा । अर्यमन्न् । [3]देवाः । सपीतय इति स-पीतयः । अपाम् । नपात् । आशुहेमन्नित्याशु-हेमन्न् । उद्नः । दत्त । उदधिमित्युद-धिम् । भिन्त । दिवः । पर्जन्यात् । अन्तरिक्षात् । पृथिव्याः । ततः । नः ।

न्त्रितं पूर्वमविद्यमानवत् ' इति तस्याविद्यमानवत्त्वात्, तेन स्याद्व्यवधानम् ॥

[2]अथ द्वितीयः—देवाः शर्मण्याः शरण्याः शरणभावे साधवः शर्मणे सुखाय वा गृहाय वा गृहीताः । हे मित्रावरुणौ हे अर्यमन् । पूर्ववत्स्वरः । उद्नो दत्तेत्यादि समानम् ॥

[3]अथ तृतीयः—हे देवाः सपीतयः समानपानाः परस्परतः अस्माभिश्च सह हे अपां नपात् अपां चतुर्थ । ' सुबामन्त्रिते ' इति पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्यामन्त्रिताद्युदात्तत्वम् । हे आशुहेमन् शीघ्रगते । हि गतौ, ' अन्येभ्योपि दृश्यते ' इति मनिन् । प्रदर्शनार्थं द्वयोरुपादानम् । उद्नो दत्तेत्यादि । गतम्* ॥

* तै. सं. २-४-८,[1]

ष्ट्याऽवत । दिवा चित्तमः कृण्व-
न्ति पर्जन्येनोदवाहेन । पृथिवीं य-
द्व्युन्दन्ति । आ यं नरस्सुदानवो

वृष्ट्या । अवत । [4]दिवा । चित् । तमः । कृण्वन्ति । पर्जन्येन । उदवाहेनेत्युद–वाहेन । पृथिवीम् । यत् । व्युन्दन्तीति वि–उन्दन्ति । [5]एति । यम् । नरः । सुदानव इति सु–दानवः । ददाशुषे । दिवः ।

[4]पिण्डीर्जुहोति—दिवा चित् इत्यादिभिस्तिसृभिः ॥ प्रथमा गायत्री । द्वितीयाऽस्तारपङ्क्तिः, अयुजो द्वादशाक्षरत्वात् । तृतीया बृहती । तत्र प्रथमा—दिवा चित् दिवापि तमः दुर्दिनान्धकारं कृण्वन्ति कुर्वन्ति, किं पुनर्नक्तम्? पर्जन्येनोदवाहेन उदकस्य वाहकेन अनवरतवर्षिणा सह दिवाप्यन्धकारितमिव रोदोन्तरं दर्शयति घनपटलसंछादितदिगन्ता नक्तंदिनं वर्षयन्तीति यावत् । कदेति? आह—यत् । 'सुपां सुलुक्' इति सप्तम्या लुक् । यदा पृथिवीं व्युन्दन्ति विशेषेण क्लेदयन्ति । उन्दी क्लेदने । एते च पूर्वोक्ता अग्न्यादयो वक्ष्यमाणा मरुतो वा द्रष्टव्याः । अस्माकमप्येतद्वृष्टीः निवर्तयन्त्विति ॥

[5]अथ द्वितीया—आ यं नर इति ॥ नरः ऋत्विजः सुदानवः शोभनहविषां दातारः । दाशुषे यजमानाय हविषां दात्रे । तादर्थ्ये चतुर्थी । यजमानार्थं यं कोशं उदकस्याधारं मेघं दिवः द्युलोकात् अचुच्यवुः आच्यावयन्ति स्थानात् । यद्वा—दिवः आदित्यात् गृहीतं रश्मिषु नरो नेतारः मरुतः च्यावयन्ति ।

ददाशुषे दिवः कोशमचुच्यवुः । वि पर्जन्यास्सृजन्ति रोदसी अनु धन्वना यन्ति ॥ २१ ॥ वृष्टयः । उदीरयथा मरुतस्समुद्रतो यूयं वृष्टिं वर्षयथा पुरीषिणः । न वो दस्रा

कोशम् । अचुच्यवुः । वीति । पर्जन्याः । सृजन्ति । रोदसी इति । अन्विति । धन्वना । यन्ति ॥ २१ ॥ वृष्टयः । [6]उदिति । ईरयथ । मरुतः । समुद्रतः । यूयम् । वृष्टिम् । वर्षयथ । पुरीषिणः । न । वः । दस्राः । उपेति । दस्यन्ति । धेनवः । शुभम् । या-

ततः कोशात्पर्जन्या उदकं विसृजन्ति मुञ्चन्ति रोदसी अनु द्यावापृथिव्यौ लक्षयित्वा । विसर्जनानन्तरं धन्वना अनुदकेन देशेन । विभक्तिव्यत्ययो वा । निरुदके देशे । वृष्टयः वृष्टानि जलानि यन्ति नद्यो भूत्वा प्रवहन्ति । च्यवतेर्लेटि शपश्श्लुः, 'समवप्रविभ्यश्च' [' सिजभ्यस्तविदिभ्यश्च '] इति जुस् , 'जुसि च' इति गुणः, 'मन्त्रे वृष' इति वृषेः क्तिन उदात्तत्वम् ॥

[6]अथ तृतीया—हे मरुतः यूयं उदीरयथ प्रेरयथ वृष्टिं समुद्रतः समुन्दनात् मेघात् । ततो वर्षयथ पर्जन्यात् । हे पुरीषिणः उदकवन्तः, उदकेन हि सर्वं पूर्यते । न हि वः युष्मदीया धेनवः प्रीणनहेतवः अपः उपदस्यन्ति उपक्षीयन्ते, हे दस्राः दंसनशीलाः दानशीला वा । अतो वर्षयतेति । किंच—रथाः रंहणशीलाः यातां कालानुकूलप्रवृत्तां शुभं शोभाम् ।

उप॑ दस्यन्ति धे॒नव॒श्शुभ॑ं या॒ताम॒नु रथा॑ अवृत्सत । सृ॒जा वृ॒ष्टिं दि॒व आ॒द्भिस्स॑मु॒द्रं पृ॑ण । अ॒ब्जा अ॑सि

ताम् । अन्विति॑ । रथाः॑ । अ॒वृ॒त्स॒त । [7]सृ॒ज । वृ॒ष्टिम् । दि॒वः । एति॑ । अ॒द्भिरित्य॑त्-भिः । स॒मु॒द्रम् । पृ॒ण । [8]अ॒ब्जा इत्य॑प्-जाः । अ॒सि॒ । प्र॒थ-

संपदादिलक्षणाः क्विप् । अनुवर्तध्वम् । यद्वा—यातां गतिं शुभमनुवर्तध्वं सुष्ठु अविच्छेदं कुरुध्वम् । पूर्वप्रवृत्तमार्गं मा मुञ्चत, यस्मादिदानीमपि रंहणाः स्थ, तस्माच्छक्तत्वात्स्वभावो न त्याज्यः इति । वृतेः छान्दसे लुङि व्यत्ययेन क्सः, 'द्युद्भ्यो लुङि' इति व्यत्ययेन परस्मैपदम्, 'न वृद्भ्यश्चतुर्भ्यः' इतीडभावः ॥

[7]अथ कृष्णामामां कुम्भीमद्भिः पूरयति—सृजा वृष्टिमिति द्विपदया गायत्र्या ॥ आ इति प्रथमपादान्तः । सृज वृष्टिं दिवः द्युलोकात् द्योतनवतो मेघाद्वा, ततः अद्भिः समुद्रं तमेव समुन्दनं मेघं आवृण पूरय पुनःपुनर्वृष्ट्यर्थम् ॥

[8]अथ कृष्णां व्रीहिभिर्जुहोति—अब्जा असीति द्विपदया गायत्र्या ॥ अब्जा असीति अद्भ्यो जायत इति । 'जनसन' इति लिट्, 'विड्वनोरनुनासिकस्यात्' इत्याकारः । प्रथमजाश्चासि । प्रथमः प्रजापतिः तस्माज्जात इति । पूर्ववत्प्रत्ययः, आकारश्च । यथोक्तं—'राजन्यो मनुष्याणामविः पशूनाम्'* इति । बलमसि

* तै. सं. ७-१-१.

प्रथमजा बलमसि समुद्रियम् ।
उन्नम्भय पृथिवीं भिन्धीदं दिव्यं
नभः । उद्नो दिव्यस्य नो देहीशा-
नो वि सृजा दृतिम् । ये देवा दि-

मजा इति प्रथम-जाः । बलम् । असि । समुद्रि-
यम् । [9]उदिति । नम्भय । पृथिवीम् । भिन्धि ।
इदम् । दिव्यम् । नभः । उद्नः । दिव्यस्य । नः ।
देहि । ईशानः । वीति । सृज । दृतिम् । [10]ये ।
देवाः । दिविभागा इति दिवि-भागाः । ये । अ-

समुद्रियं समुद्रे मेघे भवम् । समुद्रात् अभ्रात् मेघतः ईदृशं बलहेतुरुदकं त्वमसि ईदृशोदकहेतुरासि ॥

[9]अथ वर्षाभूस्तम्भमभिजुहोति—उन्नम्भयेत्यनुष्टुभा ॥ हे वर्षाभूस्तम्भ उन्नम्भय उच्छ्वासय । नभिः गतिकर्मा, छान्दसो नुम् । पृथिवीं वृष्ट्या । तद्दर्शयति—इदं दिव्यं दिवि स्थितं नभः मेघं भिन्धि । नभेरसुनि नभः । गत्वरम् । तथा कृत्वा उद्नः उदकस्य दिव्यस्य नः अस्मभ्यं देहि । कर्मणस्सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । ईशानः उदकं दातुं समर्थः त्वं विसृज विमुञ्च दृतिं दृतिस्थानीयं मेघं क्षारय । 'द्व्यचोतस्तिङः' इति दीर्घत्वम् । पूर्ववदुदकस्योदन्भावः, उदात्तनिवृत्तिस्वरश्च । उद्न ईशान इति वा । 'अधीगर्थ' इति षष्ठी ॥

[10]अन्तर्वेदि तिष्ठन् कृष्णाजिनमवधूनोति—ये देवा इति जगत्या ॥

विभागा ये॑ऽन्तरि॑क्षभागा ये पृथिवि-
भागाः । त इमं यज्ञम॑वन्तु त इदं
क्षेत्रमा वि॑शन्तु त इदं क्षेत्रमनु वि
वि॑शन्तु ॥ २२ ॥

मारुतम॑सि मरुतामोज इति॑ कु-

न्तरि॑क्षभागा इत्यन्तरि॑क्ष–भागाः । ये । पृथिवि-
भागा इति॑ पृथिवि–भागाः । ते । इमम् । यज्ञ-
म् । अवन्तु । ते । इदम् । क्षेत्र॑म् । एति॑ । विश-
न्तु । ते । इदम् । क्षेत्रं॑म् । अनुं । वीति॑ ।
विशन्तु ॥ २२ ॥

यन्ति देवा विꣳशतिश्च॑ ॥ ८ ॥

[1]मारुतम् । असि । मरुताम् । ओजः । इति॑ ।

---

षट्पदया ॥ ये देवा दिविभागाः दिवि भागो येषाम् । 'हल-दन्तात्' इति सप्तम्या अलुक् । ये अन्तरिक्षभागाः, ये च पृथिवीभागाः ते सर्वे इमं यज्ञं अवन्तु रक्षन्तु फलप्रदानसमर्थं कुर्वन्तु । ते इदं क्षेत्रमाविशन्तु वर्षरूपेण विशन्तु, वर्षितृरूपेण वा परिगृह्णन्तु, ते इदं क्षेत्रं अनुविविशन्तु ओषध्यादिरूपेण व्याप्य तिष्ठन्तु, मा कदाचिदपीदं शुष्कं भूत् ॥

इति द्वितीये चतुर्थे अष्टमोनुवाकः.

---

[1]अथ 'मारुतमसि'* इत्यादीनां कारीरीमन्त्राणां ब्राह्मणम्–

---

*तै. सं. २-४-७.

ष्णं वासः कृष्णतूषं परि धत्त एतद्वै
वृष्ट्यै रूपꣳ सरूप एव भूत्वा पर्ज-
न्यं वर्षयति रमयत मरुतश्श्येन-
मायिनमिति पश्चाद्वातं प्रति मीव-
ति पुरोवातमेव जनयति वर्षस्या-

कृष्णम् । वासः । कृष्णतूषमिति कृष्ण–तूषम् ।
परीति । धत्ते । एतत् । वै । वृष्ट्यै । रूपम् । सरू-
प इति स–रूपः । एव । भूत्वा । पर्जन्यम् ।
वर्षयति । रमयत । मरुतः । श्येनम् । आयिन-
म् । इति । पश्चाद्वातमिति पश्चात्–वातम् । प्रती-
ति । मीवति । पुरोवातमिति पुरः–वातम् । एव ।
जनयति । वर्षस्य । अवरुध्या इत्यव–रुध्यै ।

---

मारुतमसीत्यादि ॥ कृष्णतूषं कृष्णदशान्तं (उदकं) कृष्णं वासो यजमानः परिधत्ते । एतत्कृष्णं वासः वृष्ट्यै वृष्ट्या रूपं; ततश्च पर्जन्यसमानरूपो भूत्वा पर्जन्यं वर्षयति । रमयतेत्यादि । पश्चाद्वातं अपरस्यां दिशि आगच्छन्तं वातं प्रतिमीवति प्रतिनिवर्तयति वर्षप्रतिकूलमपि पुरोवातं पूर्वस्या दिश आगच्छन्तं वातं वर्षानुकूलं जनयत्येव । तस्य वर्षस्यावरुद्ध्यै भवति । मीव स्थौल्ये । प्रतिमीवति क्षीयमाणं करोतीति यावत् ॥

वरुध्यै वातनामानि जुहोति वायु-
र्वै वृष्ट्या ईशे वायुमेव स्वेन भा-
गधेयेनोप धावति स एवास्मै पर्ज-
न्यं वर्षयत्यष्टौ ॥ २३ ॥ जुहोति
चतस्रो वै दिशश्चतस्रोऽवान्तरदिशा
दिग्भ्य एव वृष्टिं सं प्र च्यावय-
ति कृष्णाजिने सं यौति हविरे-

[2]वातनामानीति वात–नामानि । जुहोति । वायुः । वै । वृष्ट्याः । ईशे । वायुम् । एव । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । सः । एव । अस्मै । पर्जन्यम् । वर्षयति । अष्टौ ॥ २३ ॥ जुहोति । चतस्रः । वै । दिशः । चतस्रः । अवान्तरदिशा इत्यवान्तर-दिशाः । दिग्भ्य इति दिक्–भ्यः । एव । वृष्टिम् । सम् । प्रेति । च्यावयति । कृष्णाजिन इति कृष्ण–अजिने । समिति । यौति । हविः । एद । अकः । अन्तर्वेदीत्यन्तः–वेदि ।

[2]वातनामानीति ॥ 'पुरोवातो वर्षन्'* इत्यादीन्यष्टौ । ईश इति । 'लोपस्त आत्मनेपदेषु' इति तलोपः । अष्टावित्यादि ।

*तै. सं. २-४-७,8–10

वाकरन्तर्वेदि सं यौत्यवरुध्यै य-
तीनामद्यमानाना शीर्षाणि प-
रापतन्ते खर्जूरा अभवन्तेषा
रस ऊर्ध्वोपतत्तानि करीराण्यभ-
वन्त्सौम्यानि वै करीराणि सौम्या
खलु वा आहुतिर्दिवो वृष्टिं च्या-
वयति यत्करीराणि भवन्ति॥२४॥

समिति । यौति । अवरुध्या इत्यव–रुध्यै ।
यतीनाम् । अद्यमानानाम् । शीर्षाणि । प-
रेति । अपतन् । ते । खर्जूराः । अभवन् ।
तेषाम् । रसः । ऊर्ध्वः । अपतत् । तानि ।
करीराणि । अभवन् । सौम्यानि । वै । क-
रीराणि । सौम्या । खलु । वै । आहुतिरि-
त्या–हुतिः । दिवः । वृष्टिम् । च्यावयति ।
यत् । करीराणि । भवन्ति ॥ २४ ॥ सौम्य-

गतम् । कृष्णाजिने संयौतीति । अन्तर्वेदि कृष्णाजिने मधुषा करीरसक्तून् संयौतीति । हविरेवाकः अकार्षीत् करोति । छा-न्दसो लुङ्, 'मन्त्रे घस' इति च्लेर्लुक् । अन्तर्वेदि संयवनं वर्षस्यावरोधनाय भवति । यतीनामिति । प्राणिनां यातयितारो रक्षोविशेषाः यतयः तेषां सालावृकैरद्यमानानाम् । यदाह—'इन्द्रो

सौम्ययैवाहुत्या दिवो वृष्टिमवं रु-
न्धे मधुषा सं यौत्यपां वा एष
ओषधीनाꣳ रसो यन्मध्वद्भ्य ए-
वौषधीभ्यो वर्षत्यथो अद्भ्य ए-
वौषधीभ्यो वृष्टिं नि नंयति मा-

या । एव । आहुत्येत्या–हुत्या । दिवः । वृ-
ष्टिम् । अवेति । रुन्धे । [3]मधुषा । समिति ।
यौति । अपाम् । वै । एषः । ओषधीनाम् ।
रसः । यत् । मधु । अद्भ्य इत्यत्–भ्यः ।
एव । ओषधीभ्य इत्योषधि–भ्यः । वर्षति ।
अथो इति । अद्भ्य इत्यत्–भ्यः । एव ।
ओषधीभ्य इत्योषधि–भ्यः । वृष्टिम् । नीति ।
नयति । [4]मान्दाः । वाशाः । इति । समि-

यतीन् सालावृकेभ्यः '* इत्यादि । खर्जूराः महातालाः तत्फलानि करीराणि । सौम्यानीति । रसपरिणामत्वात् । सौम्येति । सौम्यैव हि दिवो वृष्टिं च्यावयितुं शक्नोति । गतमन्यत् ॥

[3]मधुषेति ॥ कृष्णेन । मधुशब्दपर्यायो मधुश्शब्दः उसिप्रत्ययान्तः । अद्भ्य ओषधीभ्यश्च हेतुभ्यः वृष्टिं प्रवर्तयति मधुषा संयवनेन । अथो इति । अपि च अद्भ्य ओषधीभ्योपि उपादानेभ्यः वृष्टिमुत्पादयति ॥

[4]नामधेयैरिति ॥ मान्दादिभिरेकादशभिः । अच्छैति आभि-

* तै. सं. ६-२-७.

न्दा वाशा इति सं यौति ना-
मधेयैरेवैना अच्छैत्यथो यथा ब्रू-
यादसावेहीत्येवमेवैना नामधेयैरा॥
२५॥ च्यावयति वृष्णो अश्वस्य
संदानमसि वृष्ट्यै त्वोप नह्यामी-

ति। यौति। नामधेयैरिति नाम-धेयैः।
एव। एनाः। अच्छ। एति। अथो इति।
यथा। ब्रूयात्। असौ। एति। इहि। इति।
एवम्। एव। एनाः। नामधेयैरिति नाम-
धेयैः। एति॥ २५॥ च्यावयति। [5]वृष्णः।
अश्वस्य। संदानमिति सं-दानम्। असि।
वृष्ट्यै। त्वा। उपेति। नह्यामि। इति।

मुख्येन प्राप्नोति अभिमन्त्रणेनाभिमुख्यकरणात्। अथो इति। असाविति। नामविशेषार्थं सामान्यपदम्। यथा कश्चिदामन्त्रयमाणो ब्रूयात् दत्त एहि गुप्त एहि इति एवमेवापोपि नामधेयैरात्मसमीपे आगमयति॥

[5]वृष्ण इति॥ तिस्रः पिण्डीः कृत्वा समुच्चित्यानेन मन्त्रेण कृष्णाजिनस्यान्तान् सन्दानेनोपनह्यति। वृषेति। वर्षिता अश्वः पर्जन्यो वा वर्षिता। तस्माद्वृषत्वेन पर्जन्यसदृशाश्वसंकीर्तनं वृष्ट्यै

त्याह वृषा वा अश्वो वृषा प- र्जन्यः कृष्ण इव खलु वै भूत्वा वर्षति रूपेणैवैनꣳ समर्धयति व- र्षस्यावरुध्यै ॥ २६ ॥

देवा वसव्या देवाश्शर्मण्या दे-

आह । वृषा । वै । अश्वः । वृषा । पर्ज- न्यः । कृष्णः । इव । खलु । वै । भूत्वा । वर्षति । रूपेण । एव । एनम् । समिति । अर्धयति । वर्ष- स्य । अवरुध्या इत्यव—रुध्यै ॥ २६ ॥

अष्टौ भवन्ति नामधेयैरैकान्न त्रिꣳशच्च ॥१॥

देवाः । वसव्याः । देवाः । शर्मण्याः । देवाः । सपीतय इति स—पीतयः । इति ।

भवति । किञ्च—कृष्ण इव भूत्वा पर्जन्यो वर्षति । तस्मात्कृष्णाजिनसम्बन्धः रूपसमृद्ध्या वृष्टिहेतुर्भवति ॥

इति द्वितीये चतुर्थे नवमोनुवाकः.

[1]'देवा वसव्याः'* इत्यादिभिः त्रिभिर्मन्त्रैः तिसृषु गधासु त्रिषु दिनेषु अन्वहमाबध्नाति पिण्डीः । यदि वर्षेदिति । तत्रान्वहमिति वचनात् त्रिषु दिनेषु पिण्डीहोमः । श्वोभूते चतुर्थेऽहनि हविर्नि-

* तै. सं. २-४-८.

वास्सपीतय इत्या बध्नाति देवता-
भिरेवान्वहं वृष्टिमिच्छति यदि व-
र्षेत्तावत्येव होतव्यं यदि न व-
र्षेच्छ्वो भूते हविर्निर्वपेदहोरात्रे
वै मित्रावरुणावहोरात्राभ्यां खलु

एति । बध्नाति । देवताभिः । एव । अन्व-
हमित्यनु-अहम् । वृष्टिम् । इच्छति । यदि ।
वर्षेत् । तावति । एव । होतव्यम् । यदि ।
न । वर्षेत् । श्वः । भूते । हविः । नि-
रिति । वपेत् । अहोरात्रे इत्यहः-रात्रे । वै ।
मित्रावरुणाविति मित्रा-वरुणौ । अहोरात्राभ्या-
मित्यहः-रात्राभ्याम् । खलु । वै । पर्जन्यः ।

र्वपेत् । तत्रायं क्रमः—यदि प्रथमे दिने वर्षेत् तावति तस्मि-
न्नेवाहनि होतव्यं पिण्डीलक्षणं हविः । अथ यदि तत्र न व-
र्षेत् द्वितीये दिने मध्यमायां कृष्णाजिनमाबध्नीयात् । यदि
तस्मिन् दिने वर्षेत् तावत्येव होतव्यम् । यदि तस्मिन्नपि न
वर्षेत् तृतीये दिने तृतीयस्यां कृष्णाजिनमाबध्नीयात् । यदि
तस्मिन् दिने वर्षेत्, यदि च न वर्षेत् उभयथापि तृतीये दिने
पिण्डीर्जुहुयात् । अथ यदि न वर्षेत् श्वोभूते चतुर्थेऽह्नि प्राप्ते
हविर्निर्वपेत् । हविरिति जातावेकवचनम् । धामच्छदादीनि त्रीणि
हवींषि निर्वपेत् कृष्णानां व्रीहीणाम् । अहोरात्र इत्युक्तं एकै-

वै पर्जन्यो वर्षति नक्तं वा हि दिवा वा वर्षति मित्रावरुणावेव स्वेन भागधेयेनोप धावति तावे-वास्मै ॥ २७ ॥ अहोरात्राभ्यां पर्जन्यं वर्षयतोऽग्नये धामच्छदे पुरोडाशमष्टाकपालं निर्वपेन्मारु-

वर्षति । नक्तम् । वा । हि । दिवा । वा । वर्षति । मित्रावरुणाविति मित्रा-वरुणौ । एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । तौ । एव । अस्मै॥२७॥ अहोरात्राभ्यामित्यहः-रात्राभ्याम् । पर्जन्यम् । वर्षयतः । [2]अग्नये । धामच्छद इति धाम-छदे । पुरोडाशम् । अष्टाकपालमित्यष्टा-क-पालम् । निरिति । वपेत् । मारुतम् । सप्तक-

कस्यां गधायामहोरात्रावसक्तं भवति । सति वर्षे तत्रैव तत्रैव होमः, असति श्वोभूते हविर्निर्वप्तव्यमिति । तत्राहोरात्रावसक्ते वृष्टिहेतुत्वं तावत्समर्थयते—नक्तं वा दिवा वा अहोरात्राभ्यामेव पर्जन्यो वर्षति । तयोश्च मित्रावरुणात्मकत्वात् तावेव पर्जन्यं वर्षयतः, अहोरात्रावसञ्जनलक्षणस्वभागोपहृतत्वात् ॥

[2]अथ हवींषि विदधाति—अग्नये धामच्छद इत्यादि ॥ धामानि

तꣳ सप्तकपालꣳ सौर्यमेककपाल-
मग्निर्वा इतो वृष्टिमुदीरयति मरुतः
स्सृष्टां नयन्ति यदा खलु वा असा-
वादित्यो न्यङ्रश्मिभिः पर्यावर्ततेऽथ
वर्षति धामच्छदिव खलु वै भूत्वा
वर्षत्येता वै देवता वृष्ट्या ईशते

पालमिति सप्त-कपालम् । सौर्यम् । एकक-
पालमित्येक-कपालम् । अग्निः । वै । इतः ।
वृष्टिम् । उदिति । ईरयति । मरुतः । सृ-
ष्टाम् । नयन्ति । यदा । खलु । वै । असौ ।
आदित्यः । न्यङ् । रश्मिभिरिति रश्मि-भिः ।
पर्यावर्तत इति परि-आवर्तते । अथ । वर्-
षति । धामच्छदिति धाम-छत् । इव ।
खलु । वै । भूत्वा । वर्षति । एताः । वै । दे-
वताः । वृष्ट्याः । ईशते । ताः । एव । स्वेन ।

स्थितानि तेजांसि वा छादयति वृष्टिकाल इति धामच्छत् । 'बहुलं संज्ञाछन्दसोः' इति णिलुक् । अग्निर्वा इति । आहुतिद्वारेण अग्निर्वृष्टिमुदकं उदीरयति ऊर्ध्वं गमयति आदित्यं प्रापयति, तस्मादग्नये निरुप्यते । तां वृष्टिं सृष्टां अवसृष्टां मरुतो

ता एव स्वेन भागधेयेनोपं धावति ताः ॥२८॥ एवास्मै पर्जन्यं वर्षयन्त्युतावंर्षिष्यन्वर्षत्येव सृजा वृष्टिं दिव आद्भिस्समुद्रं पृणेत्याहेमाश्चैवामूश्चापस्समर्धयत्यथो आभिरेवामर-

भागधेयेनेति भाग-धेयेन । उपेति । धावति । ताः ॥ २८ ॥ एव । अस्मै । पर्जन्यम् । वर्षयन्ति । उत । अवंर्षिष्यन्न् । वर्षति । एव । [3]सृज । वृष्टिम् । दिवः । एति । अद्भिरित्यत्-भिः । समुद्रम् । पृण । इति । आह । इमाः । च । एव । अमूः । च । अपः । समिति । अर्धयति । अथो इति । आभिः । एव । अमूः । अच्छं । एति ।

नयन्ति देशान्तरं प्रापयन्ति, तस्मान्मरुद्भ्यो निरुप्यते । यदा खल्वादित्यो रश्मिभिः न्यङ् अवाक्प्रवृत्तिः पर्यावर्तते इतोमुखं प्रवर्तते अथ वर्षिष्ठरश्मिषु पक्वमुदकं पर्जन्यस्स्रावयति, तस्मात्सूर्याय निरुप्यते इति । अनेन त्रिहविष्केण यागेन पर्जन्यो धामच्छदिव भूत्वा वर्षति भूयिष्ठं वर्षतीति यावत् । एता वा इत्यादि । गतम् ॥

[3]कुम्भीमद्भिः पूरयति—सृजा वृष्टिमिति ॥ इमा भूमिष्ठाः अमूः दिविष्ठाः मेघस्था वा अपस्समृद्धाः करोति । अपि चाभिरेव

च्छैत्यब्जा असि प्रथमजा बलमसि समुद्रियमित्याह यथायजुरेवैतदुन्नम्भय पृथिवीमिति वर्षाह्वां जुहोत्येषा वा ओषधीनां वृष्टिवनिस्तयैव वृष्टिमा च्यावयति ये देवा दि-

अब्जा इत्यप्-जाः । असि । प्रथमजा इति प्रथम-जाः । बलम् । असि । समुद्रियम् । इति । आह । यथायजुरिति यथा-यजुः । एव । एतत् । [4]उदिति । नम्भय । पृथिवीम् । इति । वर्षाह्वामिति वर्ष-ह्वाम् । जुहोति । एषा । वै । ओषधीनाम् । वृष्टिवनिरिति वृष्टि-वनिः । तया । एव । वृष्टिम् । एति । च्यावयति । ये । देवाः । दिवि-

करणभूताभिः अमूः आभिमुख्येन प्राप्नोति सृजा वृष्टिमिति वचनात् वर्षेण इमास्समृद्धा भवन्ति । आभिरद्भिस्समृद्धस्य मेघस्थस्य उदकस्यापूरणात् अमूस्समृद्धा भवन्ति । अब्जा इति । अविमभिजुहोति । यथायजुरिति । मेघोदकस्य बलहेतुस्त्वमसीत्येतत् यथायजुर्भवत्येव ॥

[4]उन्नम्भयेति ॥ वर्षं आह्वयतीति वर्षाह्वः । क्विपि सम्प्रसारणं, सांहितिकं पूर्वपदस्य दीर्घत्वं छान्दसं, कृदुत्तरपदस्य प्रकृतिस्वरत्वे ‘उदात्तयणः’ इति विभक्तेरुदात्तत्वम् । पुनर्नविको-

विभांगा इतिं कृष्णाजिनमवं धूनो-
तीम एवास्मैं लोकाः प्रीता अभी-
ष्टां भवन्ति ॥ २९ ॥
सर्वांणि छन्दाꣳस्येतस्यामिष्ट्यांम-

भांगा इतिं दिवि—भागाः । इतिं । कृष्णाजिन-मितिं कृष्ण—अजिनम् । अवेतिं । धूनोति । इमे। एव । अस्मैं । लोकाः । प्रीताः । अभीष्टा इत्यभि—इष्टाः । भवन्ति ॥ २९ ॥

अस्मै धावति ता वा एकविꣳशतिश्च ॥१०॥

[1]सर्वांणि । छन्दाꣳसि । एतस्याम् । इष्ट्याम् ।

च्यते—वृष्टिवनिरिति । ओषधीनां मध्ये एषा वृष्टेः संविभक्तिः । ‘छन्दसि वनसन’ इतीन्प्रत्ययः । गतमन्यत् ॥

इति द्वितीये चतुर्थे दशमोनुवाकः.

[1]सर्वाणि छन्दांसीत्यादि ॥ अस्ति त्रैधातवीयेष्टिः । तां विधास्यन् प्रथमं तद्गतान् कांश्चिद्विशेषान्विदधाति । तस्यामिष्ट्यां सामिधेनीषु सर्वाणि छन्दांसि अनूच्यानीति यज्ञविद आहुः । वचेः छान्दसः क्विप् । तत्कथमित्याह—त्रिष्टुभ इत्यादि । ककुन्नाम

नूच्यानीत्याहुस्त्रिष्टुभो वा एतद्वीर्यं
यत्ककुदुष्णिहा जगत्यै यदुष्णिहक-
कुभावन्वाह तेनैव सर्वाणि छन्दाꣳ-
स्यव रुन्धे गायत्री वा एषा यदु-

अनूच्यानीत्यनु–उच्यानि । इति । आहुः । त्रिष्टुभः । वै । एतत् । वीर्यम् । यत् । ककुत् । उष्णिहा । जगत्यै । यत् । उष्णिहककुभावित्युष्णिह–ककुभौ । अन्वाहेत्यनु–आह । तेन । एव । सर्वाणि । छन्दाꣳसि । अवेति । रुन्धे । [2]गायत्री । वै । एषा । यत् । उष्णिहा । यानि । चत्वारि । अधीति ।

त्रिष्टुभो वीर्यं वीर्यपरिणामः कार्यं इत्यर्थः । उष्णिहा नाम जगत्या वीर्यम् । उष्णिक्पर्याय उष्णिहाशब्दः । तस्मादुष्णिहककुभोर्यदनुवचनं लोके समिध्यमानवतीसमिद्धवत्योर्मध्ये निधानं तेन सर्वच्छन्दोवरोधः । प्रकृति गायत्रीं, वैकृत्यौ चोष्णिक्ककुभौ तत्कारणे च त्रिष्टुब्जगत्याविति । तत्र 'प्र सो अग्ने तवोतिभिः'* 'प्र होत्रे पूर्व्यं वचः'* इत्येते उष्णिक्ककुभौ वेदितव्ये । तत्र प्रथमा ककुप्, मध्यमस्य पादस्य द्वादशाक्षरत्वात् । द्वितीया परोष्णिक्, तृतीयस्य पादस्य द्वादशाक्षरत्वात् । अत्र ककुदुष्णिहाविति वक्तव्ये उष्णिह ककुभाविति विपर्यासश्छान्दसः ॥

[2]गायत्री वा इत्यादि ॥ गायत्री वैषेयमुष्णिक्त्वादुष्णिग्ग्रहण-

* तै. सं. ३–२–११[1–2]

ष्णिहा यानि चत्वार्यध्यक्षराणि च-
तुष्पाद एव ते पशवो यथा पुरोडा-
शे पुरोडाशोऽध्येवमेव तद्यदृच्यध्य-

अक्षराणि । चतुष्पाद इति चतुः—पादः । एव । ते । पशवः । [3]यथा । पुरोडाशे । पुरोडाशः । अधीति । एवम् । एव । तत् । यत् । ऋचि । अधी-

मेव कृतम् । तत्र चतुर्विंशत्यक्षरा गायत्री, अष्टाविंशत्यक्षरोष्णिक्, तत्कथमनयोरेकत्वमित्यत आह—यानीति । अयमभिप्रायः—गायत्र्या एव पशुसाधनं रूपं यदुष्णिङ्नाम, तस्माद्यानि चत्वार्यक्षराणि अभ्यधिकानि तानि चतुष्पादः पशवः । तद्धेतुत्वात्ताच्छब्द्यम् । तस्मादुष्णिक्प्रवेशव्याजेन गायत्रीमेव प्रकृतिं पशुसाधनभूतां कुर्म इति ॥

[3]एवं सर्वच्छन्दोवरोधहेतुत्वेन पशुलाभहेतुत्वेन च उष्णिक्ककुभोः प्रवेशं स्तुत्वा इदानीमिष्टिस्वभावसुलभं चेदमक्षराधिक्यमिति दृष्टान्तेन दर्शयति—यथेति ॥ 'उत्तरउत्तरो ज्यायान् भवति'* इति यथा पुरोडाशे प्रथमे अध्युपरि मध्यमः, तस्मिन्नपि तृतीयो भवति, एवमेवैतद्द्रष्टव्यं, यदृचि गायत्र्यामध्युपरि चत्वार्यक्षराणि भवन्ति । यद्वा—पुरोडाशे पुरोडाशान्तरमधिकप्रमाणं तिष्ठति तद्वदिदमृचि गायत्र्या अधिकाक्षरा उष्णिक्त्रिष्टुबिति ॥

* तै. सं. २-४-११.९

क्षराणि यज्जगत्या ॥ ३० ॥ परि-
दध्यादन्तं यज्ञं गमयेत्त्रिष्टुभा परि
दधातीन्द्रियं वै वीर्यं त्रिष्टुगिन्द्रिय
एवं वीर्ये यज्ञं प्रतिष्ठापयति नान्तं
गमयत्यग्ने त्री ते वाजिना त्रीषध-

ति । अक्षराणि । [4]यत् । जगत्या ॥ ३० ॥
परिदध्यादिति परि-दध्यात् । अन्तम् । यज्ञम् ।
गमयेत् । त्रिष्टुभा । परीति । दधाति । इन्द्रियम् ।
वै । वीर्यम् । त्रिष्टुक् । इन्द्रिये । एव । वीर्ये । य-
ज्ञम् । प्रतीति । स्थापयति । न । अन्तम् । गम-
यति । अग्ने । त्री । ते । वाजिना । त्री । सधस्थे-
ति सध-स्था । इति । त्रिवत्येति त्रि-वत्या । परी-

[4]यज्जगत्येति ॥ उक्तं जगत्या वीर्यमुष्णिगिति । उक्तं च 'गायत्री वा एषा यदुष्णिहा '* इति । तस्मादेवं जगतीभाववत्या 'आ जुहोत '† इति गायत्र्या परिधानं यज्ञस्य मध्ये अन्तर्गमनाय नाशाय स्यात् जगत्याः छन्दसामन्त्यत्वात् । यद्वा—गायत्र्येव वर्धमानाक्षरा उष्णिहादिभावमापद्यमाना उपर्युपरि गच्छतीति जगतीत्युच्यते । त्रिष्टुगिति । 'अग्ने त्री ते वाजिना ' इत्येतया । त्रिवत्येति । त्रिष्टुबन्तराद्वैलक्षण्यमस्यां दर्शयति । 'छन्दसी रः ' इति मतुपोवत्वम् । सरूपत्वायेति । त्रित्वान्वयात्त्रैधातवीयं सारूप्यमिति ॥

* तै. सं. २-४-११.[2] † तै. ब्रा. ३-५-२.

स्थेति त्रिवृत्या परि दधाति सरूप-
त्वाय सर्वो वा एष यज्ञो यत्त्रैधातवी-
यं कामायकामाय प्र युज्यते सर्वेभ्यो
हि कामेभ्यो यज्ञः प्रयुज्यते त्रैधा-
तवीयेन यजेताभिचरंथ्सर्वो वै

ति । दधाति । सरूपत्वायेति सरूप-त्वाय । सर्वः । वै । एषः । यज्ञः । यत् । त्रैधातवीयम् । कामायकामायेति कामाय-कामाय । प्रेति । युज्यते । सर्वेभ्यः । हि । कामेभ्यः । यज्ञः । प्रयुज्यत इति प्र-युज्यते । त्रैधातवीयेन । यजेत । अभिचरन्नित्यभि-चरन् । सर्वः । वै ॥ २१ ॥ एषः ।

सर्वो वा इत्यादि ॥ त्रैधातवीयाख्यं यदिदं कर्म एष सर्वो यज्ञः सर्वयज्ञतुल्य इति यावत् । 'यत्त्रिः प्रायच्छत्त्रिः प्रत्यगृह्णात्'* इति त्रिषु लोकेषु भवत [वतोः] इन्द्राविष्णवोस्सम्बन्धी वीर्यविशेषः त्रैधातवः । तत्प्राप्तिहेतुत्वेन तत्सम्बन्धि कर्म त्रैधातवीयमिष्टिलक्षणम् । कामायकामाय सर्वस्मै कामाय स्वर्गपशुप्रजादिकामाय प्रयुज्यते । हेतुमाह—सर्वेभ्यो हीति । सामान्यविवक्षयैकवचनम् । सर्वकामसम्पत्तिः यज्ञैर्भवति । यश्च यागस्सर्वयज्ञात्मा तस्मात्सर्वेभ्यः कामेभ्यः प्रयोक्तव्य इति ॥

*सं. २-४-१२.

॥ ३१ ॥ एष यज्ञो यत्त्रैधातवीयꣳ सर्वेणैवैनं यज्ञेनाभि चरति स्तृणुत एवैनमेतयैव यजेताभिचर्यमाणस्सर्वो वा एष यज्ञो यत्त्रैधातवीयꣳ सर्वेणैव यज्ञेन यजते नैनमभिचरꣳस्तृणुत एतयैव यजेत सहस्रेण

यज्ञः । यत् । त्रैधातवीयम् । [6]सर्वेण । एव । एनम् । यज्ञेन । अभीति । चरति । स्तृणुते । एव । एनम् । एतया । एव । यजेत । अभिचर्यमाण इत्यभि-चर्यमाणः । सर्वः । वै । एषः । यज्ञः । यत् । त्रैधातवीयम् । सर्वेण । एव । यज्ञेन । यजते । न । एनम् । अभिचरन्नित्यभि-चरन् । स्तृणुते । [7]एतया । एव । यजेत । सहस्रेण । य-

---

[6]सर्वेणैवैनमिति ॥ अस्य सर्वयज्ञात्मकत्वादनेन यजमानः सर्वेणाभिचारिकेण यज्ञेन एनमभिचरितव्यमभिचरति । तत एनं स्तृणुते हिनस्त्येव । सर्वेणैवेति । अस्य सर्वयज्ञात्मकत्वात् सर्वेणाभिचारादिदोषनिघातार्थेनापि यज्ञेनायं यजमानो भवति । तत एनं अभिचरन् न स्तृणुते ॥

[7]प्रजातमिति ॥ प्रजातं सन्तानवत् अविच्छिन्नमेव सहस्रं ददाति । उत्तरोत्तरप्रभूतमिति यावत् । सर्वयज्ञत्वेनास्य धना-

यक्ष्यमाणः प्रजातमेवैनं ददात्येतयै-
व यजेत सहस्रेणेजानोन्तं वा एष
पशूनां गच्छति ॥३२॥ यस्सहस्रेण
यजते प्रजापतिः खलु वै पशूनं-
सृजत ताꣳस्त्रैधातवीयेनैवासृजत य
एवं विद्वाꣳस्त्रैधातवीयेन पशुकामो
यजते यस्मादेव योनेः प्रजापतिः
पशूनसृजत तस्मादेवैनांथ्सृजत उ-

क्ष्यमाणः । प्रजातमिति प्र-जातम् । एव । एन-त् । ददाति । एतया । एव । यजेत । सहस्रेण । ईजानः । अन्तम् । वै । एषः । पशूनाम् । गच्छ-ति ॥ ३२ ॥ यः । सहस्रेण । यजते । प्रजापति-रिति प्रजा-पतिः । खलु । वै । पशून् । असृजत । तान् । त्रैधातवीयेन । एव । असृजत । यः । ए-वम् । विद्वान् । त्रैधातवीयेन । पशुकाम इति पशु-कामः । यजते । यस्मात् । एव । योनेः । प्रजापतिरिति प्रजा-पतिः । पशून् । असृजत । तस्मात् । एव । एनान् । सृजते । उपेति । एनम् ।

भिवृद्धिहेतुत्वात् । ईजान इति । इष्टवान् सहस्रेण पशूनामन्तं

पैनमुत्तरꣳ सहस्रं नमति देवताभ्यो वा एष आ वृश्चते यो यक्ष्य इत्युक्त्वा न यजते त्रैधातवीयेन यजेत सर्वो वा एष यज्ञः ॥ ३३ ॥ यत्त्रैधातवीयꣳ सर्वेणैव यज्ञेन यजते न देवताभ्य आ वृश्चते द्वादशक-

उत्तरमित्युत्–तरम् । सहस्रम् । नमति । [8]देवताभ्यः । वै । एषः । एति । वृश्चते । यः । यक्ष्ये । इति । उक्त्वा । न । यजते । त्रैधातवीयेन । यजेत । सर्वः । वै । एषः । यज्ञः ॥ ३३ ॥ यत् । त्रैधातवीयम् । सर्वेण । एव । यज्ञेन । यजते । न । देवताभ्यः । एति । वृश्चते । [9]द्वादशकपाल इति

---

समाप्तिं गच्छति । अपशुरेव स्यात् । यस्मादिति । त्रैधातवीयेनोत्सृजते । उपैनमुत्तरमिति । यागप्रभावात्सहस्रान्तरमेनमुपनमति ॥

[8]यो यक्ष्य इत्युक्त्वेति ॥ यज्ञार्थं कृतसंकल्पः तेन यज्ञेन अनिष्टवानपि सर्वयज्ञात्मकेनानेन यजमानः तेनापीष्टवान् भवति । तस्मादयागदोषाभावात् देवताभ्यो न वृश्चते न हीयते ॥

[9]द्वादशकपाल इति ॥ चतुरो मुष्टीन् व्रीहीणां निरुप्य चतुरो यवानां निरुप्य पुनश्चतुरो व्रीहीणां निर्वपेत् । गार्हपत्ये द्वाद-

पालः पुरोडाशो भवति ते त्रयश्चतु-
ष्कपालास्त्रिष्षमृद्धत्वाय त्रयः पुरो-
डाशा भवन्ति त्रय इमे लोका एषां
लोकानामाप्त्या उत्तरउत्तरो ज्यायां-
न्भवत्येवमिव हीमे लोका यवमयो
मध्य एतद्वा अन्तरिक्षस्य रूपꣳ
समृद्ध्यै सर्वेषामभिगमयन्नवं द्य-

द्वादश–कपालः । पुरोडाशः । भवति । ते । त्रयः । चतुष्कपाला इति चतुः–कपालाः । त्रिष्षमृद्धत्वायेति त्रिष्षमृद्ध–त्वाय । त्रयः । पुरोडाशाः । भवन्ति । त्रयः । इमे । लोकाः । एषाम् । लोकानाम् । आप्त्यै । उत्तरउत्तर इत्युत्तरः–उत्तरः । ज्यायान् । भवति । एवम् । इव । हि । इमे । लोकाः । यवमय इति यव–मयः । मध्ये । एतत् । वै । अन्तरिक्षस्य । रूपम् । समृद्ध्या इति सं–ऋद्ध्यै । सर्वेषाम् । अभिगमयन्नित्यभि–गमयन् । अवेति ।

शकपालान्युपदधाति । सर्वत्रेन्द्राविष्णुभ्यामेव निर्वापादि । ते त्रय इति । अवगुत्य सङ्ख्यास्तुतिः । त्रिष्षमृद्धत्वं तिसृभिरावृत्तिभिर्योगः । त्रैधातवीयानुरूपत्वम् । त्रय इति । उपर्युपर्यवस्थिताः । उत्तरउत्तरः पूर्वस्मात्पूर्वस्माज्ज्यायान् वृद्धतरः ।

त्यछंम्बट्कारꣳ हिरण्यं ददाति तेज

एव॥ ३४॥ अव रुन्धे तार्प्यं ददा·

ति पशूनेवाव रुन्धे धेनुं ददात्याशिष

एवाव रुन्धे साम्नो वा एष वर्णो

यद्धिरण्यं यजुषां तार्प्यमुकथामदा-

द्यति । अछंम्बट्कारमित्यछंम्बट्—कारम् । [10]हिर-
ण्यम् । ददाति । तेजः । एव ॥ ३४ ॥ अवेति ।
रुन्धे । तार्प्यम् । ददाति । पशून् । एव । अवेति।
रुन्धे । धेनुम् । ददाति । आशिष इत्या—शिषः ।
एव । अवेति । रुन्धे । साम्नः । वै । एषः । वर्णः।
यत् । हिरण्यम् । यजुषाम् । तार्प्यम् । उकथाम-

इमे खलु लोकाः पृथिव्यादयः उत्तरमुत्तरं ज्यायांसः । यवमय इति । 'द्व्यचश्छन्दसि' इति विकारे मयट् । एतद्वा इति । यौतिः पृथग्भावः । पृथग्भूतश्च सर्वपदार्थोन्तरिक्षस्य । सर्वेषामभिगमयन्नित्यादि । व्याख्यातम्* ॥

[10]हिरण्यमिति ॥ अन्वाहार्यमासाद्य सहस्रं हिरण्यं ददाति । तार्प्यं घृताक्तं वासः, तत् घृतसंबन्धात्पशुलाभहेतुः । धेनुः प्रत्यग्रप्रसवा गौः । संप्रीणनहेतुत्वात्तत आशिषां लाभः । साम्नो वा इति । तस्य तैजसत्वात् 'सर्वं तेजस्सामरूप्यम्' †इति दर्शनाच्च । यजुषां वर्णस्तार्प्यं, द्वयोः क्षत्रसम्बन्धित्वात् । क्षत्रं

*तै. सं. २–३–६[5].   †तै. ब्रा. ३–१२–९.

नां धेनुरेतानेव सर्वान् वर्णानवं रु-
न्धे ॥ ३५ ॥

त्वष्टा हतपुत्रो वीन्द्रꣳ सोममाऽहर-
त्तस्मिन्निन्द्रं उपहवमैच्छत तं नोपां-

दानामित्युक्थ–मदानाम् । धेनुः । एतान् । एव । सर्वान् । वर्णान् । अवेति । रुन्धे ॥ ३५ ॥

जगत्याऽभिचरन्थ्सर्वो वै गच्छति यज्ञस्तेज
एव त्रिꣳशच्च ॥ ११ ॥

[1]त्वष्टा । हतपुत्र इति हत–पुत्रः । वीन्द्रमिति वि–इन्द्रम् । सोमम् । एति । अहरत् । तस्मिन्न् । इन्द्रः । उपहवमित्युप–हवम् । ऐच्छत । तम् । न ।

---

द्वितीयो वर्णः, धेनुश्च उक्थामदानां शस्त्राणामृचामित्यर्थः । तासां वर्णो धेनुः प्रीणनहेतुत्वात् ॥

इति द्वितीये चतुर्थे एकादशोनुवाकः.

---

[1]त्वष्टा हतपुत्र इत्यादि ॥ इन्द्रेण हतपुत्रस्त्वष्टा इन्द्रविरहितं सोममाहरत् । तत एव तं यज्ञे नोपाह्वयत । अथ स इन्द्रः यज्ञहिंसां कृत्वा प्रासहा प्रसह्य सोममपिबत् तेनाननुज्ञातो बलेनैवापिबत् । सहतेः क्विपि 'न हिवृतिवृधि' इति पूर्वपदस्य

ह्वयत पुत्रं मेऽवधीरिति स यज्ञवे-
शसं कृत्वा प्रासहा सोममपिबत्त-
स्य यदत्यशिष्यत तत्त्वष्टाऽऽहवनी-
यमुप प्रावर्तयथ्स्वाहेन्द्रशत्रुर्वर्धस्वे-
ति स यावदूर्ध्वः पराविध्यति तावति

उपेति । अह्वयत । पुत्रम् । मे । अवधीः । इति । सः । यज्ञवेशसमिति यज्ञ–वेशसम् । कृत्वा । प्रासहेति प्र–सहा । सोमम् । अपिबत् । तस्य । यत् । अत्यशिष्यतेत्यति–अशिष्यत । तत् । त्वष्टा । आहवनीयमित्या–हवनीयम् । उप । प्रेति । अवर्तयत् । स्वाहा । इन्द्रशत्रुरितीन्द्र–शत्रुः । वर्धस्व । इति । सः । यावत् । ऊर्ध्वः । पराविध्यतीति परा–विध्यति । तावति । स्वयम् । एव । वीति ।

---

दीर्घत्वम् । अथ त्वष्टा इन्द्रपीतो यः तं सोमं गृहीत्वा तेनाहवनीयमुपेत्याग्निं प्रावर्तयत् उददीपयत् उदीर्णज्वालमकरोत् । उत्थापना प्रवर्तना । यथा—'यत्प्रावर्तत । तत्प्रवर्ग्यस्य प्रवर्ग्यत्वम्'* इति । स्वाहा स्वाहुतमिदं तवास्तु, हे अग्ने इन्द्रस्य शत्रुश्शातयिता वर्धस्वेति । एवमिन्द्रस्य विनाशमाशासानः ग्लानबुद्धिः प्रार्थयत । अथ सोऽग्निस्तेनोद्दीपितः यावदूर्ध्वं गत्वा पराविध्यति पराहन्ति इन्द्रं बाधते तावति ततः प्रागेव अग्निस्स्वयमेव व्यरमत

---

* तै. आ. ५-१.

स्वयमेव व्यरमत यदि वा तावत्प्र-
वणम् ॥ ३६ ॥ आसीद्यदि वा ता-

अरमत । [2]यदि । वा । तावत् । प्रवणमिति प्र-
वनम् ॥ ३६ ॥ आसीत् । यदि । वा । तावत् ।

निवृत्तोद्योगोऽभवत् त्वष्टुरभिमतं नाकरोत् । केचिदाहुः—सोग्नि-स्त्वष्ट्रा उद्दीपितो यावदूर्ध्वः पराविध्यति यावत्याकाशप्रदेशे ऊ-र्ध्वो गत्वा पराविध्यति पराहन्ति तावति ततः प्रागेव तदीयो-द्दीपनप्रयत्नानुरूपमूर्ध्वगतिं कृत्वेव अकस्माज्झडिति स्वयमेव व्यरमत विलुप्ततेजा अभवत् । अयमभिप्रायः—इन्द्रस्य शत्रुश्शातयिता नाशयिता अस्येत्यर्थस्स्यात्, ततश्चेन्द्रेण नाशयितव्यो वर्धस्वेति प्रार्थितत्वात् इन्द्रेण नाशयितव्यः कश्चिदस्या आहुतेर्जायेतेति तद-नुरूपमेव अग्निना चेष्टितमागामिनमि[मि इ]न्द्रेणास्य निपातनमिति सूचयितुमिति । एवं स्वरापराधेन मन्त्रप्रयोगोऽभिमतविघातहेतु-रासीत् । यथोक्तम्—

दुष्टश्शब्दस्स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुस्स्वरतोपराधात् ॥*

इति । अयं च शत्रुशब्दः इदानीं क्रियाशब्दो द्रष्टव्यः† ।

[2]योस्माज्जायते यज्ञात् इन्द्रस्य वा शातयिता इन्द्रेण वा शातयितव्यः तस्यैव उद्भवस्स्यात् अभिभवो वा । अग्नेः किमा-यातमित्याह—यदि वेत्यादि ॥ यजमानस्य यदि वा प्रवणं अव-

*पाणिनिशिक्षा—५२. †त–शातयिता शत्रुः । जातिशब्दस्य बहुव्रीहिः, तत्पुरुषवृत्त्योः फलविशेषाभावः, इत्यधिकः पाठः.

वदध्यग्नेरासीथ्स संभवंन्नग्नीषोमांव-
भि समंभवथ्स इंषुमात्रमिंषुमात्रं
विष्वंङ्ङवर्धत स इमान्लोकानंवृणो-
द्यदिमान्लोकानवृंणोत्तद्वृत्रस्यं वृत्र-
त्वं तस्मादिन्द्रोंऽबिभेदपि त्वष्टा

अधीति । अग्नेः । आसींत् । सः । संभवन्निति सं–भवन्न् । अग्नीषोमावित्यग्नी–सोमौं । अभि । समिति । अभवत् । सः । इषुमात्रमिंषुमात्रमितीषुमात्रं–इषुमात्रम् । विष्वङ् । अवर्धत । सः । इमान् । लोकान् । अवृणोत् । यत् । इमान् । लोकान् । अवृंणोत् । तत् । वृत्रस्यं । वृत्रत्वमिति वृत्र–त्वम् । तस्मात् । इन्द्रः । अबिभेत् । अपीति । त्वष्टा ।

नतिर्भवति, यदि वा आधिक्यमुच्छ्रायो भवति तदानीमग्नेरेव तावत्प्रवणं भवति, आधिक्यं चाग्नेरेव तावत् भवति । छान्दसो लुक् । 'निपातैर्यद्यदिहन्त' इति निघाताभावः । स सम्भवन्नित्यादि । स इन्द्रशत्रुत्वेन वर्धमानोग्निजन्मा पुरुषः संभवन् विश्वं जगद्व्याप्नुवन् अग्नीषोमावप्याक्रम्य समभवन् अग्नीषोमावप्यभिव्याप्तवान् । प्रमाणेनातिरेकस्संभवः । ततो वशीकृत्याग्नीषोमाविषुप्रमाणया वृद्ध्या दिनेदिने विष्वङ् नानागतिः अवर्धत क्रमेण इमान् सर्वानपि लोकानावृणोद्व्याप्तवान् । ततश्च स वरणाद्वृत्र उच्यते । तस्मादिन्द्रोऽबिभेत् । त्वष्टाप्यबिभेत् । यस्तस्य प्रवर्तयिता सोप्यबिभेदित्यपिशब्दस्यार्थः ॥

तस्मै त्वष्टा वज्रमासिञ्चत्तपो वै स वज्र आसीत्तमुद्यन्तुं नाशक्नोदथ वै तर्हि विष्णुः ॥ ३७ ॥ अन्या देवताऽऽसीत्सोऽब्रवीद्विष्णवेहीदमा हरिष्यावो येनायमिदमिति स वि-

[3]तस्मै । त्वष्टा । वज्रम् । असिञ्चत् । तपः । वै । सः । वज्रः । आसीत् । तम् । उद्यन्तुमित्युत्-यन्तुम् । न । अशक्नोत् । अथ । वै । तर्हि । विष्णुः ॥ ३७ ॥ अन्या । देवता । आसीत् । सः । अब्रवीत् । विष्णो । एति । इहि । इदम् । एति । हरिष्यावः । येन । अयम् । इदम् । इति । सः ।

[3]तस्मा इत्यादि ॥ अथ त्वष्टा तस्मै वृत्राय तं वृत्रं निग्रहीतुम् । यद्वा—तस्मै इन्द्राय युद्धार्थिने वज्रमायुधं असिञ्चत् उदपादयत् । तपोविशेषस्तेनोत्पादितः स स्वयं वज्र एवाभवत्, यद्वा—तदीयं तपो वज्रत्वेनातिष्ठत् । अथेन्द्रः केवलस्तमुद्धर्तुं नाशक्नोत् । अथ तर्हि तदानीं विष्णुर्नाम अन्या देवता आसीत् इन्द्राय विषीदते आविरासीत् । अथेन्द्रस्तमब्रवीत्, हे विष्णो एहि इदमस्य वीर्यमाहरिष्यावः येन वीर्येणायमिदं विश्वमभूदिति । स विष्णुरित्यादि । गतम् । अभिपर्यावर्तादिति । अभितः परितस्सर्वतः आक्रमणमभिपर्यावर्तः, तत्परिहारार्थं तं वृत्रो मा कार्षीदिति लोकत्रयेप्यात्मानं त्रेधा विभज्य स्थापितवान् ॥

ष्णुस्त्रेधाऽऽत्मानं वि न्यंधत्त पृथिव्यां
तृतीयमन्तरिक्षे तृतीयं दिवि तृती-
यमभिपर्यावर्ताद्ध्यबिभेद्यत्पृथिव्यां
तृतीयमासीत्तेनेन्द्रो वज्रमुदयच्छद्वि-
ष्णुनुस्थितस्सोऽब्रवीन्मा मे प्र हार-
स्ति वा इदम् ॥ ३८ ॥ मयि वीर्यं

विष्णुः । त्रेधा । आत्मानम् । वि । नीति । अ-
धत्त । पृथिव्याम् । तृतीयम् । अन्तरिक्षे । तृती-
यम् । दिवि । तृतीयम् । अभिपर्यावर्तादित्यभि–
पर्यावर्तात् । हि । अबिभेत् । [4]यत् । पृथिव्याम् ।
तृतीयम् । आसीत् । तेन । इन्द्रः । वज्रम् । उ-
दिति । अयच्छत् । विष्णुनुस्थित इति विष्णु–अ-
नुस्थितः । सः । अब्रवीत् । मा । मे । प्रेति । हाः ।
अस्ति । वै । इदम् ॥ ३८ ॥ मयि । वीर्यम् । तत् ।

---

[4]यत्पृथिव्यामित्यादि ॥ तेन तृतीयेन सह विष्णवनुस्थितः विष्णु-
ना गुणभावेन धारितः, सारथिनेव राजा गुणभावेन । अनोः
कर्मप्रवचनीयत्वम्, उपसर्गत्वाभावात् 'उपसर्गात्सुनोति' इत्यादिना
षत्वाभावः, कर्मप्रवचनीयत्वेपि व्यत्ययेन समासः । अथ सोऽब्र-
वीद्वृत्रः मा मां प्रहाः प्रहार्षीः । सिचि वृद्धौ 'बहुलं छन्दसि'
इतीडभावः । अस्ति वा इत्यादि । गतम् । अथ वृत्रेण दत्तं वीर्यं

तत्ते प्र दास्यामीति तदस्मै प्रायच्छ-
त्तत्प्रत्यगृह्णादधा मेति तद्विष्णवेऽति
प्रायच्छत्तद्विष्णुः प्रत्यगृह्णादस्मास्वि-
न्द्र इन्द्रियं दधात्विति यदन्तरिक्षे
तृतीयमासीत्तेनेन्द्रो वज्रमुदयच्छद्वि-

ते । प्रेति । दास्यामि । इति । तत् । अस्मै । प्रेति । अयच्छत् । तत् । प्रतीति । अगृह्णात् । अधाः । मा । इति । तत् । विष्णवे । अतीति । प्रेति । अयच्छत् । तत् । विष्णुः । प्रतीति । अगृह्णात् । अस्मासु । इन्द्रः । इन्द्रियम् । दधातु । इति । 5 यत् । अन्तरिक्षे । तृतीयम् । आसीत् । तेन । इन्द्रः । वज्रम् । उदिति । अयच्छत् । विष्ण्वनुस्थित इति

तद्विष्णवे आत्मानमतीत्य प्रायच्छत् । यद्वा—प्रतिग्रहानन्तरं तस्यान्यस्मै प्रदानमिति । किं ब्रुवन्? अधामेति । मामधाः धारितवान् त्वमिति विष्णुं वदन् । विष्णुश्च तत्प्रत्यगृह्णात्, कथं मन्यमानः? इन्द्रोऽस्मास्विन्द्रियं दधातु आस्थापयतु इन्द्रार्थमेव मयि तिष्ठत्विति ॥

5 यदन्तरिक्ष इत्यादि समानम्* ॥ द्विर्माधाः इति विशेषः द्वौ वारौ मां धारितवानिति ॥

*सं. २-४-१२.

ष्णुंनुस्थितस्सोऽब्रवीन्मा मे प्र हार-
स्ति वा इदम् ॥३१॥ मयिं वीर्यं तत्ते
प्र दास्यामीति तदस्मै प्रायच्छत्तत्प्र-
त्यंगृह्णाद्द्विर्माऽधा इति तद्विष्णवेऽति
प्रायंच्छत्तद्विष्णुः प्रत्यंगृह्णादस्मास्वि-
न्द्रं इन्द्रियं दधात्विति यद्दिवि तृतीय-

विष्णुं—अनुस्थितः । सः । अब्रवीत् । मा । मे । प्रेति । हाः । अस्ति । वै । इदम् ॥ ३१ ॥ मयिं । वीर्यम् । तत् । ते । प्रेति । दास्यामि । इति । तत् । अस्मै । प्रेति । अयच्छत् । तत् । प्रतीति । अगृ-ह्णात् । द्विः । मा । अधाः । इति । तत् । विष्णवे । अति । प्रेति । अयच्छत् । तत् । विष्णुः । प्रतीति । अगृह्णात् । अस्मासु । इन्द्रः । इन्द्रियम् । दधातु । इति । [6]यत् । दिवि । तृतीयम् । आसीत् । तेन ।

[6]यद्दिवीत्यादि ॥ गतम्* । येनाहमिदमिति । पूर्वं वीर्यैकदेशः वृत्रेणेन्द्राय दत्तः, इदानीं कृत्स्नप्रदानमभ्युपगच्छति येन वीर्येणाहं इदं विश्वमस्मि तत्सर्वं ते दास्यामीति अब्रवीत्. इन्द्रः बाढमितीत्यर्थः । अभ्युपगमे प्लुतः । अथ वृत्रोऽब्रवीत् सन्धां त्विति। त्वं चाहं च एकत्वं प्रतिपद्यावहा इत्यर्थः । यद्वा—त्वी इति पर्यनुयोगे विस्मृतस्मरणे वा । सर्वं वीर्यं ते प्रदास्यामीत्युक्तं अत्र

*सं. २-४-१२.

मासीत्तेनेन्द्रो वज्रमुदयच्छद्विष्णुनु-
स्थितस्सोऽब्रवीन्मा मे प्र हार्येना-
हम् ॥ ४० ॥ इदमास्मि तत्ते प्र दा-
स्यामीति त्वी३ इत्यब्रवीत्संधां तु
सं दधावहै त्वामेव प्र विशानीति
यन्मां प्र विशेः किं मां भुञ्ज्या इ-

इन्द्रः । वज्रम् । उदिति । अयच्छत् । विष्णुनु-
स्थित इति विष्णु–अनुस्थितः । सः । अब्रवीत् ।
मा । मे । प्रेति । हाः । येन । अहम् ॥ ४० ॥
इदम् । अस्मि । तत् । ते । प्रेति । दास्यामि ।
इति । त्वी३ । इति । अब्रवीत् । संधामिति सं–
धाम् । तु । समिति । दधावहै । त्वाम् । एव ।
प्रेति । विशानि । इति । यत् । माम् । प्रविशेरि-
ति प्र–विशेः । किम् । मा । भुञ्ज्याः । इति ।

किंचिद्विस्मृतं तदिदानीं स्मृतमिति स्मृतिमभिनीयाब्रवीत् वृत्रे एव संधां त्विति । तुशब्दो विशेषमाह । सर्वं वीर्यं ते प्रदास्यामि किं तु आवां संदधावहै त्वामेवाहं प्रविशानि यदिदं लभ्यते ततो वीर्यं दास्यते इति । 'गोपोपं पुष्णाति' इतिवदेकस्सन्दधातिः सामान्यवचनो द्रष्टव्यः । अथेन्द्रोऽब्रवीत् यदा त्वं मां प्रविशेः किमिदानीं मां प्रविश्य त्वं मा भुङ्क्षाः । यद्वा—किं

त्यंब्रवीत्त्वामेवेन्धीय तव भोगाय
त्वां प्र विंशेयमित्यंब्रवीत्तं वृत्रः प्रा-
विंशदुदरं वै वृत्रः क्षुत्खलु वै मनु-
ष्यंस्य भ्रातृंव्यो यः ॥ ४१ ॥ एवं
वेद हन्ति क्षुधं भ्रातृंव्यं तदंस्मै प्रा-
यंच्छत्तत्प्रत्यंगृह्णात्त्रिर्माऽधा इति त-

अब्रवीत् । त्वाम् । एव । इन्धीय । तवं । भोगाय।
त्वाम् । प्रेति । विशेयम् । इति । अब्रवीत् । तम्।
वृत्रः । प्रेति । अविशत् । उदरम् । वै । वृत्रः ।
क्षुत् । खलुं । वै । मनुष्यंस्य । भ्रातृंव्यः । यः ॥
४१ ॥ एवम् । वेदं । हन्ति । क्षुधम् । भ्रातृंव्यम्।
तत् । अस्मै । प्रेति । अयच्छत् । तत् । प्रतीति ।
अगृह्णात् । त्रिः । मा । अधाः । इति । तत् । वि-
ष्णवे । अति । प्रेति । अयच्छत् । तत् । विष्णुः।

मां प्रविश्य मामेव भुञ्जाः किं मामेव भोक्तुमारभसे । अथ वृत्रोब्रवीत् मैवं मन्तव्यं त्वामेवेन्धीय दीपयेयं अतस्तवैव भोगार्थं त्वां प्रविशेयमिति । भुञ्जेर्लोट्याडागमः, छान्दसोकारलोपः, लुग्विकरणत्वेन वा अयम् । अथेन्द्रेणानु[नुमतो]भूत्वा स्थितः यत्र क्षुदुपजायते जाठराग्निरूपेणान्तः प्रविशतीत्यर्थः । स च क्षुद्रूपो दिने-दिने सर्वैर्हन्यते । क्षुत्खल्वित्यादि वेदितुः फलम् । अथ वृत्रः तच्चात्मीयं वीर्यं कृत्स्नं इन्द्राय प्रायच्छत् तत्प्रवेशेन सर्वश-

द्विष्णवेऽति प्रायच्छत्तद्विष्णुः प्रत्यगृ-
ह्णादस्मास्विन्द्र इन्द्रियं दधात्विति
यत्त्रिः प्रायच्छात्त्रिः प्रत्यगृह्णात्तत्त्रि-
धातोस्त्रिधातुत्वं यद्विष्णुरन्वतिष्ठत
विष्णवेऽति प्रायच्छत्तस्मादैन्द्रावैष्ण-

प्रतीति । अगृह्णात् । अस्मासु । इन्द्रः । इन्द्रियम् । दधातु । इति । [7]यत् । त्रिः । प्रेति । अयच्छत् । त्रिः । प्रत्यगृह्णादिति प्रति–अगृह्णात् । तत् । त्रिधातोरिति त्रि–धातोः । त्रिधातुत्वमिति त्रिधातु–त्वम् । यत् । विष्णुः । अन्वतिष्ठतेत्यनु–अतिष्ठत । विष्णवे । अति । प्रेति । अयच्छत् । तस्मात् । ऐन्द्रावैष्णवमित्यैन्द्रा–वैष्णवम् । हविः । भवति ।

क्तिरिन्द्रोभवत् इन्द्रश्च तत्प्रतिगृह्य विष्णवे प्रायच्छत् त्रिर्माधाः त्रीन् वारान् मां धारितवानसीति । विष्णुरित्यादि । गतम्* ॥

[7]यत्त्रिरित्यादि ॥ दानप्रतिग्रहयोस्त्रिरावृत्त्या त्रिधातुत्वं, वृत्रो दाता इन्द्रः प्रतिग्रहीता । त्रयो धातवो दानानि वा[धा]रणानि वा अस्येति त्रिधातुर्वीर्यविशेषः, तत्सम्बन्धी यागस्त्रैधातवीयं, इह

*सं. २–४–१२.[4]

वꣳ हविर्भवति यद्वा इदं किं च त-
दस्मै तत्प्रायच्छदृचस्सामानि यजू-
ꣳषि सहस्रं वा अस्मै तत्प्रायच्छ-
त्तस्मात्सहस्रदक्षिणम् ॥ ४२ ॥

[8]यत् । वै । इदम् । किम् । च । तत् । अस्मै । तत् । प्रेति । अयच्छत् । ऋचः । सामानि । यजूꣳषि । सहस्रम् । वै । अस्मै । तत् । प्रेति । अयच्छत् । तस्मात् । सहस्रदक्षिणमिति सहस्र—दक्षिणम् ॥ ४२ ॥

प्रवणं विष्णुर्वा इदमिदमहं यो भवत्येकविꣳशतिश्च ॥ १२ ॥

त्वभेदेनोच्यते । यद्विष्णुरित्यादि । यस्माद्विष्णुरिन्द्रमन्वतिष्ठत यस्माच्च विष्णवे इन्द्रोतिप्रायच्छत् तस्मादैन्द्रावैष्णवं हविर्भवति ॥

[8]यद्वा इति ॥ यत्किञ्चिदात्मनि वीर्यं विद्यते ऋचस्सामानि यजूंषि च, ऋगादिनिमित्तमिति यावत्, तत्सर्वं अस्मै इन्द्राय तदानीं वृत्रहा प्रायच्छत् । अत एव पूर्वानुवाके दक्षिणाभूतानां हिरण्यादीनां सामादिरूपेण वर्णना कृता* । सहस्रं वा इति । सहस्रं वीर्याणि सहस्रप्रकारं वीर्यं तदा प्रायच्छत् । तस्मात्सहस्रहिरण्यदक्षिणत्वमस्य पूर्वमुक्तम् ॥

इति द्वितीये चतुर्थे द्वादशोनुवाकः.

---

*सं. २–४–११.[10]

देवा वै राजन्याज्जायमानादबिभ-
युस्तमन्तरेव सन्तं दाम्नाऽपौम्भन्थ्स
वा एषोपोब्धो जायते यद्राजन्यो
यद्वा एषोनपोब्धो जायेत वृत्रा-
न्घ्नश्चरेद्यं कामयेत राजन्यमन-
पोब्धो जायेत वृत्रान्घ्नश्चरेदिति
तस्मा एतमैन्द्राबार्हस्पत्यं चरुं नि-

[1]देवाः । वै । राजन्यात् । जायमानात् । अ-बिभयुः । तम् । अन्तः । एव । सन्तम् । दाम्ना । अपेति । औम्भन् । सः । वै । एषः । अपोब्ध इत्यप—उब्धः । जायते । यत् । राजन्यः । यत् । वै । एषः । अनपोब्ध इत्यनप—उब्धः । जायेत । वृत्रान् । घ्नन् । चरेत् । यम् । कामयेत । राजन्यम् । अनपोब्ध इत्यनप—उब्धः । जायेत । वृत्रान् । घ्नन् । चरेत् । इति । तस्मै । एतम् । ऐन्द्राबार्हस्पत्यमित्यैन्द्रा—बार्हस्पत्यम् । चरुम् । निरिति । वपेत् । ऐन्द्रः । वै । राजन्यः । ब्रह्म ।

---

[1]देवा वा इत्यादि ॥ अन्तः गर्भे एव सन्तं दाम्ना अपौ-

वैपेदैन्द्रो वै राजन्यो ब्रह्म बृहस्प-
तिर्ब्रह्मणैवैनं दाम्नोपोम्भनान्मुञ्चति
हिरण्मयं दाम दक्षिणा साक्षादेवैनं
दाम्नोपोम्भनान्मुञ्चति ॥ ४३ ॥

बृहस्पतिः । ब्रह्मणा । एव । एनम् । दाम्नः । अ-
पोम्भनादित्यप-उम्भनात् । मुञ्चति । हिरण्मयम् ।
दाम । दक्षिणा । साक्षादिति स-अक्षात् । एव ।
एनम् । दाम्नः । अपोम्भनादित्यप-उम्भनात् ।
मुञ्चति ॥ ४३ ॥

एनं द्वादश च ॥ १३ ॥

---

म्भन् अपरुद्धशक्तिकाङ्क्षमबध्नन् । उभ उम्भ पूरणे । वृत्रानिति । वारकान् शत्रून् । अन्वाहार्यमासाद्य हिरण्मयं दाम दद्यात् ॥

इति द्वितीये चतुर्थे त्रयोदशोनुवाकः.

---

इति काम्या इष्टयस्समाप्ताः.

नवोंनवो भवति जायमानोह्नां के-
तुरुषसामेत्यग्रे । भागं देवेभ्यो वि
दधात्यायन्प्र चन्द्रमास्तिरति दीर्घ-

[1]नवोंनव इति नवः—नवः । भवति । जायमानः । अह्नाम् । केतुः । उषसाम् । एति । अग्रे । भागम् । देवेभ्यः । वीति । दधाति । आयन्नित्या—यन्न् । प्रेति । चन्द्रमाः । तिरति । दीर्घम् । आ-

[1]अथ याज्याकाण्डं वैश्वदेवम् । 'यः पापयक्ष्मगृहीतस्स्यात्तस्मा एतमादित्यं चरुं निर्वपेत्'* इत्यस्याः पुरोनुवाक्या—नवोनव इति त्रिष्टुप् ॥ अत्र चन्द्रगुणकीर्तनेनादित्य एव स्तूयते, तेषां चन्द्रगुणानामादित्याधीनत्वात् । तथा हि—चन्द्रो नामायं भास्वरः सलिलकटाहात्मा । यथाहुः—

सूर्योग्निमयो गोळः चन्द्रोम्बुमयस्स्वभावतस्स्वच्छः । इति ।

तस्मादस्य दिवसकररुचिसमाश्लेषेण भास्वरत्वं भवति । यथाहुः—

भूग्रहभानां गोळार्धानि स्वच्छायया विवर्णानि ।
अर्धानि यथासारं सूर्याभिमुखानि दीप्यन्ते† ॥ इति ।

तस्माच्चन्द्रमसो बिम्बं गोळार्धं सूर्याभिमुखं सदा चकास्ति । किं सर्वदा चकास्ति? किमिति नोपलभ्यते? श्रूयताम्—अमावास्या-

*सं. २-३-५.[2]

†आर्यभ—गोलपादे.

यां चन्द्रमस उपर्यादित्यः; तदा चन्द्रमस उपरि यद्बिम्बार्धं तद्शेषमवभासयति सविता। चन्द्रस्यामावास्योपलक्षितोपरिबिम्बे केन्द्राद्यथायथा पश्चादादित्योवलम्बते तथातथा चन्द्रमसो बिम्बं केन्द्रस्य परतोवलम्बते। तत्केन्द्रवशात् चन्द्रमसो बिम्बार्धशेषं आभासयति सविता। यावदेवास्योपलक्षितबिम्बपरिध्यवधेरधोवलम्बते तावत् चन्द्रमसो बिम्बस्या[स्यार्धम]स्माभिरुपलक्ष्यते, शेषमुपरिस्थितत्वान्नोपलभ्यते सूर्याभिमुखं भास्वरमपि, भूगोळविशेषवर्तिभिरस्माभिरुपलब्धुमयोग्यत्वात्। तस्माद्यावद्यावत्सवितृकराश्लिष्टमवलम्बते तावत्तावत्तिथिभेदेन शुक्लचन्द्र उपलभ्यते। तेनामी ज्योत्स्नावितानावभासिनः चन्द्रकराः तत्तत्क्षितितलावभासिनो भवन्ति। यथा दर्पणोदरे जले वा दिवाकरकरास्सम्मूर्छितास्सन्तो गृहान्तर्गतं तमः क्षपयन्ति एवं सवितृमरीचयोम्बुमये स्वभावश्यामेपि चन्द्रबिम्बे सम्मूर्छिता नैशं ध्वान्तमपध्वंसयन्ति। तत्रायं विशेषः—यो यश्चन्द्रबिम्बप्रदेशः सवितृमार्गे ऋजुत्वेन व्यवस्थितः स एव शुक्लः उपलभ्यते; तेन दक्षिणोत्तरयोश्शृङ्गयोः कालविशेषेणोन्नतिविशेषः। तत्र यावद्यावत्सवित्रा विश्लिष्टो भवति तावत्तावच्छुक्लप्रतिपत्प्रभृति चन्द्रमसि सितिमा संवर्धते। कृष्णप्रतिपत्प्रभृति असितिमा संवर्धते। एतावता जायमान आप्यायमानः क्षीयमाणः चन्द्रमा उपलभ्यते। उक्तं च निरुक्ते—'तस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते'* इति, श्रूयते च—'सुषुम्नस्सूर्यरश्मिश्चन्द्रमा गन्धर्वः'† इति। ननु कथं अस्तमिते सवितरि चन्द्रश्चकास्ति? नैष दोषः—भूमेर्दूरेण सूर्यमार्गः; तेनोपरिमुखानां सूर्यमरीचीनां न व्यवधात्री भूतधात्री भवति। कृष्णपक्षप्रातिपदादिषु चन्द्रमसो बिम्बपूर्वभागं प्रत्यासन्नः सवितेति परमुच्छुक्लमुपपद्यते। अत्र यदुक्तं

*नैघ. २–२–१. †सं. ३–४–७

सौगतैः स्वत एव शुक्लस्य चन्द्रमसः सूर्यसान्निकर्षाद्वैवर्ण्यं भवतीति, तदयुक्तम् । स्वभावतश्शुक्लस्य सूर्यसन्निकर्षस्स्याच्चेत्तदा शुक्लप्रतिपदादिषु चन्द्रमसो बिम्बस्यापरभागे वैवर्ण्यं स्यात्, सान्निकृष्टत्वात् तस्यापरभागस्य । ततश्चावाङ्मुखश्च[खं च]न्द्रबिम्बमुपलभ्येतेत्यलमतिप्रसङ्गेन ॥

एवं यश्चन्द्रमा जायमानः प्रादुर्भवन् शुक्लप्रतिपदादिषु आदित्यस्यार्चिषा प्रकाशमानो नवोनवो भवति पुनःपुनः अभिनव एव भवति प्रजानामाह्लादहेतुर्भवति । 'अनुदात्तं च' इति द्वितीयो नवशब्दः अनुदात्तः । किं च—अह्नां तिथीनां केतुः तद्व्यत्केतयिता ज्ञापयिता । कित ज्ञाने । तिथिविभागहेतुत्वात् । उषसां रात्रीणां अग्रे गच्छति अग्रणीः भवति, रजनीनां कर्तृत्वात् । यद्वा—अह्नां केतुः अहरवसाने शुक्लपक्षे प्रतीच्यां दृश्यते, कृष्णपक्षे तु रात्रीणामवसाने प्राच्यां दृश्यते । एवमायन्नागच्छन् अयं देवेभ्यो भागं विदधाति तिथिविशेषनिबन्धनत्वात्सर्वयागानां, आदित्यसन्निकर्षविप्रकर्षनिबन्धनत्वात्सर्वतिथीनाम् । सूर्याचन्द्रमसोर्हि परस्परसन्निकर्षोमावास्या, विप्रकर्षः पौर्णमासीति । इत्थं महाप्रभावोयं चन्द्रमाः दीर्घमायुरस्य प्रतिरति वर्धयतु ॥

यद्वा—आदित्य एव चन्द्रमा उच्यते, चन्द्रस्य माता निर्माता उत्पादक इति । 'गतिकारकयोरपि' इत्यसिः, डित्वाट्टिलोपः । स जायमानो दिनेदिने प्राच्यामुद्यन् नवोनवो भवति सदोद्यन्नप्यपूर्व इव भवति । अह्नां केतुः दिवसकरत्वात् । उषसां रात्रीणां अग्रे अग्रतो गच्छति रात्रय एनमनुधावन्ति । एवमायन् उद्यन् देवेभ्यो भागं विदधाति, आदित्यगत्यधीनत्वात्सर्वकर्मणाम् । एवं महानुभावश्चन्द्रमसोप्युक्तवन्निर्माता आदित्यः दीर्घमायुर्वर्धयत्विति ॥

मायुः । यमादित्या अꣳशुमाप्याययन्ति यमक्षितमक्षितयः पिबन्ति। तेन नो राजा वरुणो बृहस्पतिरा प्याययन्तु भुवनस्य गोपाः । प्राच्यां दिशि त्वमिन्द्रासि राजोतोदी-

युः । [2]यम् । आदित्याः । अꣳशुम् । आप्याययन्तीत्या—प्याययन्ति । यम् । अक्षितम् । अक्षितयः । पिबन्ति । तेन । नः । राजा । वरुणः । बृहस्पतिः । एति । प्याययन्तु । भुवनस्य । गोपा इति गो—पाः । [3]प्राच्याम् । दिशि । त्वम् । इन्द्र । असि । राजा । उत । उदीच्याम् । वृत्रहन्निति वृत्र—ह-

---

[2]तत्रैव याज्या—यमिति त्रिष्टुप् ॥ यमंशुं रश्मिं आत्मीयरश्मिभूतं सोममादित्या आप्याययन्ति वर्धयन्ति, यं च सोममक्षितमविच्छिन्नं सर्वेष्वपि पर्वसु अक्षितयोऽक्षीणाः पित्रादयः पिबन्ति, तेन सोमेन सह राजा देवराजः वरुणश्च बृहस्पतिश्चाप्याययन्तु इममक्षीणं यजमानं वर्धयन्तु भुवनस्य भूतजातस्य गोपाः प्रवृत्तिप्रदाः ॥

[3]'यं कामयेतान्नादस्स्यादिति तस्मा एतं त्रिधातुं निर्वपेदिन्द्राय राज्ञे पुरोडाशमेकादशकपालमिन्द्रायाधिराजायेन्द्राय स्व-

च्यां वृत्रहन्वृत्रहाऽसि । यत्र यन्ति-
स्रोत्यास्तत् ॥ ४४ ॥ जितं ते द-
क्षिणतो वृषभ एधि हव्यः । इन्द्रो

न् । वृत्रहेति वृत्र—हा । असि । यत्र । यन्ति ।
स्रोत्याः । तत् ॥ ४४ ॥ जितम् । ते । दक्षिणतः ।
वृषभः । एधि । हव्यः । [4]इन्द्रः । जयाति । न ।

राज्ञे '* इत्यस्याः प्रथमस्याः पुरोनुवाक्या, तृतीयस्याश्च याज्या—प्राच्यामिति त्रिष्टुप् ॥ 'जितं ते' इति तृतीयपादान्तः । हे इन्द्र त्वं प्राच्यां दिशि राजा स्वाम्यसि । अपिच उदीच्यामपि अधिराज इत्येव । यतस्त्वं वृत्रहा वृत्रस्य मेघस्य हन्तासि मेघं हत्वा उदकेन जीवयसि, हे वृत्रहन् वृत्रासुरस्य हन्तः । प्रदर्शनार्थं च दिग्द्वयोरुपादानं, सर्वास्वपि दिक्षु त्वमेव राजेति। कथं ज्ञायते इति? आह—यत्र स्रोत्याः नद्यः यन्ति गच्छन्ति तत्सर्वं त्वया जितं तत्र सर्वं ते जितं जयः । सर्वत्र च नद्यो यन्ति, तस्मात्सर्वासु दिक्षु त्वं राजासीति । 'स्रोतसो विभाषाड्ड्यड्ड्यौ' इति ड्यः । किञ्च—वृषभः वर्षयिता कामानाम् । हव्यः हविषा आराध्यः । एवं महानुभावस्त्वं दक्षिणत एधि भोक्तुं भव....हविः भान्ति (?) हव्यः । यद्वा—हविरर्हसि त्वं हविः प्रतिगृहीतुं दक्षिणतो भव; दक्षिणतो हि स्थापयित्वा आहार्यादि दीयते, यथा—'दक्षिणत एत '† इति तद्वदिदं द्रष्टव्यम् ॥

[4]अथ प्रथमस्य याज्या, द्वितीयस्य पुरोनुवाक्या—इन्द्र इति

*सं. २-३-६.[2]

†आप. श्रौ-३-४-२.

जयाति न परा जयाता अधिराजो राजसु राजयाति । विश्वा हि भू-

परेति । जयाते । अधिराज इत्यधि-राजः । राजस्विति राज-सु । राजयाति । विश्वाः । हि । भू-

त्रिष्टुप् ॥ इन्द्रः सर्वदा जयाति जयति न तु कदा चिदपि पराजयाते पराजयं न प्रतिपद्यते । लेत्याडागमः, 'विपराभ्यां जेः' इत्यात्मनेपदम्, 'वैतोन्यत्र' इत्यैकारः । अपि च—अधिराजः अधिकं राजमानः, अधिकदीप्तिः । राजसु दीप्तिमत्सु चन्द्रादिषु मध्ये यो नाम कश्चिद्राजति तं राजयाति तस्मादयं जयतीति । ण्यन्ताल्लेटि पूर्ववदाडागमः । किञ्च—विश्वाः पृतनाः संग्रामान् अभिष्टीः आभिमुख्येनागच्छन्तीः । इषेर्गत्यर्थत्वात्कर्तरि क्तिन् 'मन्त्रे वृष' इति क्तिन उदात्तत्वम्, शकन्ध्वादित्वात्पररूपत्वम् । इच्छतेर्वा, आभिमुख्येन आगन्तुमिच्छन्तीः । ईदृशीस्सर्वाः पृतनाः उपसद्यो भूयाः भूयात् । प्रथमत्वेन*नतिः । उपसीदतीत्युपसद्यः । 'कृत्यल्युटो बहुलम्' इति कर्तरि यत् । उपसदनमुपरोधनम् । षष्ठ्यभावश्छान्दसः । यथाऽयमिन्द्रस्सर्वैर्नमस्यः नमस्कार्यः असत् भवेत् । लेत्यडागमः, पूर्वत्र 'हि च' इति निघाताभावः । उत्तरत्र यच्छब्दयोगात् । नमश्शब्दयोगात् 'नमोवरिवश्चित्रङः' इति क्यच्, तदन्तादचो यत् । यद्वा—नमस्यः नमस्कारार्हः । 'तदर्हति' इति छान्दसो यत् । तथा विश्वाः पृतना अभिभवत्विति । यद्वा—विश्वाः पृतनाः अभिभूयात् ।

*त—त्वेनानुतीः.

**याः पृतना अभिष्टीरुपसद्यो नमस्यो यथाऽसत्। अस्येदेव प्र रिरिचे महित्वं दिवः पृथिव्याः पर्यन्तरिक्षात्। स्वराडिन्द्रो दम आ विश्व-**

**याः। पृतनाः। अभिष्टीः। उपसद्य इत्युप—सद्यः। नमस्यः। यथा। असत्। [5]अस्य। इत्। एव। प्रेति। रिरिचे। महित्वमिति महि—त्वम्। दिवः। पृथिव्याः। परीति। अन्तरिक्षात्। स्वराडिति स्व—राट्। इन्द्रः। दमे। एति। विश्वगू-**

---

विध्यादिलिङि शपो लुक्। तथा च सर्वैर्नमस्यो भवेत् तदनुरूपं जयति, न च पराजयते, सोयमस्मानन्नादान् करोत्विति ॥

[5]अथ तत्रैव द्वितीयस्य याज्या, तृतीयस्य पुरोनुवाक्या—अस्येदिति त्रिष्टुप् ॥ अस्यैवेन्द्रस्य। इदिति पादपूरणे। महित्वं महत्त्वं प्ररिरिचे प्ररिरिच्यते। प्रशब्दो धात्वर्थस्य निवृत्तिमाचष्टे, यथा प्रस्मरणं प्रस्थानमिति। एवं रेकनिवृत्तिः प्ररेकः पूरणम्। कुतः प्ररिरिचे? दिवः पृथिव्या अन्तरिक्षाच्च। परि उपरि। अध्यर्थे परिशब्दः। दिवं पृथिवीं अन्तरिक्षं चातीत्य प्ररिरिचे। *छान्दसो लिट्। स्वराट् स्वायत्तदीप्तिः,* स्वयं राजतीति स्वराट्, दमे दमविषये दमयितव्ये स्वराट्। दमेः घञि 'नोदात्तोपदेशस्य' इति वृद्ध्यभावः। विश्वगूर्तः सर्वस्मिन् काले उद्गूर्णः। दासीभारादिर्द्रष्टव्यः, बहुव्रीहिस्वरस्योपलक्षणत्वात् 'बहुव्रीहौ विश्वं संज्ञायाम्' इत्येतद्भवति। यद्वा—विश्वमायुधादिकं

गूर्तस्स्वरिरमंत्रो ववक्षे रणाय। अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः। ईशानम् ॥४५॥ अस्य जग-

र्त इति विश्व—गूर्तः। स्वरिः। अमंत्रः। ववक्षे। रणाय। [6]अभीति। त्वा। शूर। नोनुमः। अदुग्धाः। इव। धेनवः। ईशानम् ॥४५॥ अस्य। जगतः। सुवर्दृशमिति सुवः—दृशम्। ई-

---

गूर्तमुद्यतं यस्येति बहुव्रीहिः। 'नसत्तनिषत्त' इत्यत्र गूर्तशब्दो निपातितः। स्वरिः स्वरणीयः कीर्तनीयः। स्वृ शब्दे, 'अचः' इतीप्रत्ययः। शोभनारिरित्वं नव[रिति वा। अव] ग्रहो नेष्यते। अमत्रः अमनकुशलः शत्रुभञ्जनादिकुशलः। मात्रारहितोऽमत्रो महानित्येके। अत्र पृषोदरादित्वात्स्वरूपस्वरादिसिद्धिः। एवं महानुभावोयं इन्द्रो रणाय आववक्षे आभिमुख्येन वहति। उक्तं कर्मणस्संप्रदानत्वम्। वहेर्लेटि 'सिब्बहुलं लेटि' इति सिप्, 'लोपस्त आत्मनेपदेषु' इति तलोपः, 'बहुलं छन्दसि' इति शुपश्श्लुः। मेघानां संग्रामोत्पादनेन वृष्टिमुत्पाद्य प्रभूतान्नादिना अस्मानन्नादान् करोत्विति॥

[6]अथ 'य इन्द्रियकामो वीर्यकामस्स्यात्तमेतया सर्वपृष्ठया याजयेत्'* इत्यस्यां सर्वपृष्ठायामिष्ट्यां प्रथमस्य 'यदिन्द्राय राथन्तराय निर्वपति'* इत्यस्य प्रथमस्य हविषः पुरोनुवाक्या, षष्ठस्य च याज्या—

---

*तै. सं. २-३-७.[2]

तस्सुवर्दृशमीशानमिन्द्र तस्थुषः । त्वामिद्धि हवामहे साता वाजस्य कारवः । त्वां वृत्रेष्विन्द्र सत्पतिं न-

शानम् । इन्द्र । तस्थुषः । [7]त्वाम् । इत् । हि । हवामहे । साता । वाजस्य । कारवः । त्वाम् । वृत्रेषु । इन्द्र । सत्पतिमिति सत्-पतिम् । नरः ।

अभि त्वेति पथ्याबृहती, तृतीयपादस्य द्वादशाक्षरत्वात् ॥ हे शूर विक्रान्त इन्द्र त्वां अभिनोनुमः आभिमुख्येनात्यर्थं नुमः स्तुमः । नौतेर्यङ्लुगन्तात् लट् । अदुग्धा धेनव इव यथा तावद्वत्से आभिमुख्येन शब्दयन्ति । कीदृशम्? ईशानं ईश्वरं अस्य जगतः जङ्गमस्य तस्थुषस्स्थावरस्य च सुवर्दृशं स्वर्गाख्यस्य परमसुखस्य द्रष्टारम् । स त्वमिन्द्रियं वीर्यं चास्मभ्यं देहीति ॥

[7]अथ तस्यैव प्रथमस्य याज्या, 'इन्द्राय बार्हताय'* इत्यस्य च पुरोनुवाक्या—त्वामिद्धीति पूर्ववत्पथ्याबृहती ॥ 'नरः' इति तृतीयपादान्तः । हे इन्द्र त्वामित् त्वामेव हवामहे आह्वयामः। वाजस्यान्नस्य साता सातौ सातिनिमित्तमस्मभ्यं देहि वाजमिति त्वामेवाह्वयामः । कारवस्स्तोतृत्वेन शिल्पिनः । 'कृपावाजि' इत्युण्प्रत्ययः । सनेः क्तिनि 'जनसनखनाम्' इत्यात्वम्, 'सुपां सुलुक्' इति सप्तम्या आकारः, 'ऊतियूति' इत्यादिना क्तिन उदात्तत्वम् । 'ह्रिच' इत्याख्यातस्य निघाताभावः । हि यस्मा-

*सं. २-३-७.[3]

रस्त्वां काष्ठास्वर्वतः । यद्द्याव इ-
न्द्र ते शतꣳ शतं भूमीरुत स्युः ।
न त्वां वज्रिन्थ्सहस्रꣳ सूर्या अनु न

त्वाम् । काष्ठासु । अर्वतः । [8]यत् । द्यावः । इन्द्र । ते । शतम् । शतम् । भूमीः । उत । स्युः । न । त्वा । वज्रिन् । सहस्रम् । सूर्याः । अन्विति । न ।

द्वाजस्य लाभाय त्वामेवाह्वयामः, यस्माच्चारिपूपस्थितेषु सत्पतिं सतां पातारं विदुषां पालयितारं त्वामेवाह्वयामः नरः सर्वेपि वयं मनुष्याः, यस्माच्च त्वां काष्ठासु दिक्षु अर्वत अरणवत उदकस्य च सात्यर्थं त्वामेवाह्वयामः, तस्मात्सर्वस्मादभिमतसंपादनेन इन्द्रियं वीर्यं चास्मभ्यं देहीति ॥

[8]अथ द्वितीयस्य याज्या, तृतीयस्य पुरोनुवाक्या—'इन्द्राय वैरूपाय'* इत्यस्य । यद्द्याव इति पूर्ववत्पथ्याबृहती । 'अनु' इति तृतीयपादन्तः ॥ हे इन्द्र ते तव यत् यद्यपि द्यावः द्युलोकाः शतं स्युः उत अपिच भूमीः भूमयोपि यद्यपि शतं स्युः, तथापि वज्रिन् रोदसी द्यावापृथिव्यौ त्वां जातमात्रमपि नान्वष्ट नाश्नुवाते नानुव्याप्नुतः तवैश्वर्याधारत्वाय न पर्याप्नुतः । तथा यद्यपि सहस्रं सूर्यास्स्युः, तथापि ते त्वां तेजसा नान्वश्नुते । अश्नोतेः छान्दसे लङि वचनव्यत्ययेनैकवचनम्, शपो लुक्; 'बहुलं छन्दस्यमाङ्योगेपि' इत्यडागमः । यद्यपि शतं द्यावस्स्युः भूमयश्च सूर्याश्च सहस्रं ये रोदसी ये च सूर्याः त इन्द्रं नान्वष्ट । 'नपुंसकमनपुंसकेन' इति नपुंसकस्य शेषः, एकवचनं च (?) ॥

*सं. २-३-७.3

जातमष्ट रोदसी। पिबा सोममिन्द्र मन्दतु त्वा यं ते सुषाव हर्यश्वाद्रिः ॥४६॥ सोतुर्बाहुभ्याꣳ सुयतो ना-

जातम्। अष्ट। रोदसी इति। [9]पिब। सोमम्। इन्द्र। मन्दतु। त्वा। यम्। ते। सुषाव। हर्यश्वेति हरि-अश्व। अद्रिः॥ ४६॥ सोतुः। बाहुभ्यामिति बाहु-भ्याम्। सुयत इति सु-यतः।

[9]अथ तृतीयस्य याज्या, चतुर्थस्य 'इन्द्राय वैराजाय'* इत्यस्य पुरोनुवाक्या—पिबा सोममिति विराट् त्रिपदा॥ हे इन्द्र सोमं पिब, पीतश्चायं सोमः त्वां मन्दतु तर्पयतु। मदि स्तुतिमोदमदस्वप्नगतिषु; व्यत्ययेन परस्मैपदम्। हे हर्यश्व हरिततुरङ्ग ते त्वदर्थं यं सोमं अद्रिः ग्रावा सुषाव अभिषुतवान्। किं स्वयमेव? नेत्याह—सोतुः अभिषोतुः ऋत्विजः। साधुकारिणि तृन्। तस्य बाहुभ्यां सह अद्रिस्सुषाव। यद्वा—सोतुर्बाहुभ्या सुयतः सुष्ठु यन्त्रितः, अत एव नार्वा नारणशीलः स्वकार्यकरणे सुप्रतिष्ठितः। यद्वा—अतः न अर्वा न पापः, कार्यविरोधित्वमेव पापम्। अर्तेः 'अन्येभ्योपि दृश्यते' इति वनिप्। ततस्तुष्टस्त्वमस्मभ्यं अभिमतं देहीति॥

*सं. २.३-७.३

वाँ । रेवतीर्नस्सधमाद इन्द्रे सन्तु
तुविवाजाः । क्षुमन्तो याभिर्मदेम ।
उदग्ने शुचयस्तव वि ज्योतिषोदु

न । अर्वा । [10]रेवतीः । नः । सधमाद इति सध-मादः । इन्द्रे । सन्तु । तुविवाजा इति तुवि-वा-जाः । क्षुमन्तः । याभिः । मदेम । [11]उदिति । अग्ने । शुचयः । तव । [12]वीति । ज्योतिषा । उ-

[10]अथ चतुर्थस्य याज्या, 'कदा चन'* इति सूत्रकारवचनात् सैव पञ्चमस्य च 'इन्द्राय शाक्कराय'† इत्यस्य पुरोनुवाक्या, पञ्चमस्य याज्या—रेवतीर्न इति गायत्री ॥ इयमेव षष्ठस्य च 'इन्द्राय रैवताय'† इत्यस्य पुरोनुवाक्या । व्याख्याता चेयं 'अन्वह मासाः'‡ इत्यत्र । रेवत्यो धनवत्यः सधमादः सहमाद्यन्त्यः । तुविवाजाः बह्वन्नाः समृद्धान्ना वा अस्माकं सन्तु अस्मदीया वा इन्द्रे सन्तु ईदृश्यस्सन्तु आपो गावो वा । याभिर्वयं क्षुमन्तः कीर्तिमन्तः मदेम माद्येमेति ॥

[11]'यश्चक्षुष्कामस्स्यात्तस्मा एतामिष्टिं निर्वपेदग्नये भ्राजस्वते पुरोडाशमष्टाकपालं सौर्यं चरुमग्नये भ्राजस्वते पुरोडाशमष्टाकपालम्'§ इत्यत्र 'अग्नये भ्राजस्वते'§ इत्यस्य पुरोनुवाक्या—उदग्ने शुचयस्तवेति गायत्री ॥ व्याख्यातेयं 'त्वमग्ने रुद्र'¶ इत्यत्र । तस्य इह प्रतीकग्रहणम् । हे अग्ने ते तव शुक्राः निर्मलाः शुचयः रश्मयः भ्राजन्तः राजन्तः उदीरते उद्गच्छन्ति तव । किं च—

*सं. १-४-२२.[1] †सं. २-३-७.[3] ‡सं. १-७-१३.[13]
§सं. २-३-८.[2] ¶सं. १-३-१४.[26]

त्यं जातवेदस॑ꣳ सप्त त्वा हरितो
रथे वहन्ति देव सूर्य । शोचिष्केशं

दिति । उ । त्यम् । जातवेदसमिति जात-वेदसम् ।
[14]सप्त । त्वा । हरितः । रथे । वहन्ति । देव । सू-
र्य । शोचिष्केशमिति शोचिः-केशम् । विचक्षणे-

तवार्चयः तेजांसि ज्योतींषि ग्रहनक्षत्राणि भवन्ति । यद्वा—तवा-र्चयितारः ज्योतींषि भवन्तीति ॥

[12]तत्रैव याज्या—वि ज्योतिषेति त्रिष्टुप् ॥ इयमपि 'कृणुष्व पाजः'* इत्यत्र व्याख्याता । प्रतीकग्रहणमत्रास्या गृह्यते । अयमग्निः बृहता ज्योतिषा विभाति विविधं भाति, विश्वानि च महित्वा माहात्म्यानि आविष्कृणुते आविष्करोति । अदेवीः अदेवनशीलाश्च दुरेवाः दुःखेन गन्तव्या मायाः प्रसहते प्रकर्षेणाभिभवतु । किं च—शृङ्गे गोशृङ्गस्थानीये ज्वाले शिशीते निशितीकरोति। किमर्थं? रक्षसो विनाशार्थमिति ॥

[13]अथ सौम्यस्य चरोः पुरोनुवाक्या—उदु त्यमिति गायत्री ॥ व्याख्यता चेयं ग्रहप्रश्ने† । प्रतीकग्रहणमिदम् । देवं सूर्यं जातवेदसं जातानां वेदितारं देवं केतवो रश्मयः उद्वहन्ति विश्वस्य लोकस्य दृशे दर्शनार्थमिति ॥

[14]तत्रैव पुरोनुवाक्या विकल्प्यते—सप्त त्वेति गायत्री ॥ हे

*सं. १-२-१४[17]. †सं. १-४-४३[1].

विचक्षण । चित्रं देवानामुदगाद-
नीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आऽप्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य

ति वि-चक्षण । [15]चित्रम् । देवानाम् । उदिति ।
अगात् । अनीकम् । चक्षुः । मित्रस्य । वरुणस्य ।
अग्नेः । एति । अप्राः । द्यावापृथिवी इति
द्यावा-पृथिवी । अन्तरिक्षम् । सूर्यः । आत्मा ।

देव सूर्य त्वां सप्त सर्पणशीलाः हरितः रसभरणा रश्मयः रथे रंहसो रमन्तेऽस्मिन्नाप इति वा रथे मण्डले वहन्ति शोचिष्केशं दीप्तरश्मि केशस्थानीया रश्मयः केशाः । हे विचक्षण प्रकाशक । चष्टिर्दर्शनकर्मा । विविधं चष्टे पश्यतीति विचक्षणः । 'अनुदात्तेतश्च हलादेः' इति युच् । स त्वमस्मभ्यं चक्षुर्देहीति ॥

[15]तत्रैव याज्या—चित्रमिति त्रिष्टुप् ॥ चित्रं चायनीयं सर्वलोकपूजितं देवानां रश्मीनामिन्द्रादीनां वा ऋत्विजां अनीकं मुखस्थानीयं समूहस्थानीयं वा उदगादुद्गच्छति सर्वात्मकसमष्टिरूपत्वात् । किं च—चक्षुस्स्थानीयं ख्यातिकरं वा मित्रादीनां । अयं देवो द्यावापृथिवी द्यावापृथिव्यौ अन्तरिक्षं च आप्राः आ( प्रागाः ) पूरयति तेजसा । प्रा पूरणे, पुरुषव्यत्ययः । जगतः जङ्गमस्य सर्वस्य तस्थुषः स्थावरस्य सर्वस्यात्मा सूर्यः एकः प्रेरको वा सर्वस्य तस्मादात्मा ; सर्वोपकारकत्वात् । यद्वा—'स यश्चायं पुरुषे । यश्चासावादित्ये ।

आत्मा जगंतस्तस्थुषः ॥ ४७ ॥
च । विश्वें देवा ऋतावृधं ऋतुभिर्
हवनश्रुतः । जुषन्तां युज्यं पयः ।
विश्वें देवाश्शृणुतेमꣳ हवं मे ये
अन्तरिक्षे य उप द्यविष्ठ । ये अ-

जगंतः । तस्थुषः ॥ ४७ ॥ च । [16]विश्वें । देवाः । ऋतावृध इत्यृत–वृधः । ऋतुभिरित्यृतु–भिः । हवनश्रुत इति हवन–श्रुतः । जुषन्ताम् । युज्यम् । पयः । [17]विश्वें । देवाः । शृणुत । इमम् । हवम् । मे । ये । अन्तरिक्षे । ये । उपेति । द्यवि । स्थ ।

स एकः '* इति दर्शनात् आत्मा सर्वस्य । अत्राचार्येण 'समानी याज्यानुवाक्ये भवतः '† इत्येतदनुसारेण 'उदग्ने शुचयस्तव '‡ 'विज्योतिषा'§ 'उदु त्यं जातवेदसम्'¶ 'चित्रं देवानाम्'¶ इति हविषां याज्यानुवाक्याः 'उदुत्यं जातवेदसम्' 'सप्त त्वा हरितो रथे' 'चित्रं देवानाम्' इति पिण्डान् प्रयच्छति इति ॥

[16]अथ 'वैश्वदेवीं सांग्रहणीं निर्वपेद्ग्रामकामः '** इत्यस्य पुरोनुवाक्या—विश्वे देवा ऋतावृध इति गायत्री ॥ विश्वेदेवाः ऋतावृधः ऋतस्य यज्ञस्य सत्यस्य वा वर्धयितारः । ण्यन्तात्क्विप्, 'बहुलमन्यत्रापि' इति णिलुक्, 'अन्येषामपि दृश्यते' इति

*तै. उ. २-८. †सं. २-३-८[4]. ‡सं. १-३-१४[28].
§सं. १-२-१४[17]. ¶सं. १-४-४३[1–2]. **सं. २-३-९.

ग्निजिह्वा उत वा यजत्रा आसद्या-
स्मिन्बर्हिषि मादयध्वम् ॥ ४८ ॥

ये । अग्निजिह्वा इत्यग्नि–जिह्वाः । उत । वा । यजत्राः । आसद्येत्या–सद्य । अस्मिन् । बर्हिषि । मादयध्वम् ॥ ४८ ॥

तदीशानमद्रिस्तस्थुषस्त्रिꣳशच्च ॥ १४ ॥

---

पूर्वपदस्य दीर्घत्वम् । हवनश्रुतः आह्वानस्य श्रोतारः आह्वानप्रयोजनस्य कर्तार इति । ह्वयतेर्लेटि 'बहुलं छन्दसि' इति संप्रसारणम् । ते ऋतुभिः कालावयवैः पर्वादिभिस्सह जुषन्तां सेवन्तां युज्यं योग्यं पयः पयसि चरुं अत एव वचनादिति ॥

[17]तत्रैव याज्या—विश्वे देवाः शृणुतेति त्रिष्टुप् ॥ हे विश्वेदेवाः मे मम इमं हवमाह्वानं शृणुत । ये यूयमन्तरिक्षे स्थ, ये च उप समीपे पृथिव्यां स्थ, ये च दिवि द्युलोके स्थ, ये चाग्निजिह्वाः ये चाग्नेः जिह्वायां स्थिताः हविर्भाजः । तात्स्थ्यात्ताच्छब्द्यम् । यद्वा—अग्निर्जिह्वास्थानीयो येषाम् । छान्दसमन्तोदात्तत्वम् । उतवा अपिवा ये यजत्राः यजनीयाः पूजामात्रभाजः। ते सर्वेपि यूयं अस्मिन् बर्हिषि यज्ञे आसद्य आसित्वा मादयध्वं तृप्यत। मद तृप्तियोगे, चौरादिकः, अनुदात्तेत्, तृप्ताश्चास्माकं श्रमं साधयतेति ॥

देवा मनुष्या देवासुरा अब्रुवन्देवासुरास्तेषां गायत्री प्रजापतिस्ता यत्राग्ने गोभिश्चित्रया मारुतं देवा वसव्या अग्ने मारुतमिति देवा वसव्या देवाश्शर्मण्यास्सर्वाणि त्वष्टा हतपुत्रो देवा वै राजन्यान्नवानवश्चतुर्दश ॥ १४ ॥

देवा मनुष्याः प्रजां पशून्देवा वसव्याः परिदध्यादिदमस्म्यष्टाचत्वारिꣳशत् ॥ ४८ ॥

देवा मनुष्या मादयध्वम् ॥

हरिः ॐम् ॥

हरिः ॐम् ॥ विश्वरूपो वै त्वाष्ट्रः पु-

[1]विश्वरूप इति विश्व—रूपः । वै । त्वाष्ट्रः ।

---

इति श्रीभट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञान-
यज्ञाख्ये द्वितीये काण्डे चतुर्थे प्रश्ने
चतुर्दशोनुवाकस्समाप्तः.
समाप्तश्च प्रपाठकः
हरिः ॐम्



[1]अथ दर्शपूर्णमासब्राह्मणं प्राजापत्यं काण्डं विश्वरूप इत्यादयः षडनुवाकाः । तत्राग्नीषोमीयमेकादशकपालं पूर्णमासे विधा-

रोहितो देवानामासीत्स्वस्रीयोसुरा-
णां तस्य त्रीणि शीर्षाण्यासन्त्सो-
मपानꣳ सुरापानमन्नादनꣳ स प्रत्य-
क्षं देवेभ्यो भागमवदत्परोक्षमसुरे-

पुरोहित इति पुरः-हितः । देवानाम् । आसीत् । स्वस्रीयः । असुराणाम् । तस्य । त्रीणि । शीर्षाणि । आसन् । सोमपानमिति सोम-पानम् । सुरापानमिति सुरा-पानम् । अन्नादनमित्यन्न-अदनम् । सः । प्रत्यक्षमिति प्रति-अक्षम् । देवेभ्यः । भागम् । अवदत् । परोक्षमिति परः-अक्षम् । असुरेभ्यः । सर्वस्मै । वै । प्रत्यक्षमिति प्रति-अक्ष-

स्यन् तदर्थमर्थवादं प्रस्तौति—विश्वरूपो नाम त्वष्टुः पुत्रः देवानां पुरोहितः आसीत् । 'पुरोऽव्ययम्' इति गतित्वात् 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । असुराणां स्वस्रीयः स्वसुः पुत्रः । 'स्वसुश्छः' इति छः, ईयादेशश्च । तस्य सोमपानादीनि त्रीणि शीर्षाण्यासन् 'शीर्षन् छन्दसि' इति शीर्षादेशः । सोमः प्रीयते अनेन इति करणे ल्युट् । एवं सर्वत्र । स देवेभ्यः प्रत्यक्षं भागमवदत् यूयमेव भागार्हा इति देवानां सन्निधौ देवानवदत् । प्रत्यक्षपरोक्षशब्दौ व्याख्यातौ* । असुरेभ्यस्तु परोक्षं भागमवदत् स्वस्रीयत्वात्तेषामसन्निधावेवासुरा भागार्हा इत्यवदत् । अथैवं कुर्वतोऽस्य दुष्टाभिप्रायत्वमस्तीत्याह—सर्वस्मा इति । यस्मै

*सं १-७-३.[1]

भ्यस्सर्वस्मै वै प्रत्यक्षं भागं वदन्ति
यस्मा एव परोक्षं वदन्ति तस्य भाग
उदितस्तस्मादिन्द्रोऽबिभेदीदृङ् वै
राष्ट्रं वि पर्यावर्तयतीति तस्य व-
ज्रमादाय शीर्षाण्यच्छिनद्यत्सोम-

म् । भागम् । वदन्ति । यस्मै । एव । परोक्षमिति परः—अक्षम् । वदन्ति । तस्य । भागः । उदितः । तस्मात् । इन्द्रः । अबिभेत् । ईदृङ् । वै । राष्ट्रम् । वीति । पर्यावर्तयतीति परि—आवर्तयति । इति । तस्य । वज्रम् । आदायेत्या—दाय । शीर्षाणि । अच्छिनत् । यत् । सोमपानमिति सोम—पानम् ॥

भागं दास्यन् भवति तस्मै सर्वस्मा अप्रत्यक्षं भागं वदति लौकिकः । त्वमेव सर्वमर्हसि, इति सन्निधावपहृदया एव वदन्ति । तस्माद्यस्मा एव परोक्षं वदन्ति असन्निधौ स्वयमेव भागभाक्त्वेन बहुमन्यते तस्य भाग उदितः उक्तः उद्गूतः सुनिश्चितः इति यावत्, अन्योऽनुक्तप्रायः । यद्वा—हस्तस्थप्रायः । 'कर्षात्वतो घञोन्त उदात्तः' इति भागशब्दः अन्तोदात्तः । तस्मात् तथा कुर्वतो विश्वरूपादिन्द्रोऽबिभेत् ईदृक् ईदृशमाचरन् राष्ट्रमपि अस्माकमपि विपर्यावर्तयति अस्मत्तोऽपहृत्य असुरेभ्यो दास्यतीति ॥

[2]तस्येत्यादि ॥ गतम् । कपिञ्जलः अपाश्चाति(?) । कल-

पानम् ॥ १ ॥ आसीत्स कपिञ्जलोऽभवद्यत्सुरापानꣳ स कलविङ्को यदन्नादनꣳ स तित्तिरिस्तस्याञ्जलिना ब्रह्महत्यामुपागृह्णात्ताꣳ संवत्सरमबिभस्तं भूतान्यभ्यक्रोशन्ब्रह्महन्निति

१ ॥ आसीत् । सः । कपिञ्जलः । अभवत् । यत् । सुरापानमिति सुरा–पानम् । सः । कलविङ्कः । यत् । अन्नादनमित्यन्न–अदनम् । सः । तित्तिरिः । तस्य । अञ्जलिना । ब्रह्महत्यामिति ब्रह्म–हत्याम् । उपेति । अगृह्णात् । ताम् । संवत्सरमिति सं–वत्सरम् । अबिभः । तम् । भूतानि । अभीति । अक्रोशन् । ब्रह्महन्निति ब्रह्म–हन् । इति । सः ।

विङ्कश्चटकविशेषः । तित्तिरिः तिरश्चिदीनि [तित्तिरिरिति] कटुकरावीति । अञ्जलिनेति । बुद्धिपूर्वकृतत्वख्यापनार्थं अञ्जलिग्रहणम् । तस्येति संबन्धसामान्ये षष्ठी तत्संबन्धेन आत्मनः ब्रह्महत्येति । तस्य वधेनेति वा सामर्थ्याल्लभ्यते । ‘हनस्तच’ इति हन्तेः क्यप् । तामिति । अकृतप्रायश्चित्त एव तां ब्रह्महत्यां संवत्सरं भृतवान् । ब्रह्महन् इति ब्राह्मणं हतवानिति । किंरूपमिदं तवेति तं भूतानि भूतजातान्यनिन्दन् । यद्वा—तस्याभिमुखे स्थित्वा भूतानि ब्रह्महन्नित्याक्रोशमकुर्वन् । ततः स इन्द्रः पृथिवीमुपासीदत् उपसन्न आह अस्या ब्रह्महत्यायास्तृतीयं भागं प्रति-

स पृथिवीमुपासीददस्यै ब्रह्महत्या-
यै तृतीयं प्रति गृहाणेति साऽब्रवीद्वरं
वृणै खातात्पराभविष्यन्तीं मन्ये त-
तो मा परां भूवमिति पुरा ते॥२॥ सं-
वत्सरादपि रोहादित्यब्रवीत्तस्मात्पु-
रा संवत्सरात्पृथिव्यै खातमपि रो-

पृथिवीम् । उपेति । असीदत् । अस्यै । ब्रह्महत्याया इति ब्रह्म—हत्यायै । तृतीयम् । प्रतीति । गृहाण । इति । सा । अब्रवीत् । वरम् । वृणै । खातात् । पराभविष्यन्तीति परा—भविष्यन्तीं । मन्ये । ततः । मा । परेति । भूवम् । इति । पुरा । ते ॥ २ ॥ संवत्सरादिति सं—वत्सरात् । अपीति । रोहात् । इति । अब्रवीत् । तस्मात् । पुरा । संवत्सरादिति सं—वत्सरात् । पृथिव्यै । खातम् ।

गृहाण इति । 'पूरणाद्भागे तीयादन्' इति स्वार्थिकोऽन् प्रत्ययः । षष्ठ्यर्थे चतुर्थी । सेत्यादि । किं वृणै । प्राप्तकाले लोट् । खातात् भूमेः यत्र मृदं खनति, पराभवो विनाशः, पराभविष्यामीति मन्ये ततो निमित्तात् अहं मा पराभूवमिति । अथेन्द्रोऽब्रवीत्—संवत्सरसमाप्तेः प्राक् तव खातमपि रोहात् विरोहति । लेट्याडागमः । तस्मादित्यादि । गतम् ।

हति वारेंवृत५ ह्यस्यै तृतीयं ब्रह्मह-
त्यायै प्रत्यंगृह्णात्तत्स्वकृतमिरिणम-
भवत्तस्मादाहिताग्निश्श्रद्धादेवस्स्व-
कृत इरिणे नावं स्येद्ब्रह्महत्यायै ह्येष

अपीति । रोहति । वारेंवृतमिति वारे-वृतम् । हि । अस्यै । तृतीयम् । ब्रह्महत्याया इति ब्रह्म-हत्यायै । प्रतीति । अगृह्णात् । [3]तत् । स्वकृतमिति स्व-कृतम् । इरिणम् । अभवत् । तस्मात् । आहिताग्निरित्याहित-अग्निः । श्रद्धादेव इति श्रद्धा-देवः । स्वकृत इति स्व-कृते । इरिणे । न । अवेति । स्येत् । ब्रह्महत्याया इति ब्रह्म-हत्यायै ।

वरे हितः वरणकालः । ततस्तृतीयं प्रत्यगृह्णात् पृथिवी ब्रह्महत्यायाः ॥

[3]तदित्यादि ॥ स्वेनैव कृतेन कारणान्तरेण कृतं स्वकृतम् । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । इरिणं ऊषरं श्रद्धादेवः धार्मिकः नावस्येत् न वसेत् । कश्चिदाह—श्रद्धावान्यष्टुकः श्रद्धादेवः स स्वकृते इरिणे देवयजनाध्यवसानं न कुर्यादिति । अत्रैव हेतुः 'ब्रह्महत्यायै ह्येष वर्णः' इति ॥

वर्णस्स वनस्पतीनुपासीदद्स्यै ब्रह्म-
हत्यायै तृतीयं प्रति गृह्णीतेति तेऽब्रु-
वन्वरं वृणामहै वृक्णात् ॥ ३ ॥ प-
राभविष्यन्तो मन्यामहे ततो मा
परा भूमेत्याव्रश्चनाद्वो भूयांस उ-
त्तिष्ठानित्यब्रवीत्तस्मादाव्रश्चनाद्वृक्षा-
णां भूयांस उत्तिष्ठन्ति वारेवृतं

हि । एषः । वर्णः । [4]सः । वनस्पतीन् । उपेति । असीदत् । अस्यै । ब्रह्महत्याया इति ब्रह्म—हत्यायै । तृतीयम् । प्रतीति । गृह्णीत । इति । ते । अब्रुवन् । वरम् । वृणामहै । वृक्णात् ॥ ३ ॥ पराभविष्यन्त इति परा—भविष्यन्तः । मन्यामहे । ततः । मा । परेति । भूम । इति । आव्रश्चनादित्या—व्रश्चनात् । वः । भूयांसः । उदिति । तिष्ठान् । इति । अब्रवीत् । तस्मात् । आव्रश्चनादित्या—व्रश्चनात् । वृक्षाणाम् । भूयांसः । उदिति । तिष्ठन्ति । वारेवृतमिति वारे—वृतम् । हि । एषाम् ।

[4]स वनस्पतीनित्यादि ॥ गतम् । वृक्णादिति । छिन्नात् तदवयवात् । वृश्चतेः निष्ठायां 'ओदितश्च' इति निष्ठानत्वं, तस्या-

ह्येषां तृतीयं ब्रह्महत्यायै प्रत्यगृण्ह-
न्त्स निर्यासोऽभवत्तस्मान्निर्यासस्य
नाश्यं ब्रह्महत्यायै ह्येष वर्णो-
थो खलु य एव लोहितो यो वा-
व्रश्चनान्निर्येषति तस्य नाश्यम् ॥४॥

तृतीयम् । ब्रह्महत्याया इति ब्रह्म–हत्यायै । प्रतीति । अगृह्णन् । सः । निर्यास इति निः–यासः । अभवत् । तस्मात् । निर्यासस्येति निः–यासस्य । न । आश्यम् । ब्रह्महत्याया इति ब्रह्म–हत्यायै । हि । एषः । वर्णः । [5]अथो इति । खलु । यः । एव । लोहितः । यः । वा । आव्रश्चनादित्या–व्रश्चनात् । निर्येषतीति निः–येषति । तस्य । न । आश्यम् ॥ ४ ॥ कामम् । अन्यस्य ।

---

सिद्धत्वात् 'स्कोस्संयोगाद्योरन्ते च' इति सलोपः, 'खरि च' इति चर्त्वम् ॥

[5]अथो खलु अस्ति पक्षान्तरं लोहितो लोहितवर्णः यो वा-व्रश्चनमन्निर्येषति निर्गच्छति । येषृ प्रयत्ने अनुदात्तेत्, व्यत्ययेन परस्मैपदम् । अन्यस्येति । अलोहितस्य अनाव्रश्चनान्निर्गतस्य निर्यासस्य कामं आश्यं नाश्यं वा । काम्यत इति कामम् ॥

कार्ममन्यस्य स स्त्रीषꣳसादमुपा-
सीदद्स्यै ब्रह्महत्यायै तृतीयं प्रति
गृह्णीतेति ता अब्रुवन्वरं वृणामहा
ऋत्वियात्प्रजां विन्दामहै काममा
विजनितोस्सं भवामेति तस्मादृत्वि-
यात्स्त्रियः प्रजां विन्दन्ते काममा वि-

[6]सः । स्त्रीषꣳसादमिति स्त्री-सꣳसादम् । उपेति । असीदत् । अस्यै । ब्रह्महत्याया इति ब्रह्म-हत्यायै । तृतीयम् । प्रतीति । गृह्णीत । इति । ताः । अब्रुवन् । वरम् । वृणामहै । ऋत्वियात् । प्रजामिति प्र-जाम् । विन्दामहै । कामम् । एति । विजनितोरिति वि-जनितोः । समिति । भवाम । इति । तस्मात् । ऋत्वियात् । स्त्रियः । प्रजामिति प्र-जाम् । विन्दन्ते । कामम् । एति । विजनितोरिति

[6]स स्त्रीषंसादमित्यादि ॥ स्त्रियः सह सीदन्त्यस्मिन्निति स्त्रीषंसादं स्त्रीसमूहः । छान्दसं सांहितिकं षत्वम् । ऋत्वियादिति । ऋतुः प्राप्तोऽस्येति ऋत्वियं आर्तवं उच्यते । 'छन्दसि घस्' इति घस्प्रत्ययः, वृषादिः द्रष्टव्यः । विजननं प्रसवः । 'भावलक्षणे स्थेण्' इति जने स्तोसुन् प्रत्ययः । संभवः संयोगः । प्रथमसंयोगे गर्भो भवतीति यद्यपि द्वितीयादिप्रवृत्तिः अप्र-

जनितोस्सं भवन्ति वारेवृतꣳ ह्यासां तृतीयं ब्रह्महत्यायै प्रत्यगृह्णन्थ्सा मलवद्वासा अभवत्तस्मान्मलवद्वाससा न सं वदेत ॥ ५ ॥ न सहासीत नास्या अन्नमद्याद्ब्रह्महत्यायै ह्येषा वर्णं प्रतिमुच्यास्तेऽथो खल्वाहुर्-

वि-जनितोः । समिति । भवन्ति । वारेवृतमिति वारे-वृतम् । हि । आसाम् । तृतीयम् । ब्रह्महत्याया इति ब्रह्म-हत्यायै । प्रतीति । अगृह्णन् । [7]सा । मलवद्वासा इति मलवत्-वासाः । अभवत् । तस्मात् । मलवद्वाससेति मलवत्-वाससा । न । समिति । वदेत ॥ ५ ॥ न । सह । आसीत । न । अस्याः । अन्नम् । अद्यात् । ब्रह्महत्याया इति ब्रह्म-हत्यायै । हि । एषा । वर्णम् । प्रतिमुच्येति प्रति-मुच्य । आस्ते । अथो इति । खलु ।

---

जार्था, तथापि कामानुरूपं आविजनितोः संभवाम, गर्भस्सुखं वर्धतामिति ॥

[7]मलवद्वासा रजस्वला । वासोग्रहणं वाससि रजस्स्पर्शात्प्रभृति अज्ञातेप्यप्रायत्यमस्तीति सूचनार्थम् । तेन वासस्यस्पृष्टे ज्ञानादूर्ध्वमेवाशुद्धिः । तस्मादिति । सहभाषणं संवादः ।

भ्यञ्जनं वाव स्त्रिया अन्नमभ्यञ्जन-
मेव न प्रतिगृह्यं काममन्यदिति
यां मलवद्वाससꣳ संभवन्ति यस्त-
तो जायते सोऽभिशस्तो यामरण्ये

आहुः । अभ्यञ्जनमित्यभि–अञ्जनम् । वाव । स्त्रियाः । अन्नम् । अभ्यञ्जनमित्यभि–अञ्जनम् । एव । न । प्रतिगृह्यमिति प्रति–गृह्यम् । कामम् । अन्यत् । इति । [8]याम् । मलवद्वाससमिति मलवत्–वाससम् । संभवन्तीति सं–भवन्ति । यः । ततः । जायते । सः । अभिशस्त इत्यभि–शस्तः । याम् । अरण्ये ।

तस्य प्रतिषेधः पुरुषार्थः प्रासङ्गिकः । एवं सर्वत्र । नास्या इति । अनया स्पर्शादिना दूषितं नाद्यात् । अनया वा दत्तं न गृह्णीयात् । एषा हि ब्रह्महत्याया वर्णं प्रतिमुच्य देहे बद्ध्वाऽऽस्ते । अथो अपि खल्वाहुस्तद्विदः । अभ्यज्यते परिष्क्रियते शरीरमनेनेत्यभ्यञ्जनं तैलादि । तच्चान्नं स्त्रीणां प्रियतमत्वात्, तस्मात् तदेव तस्या अन्नं न प्रतिग्राह्यम् । केचिदाहुः—तया अभ्यञ्जनं न कर्तव्यमिति । ब्रह्महत्यात्मिकायास्तस्या अभिमततमं सर्वदा वर्ज्यमिति विवक्षितम् ॥

[8]यामित्यादि ॥ अभिशस्तः मिथ्यारोपितपातकेन दूषितः गृहे अभिशस्तः, अरण्ये स्तेनः चोरः । पराचीं स्वापाशनादिना अन्यपराम् । अवाङ्मुखं शयानामित्येके । ह्रीतमुखी लज्जावनतव-

तस्यै स्तेनो यां परांचीं तस्यै ह्रीतमुख्यंपगल्भो या स्नाति तस्यां अप्सु मारुको या ॥ ६ ॥ अभ्यङ्क्ते तस्यै दुश्चर्मा या प्रलिखते तस्यै खलतिरंपमारी याऽऽङ्क्ते तस्यै काणो या दतो धावते तस्यै श्यावदन् या नखानि निकृन्तते तस्यै

तस्यै । स्तेनः । याम् । परांचीम् । तस्यै । ह्रीतमुखीति ह्रीत-मुखी । अपगल्भ इत्यंप-गल्भः । या । स्नाति । तस्याः । अप्स्वित्यप्-सु । मारुकः । या ॥६॥ अभ्यङ्क्त इत्यभि-अङ्क्ते । तस्यै । दुश्चर्मेति दुः-चर्मा । या । प्रलिखत इति प्र-लिखते । तस्यै । खलतिः । अपमारीत्यंप-मारी । या । आङ्क्त इत्या-अङ्क्ते । तस्यै । काणः । या । दतः । धावते । तस्यै । श्यावदन्निति श्याव-दन् । या । नखानि । निकृन्तत इति नि-कृन्तते । तस्यै । कु-

दनः । कर्मधारयादिनिः । अप्रगल्भोऽपगतगल्भः । अप्सु मारुकः अप्सु मरणशीलः । छान्दस उकञ् । दुश्चर्मा कुष्ठी । खलतिः केशशून्यमस्तकः । अपमारी अपमृत्युमान् । यद्वा—कुत्सितमरणः । काणः कुण्ठिताक्षः । श्यावदन् व्याध्यापन्नदन्तः,

कुनखी या कृणत्ति तस्यै क्लीबो या रज्जुꣳ सृजति तस्यां उद्बन्धुको या पर्णेन पिबति तस्यां उन्मादुको या खर्वेण पिबति तस्यै खर्वस्तिस्रो रात्रीर्व्रतं चरेदञ्जलिना वा पिबेदखर्वेण वा पात्रेण प्रजायै गोपीथाय॥७॥

नखी । या । कृणत्ति । तस्यै । क्लीबः । या । रज्जुम् । सृजति । तस्याः । उद्बन्धुक इत्युत्–बन्धुकः। या । पर्णेन । पिबति । तस्याः । उन्मादुक इत्युत्–मादुकः । या । खर्वेण । पिबति । तस्यै । खर्वः । तिस्रः । रात्रीः । व्रतम् । चरेत् । अञ्जलिना । वा । पिबेत् । अखर्वेण । वा । पात्रेण । प्रजाया इति प्र–जायै । गोपीथाय ॥ ७ ॥

यत्सोमपानं ते वृकणात्तस्य नाश्यं वदेत मारुको याऽखर्वेण वा त्रीणि च ॥ १ ॥

---

मलिनदन्तो वा । 'विभाषा श्यावारोकाभ्याम्' इति दतृभावः । कुनखी कुत्सितनखः । कृणत्ति कटं सृजति । विकरणव्यत्ययेन श्नम् । क्लीबः यो न स्त्री न पुमान् । उद्बन्धुकः यो

त्वष्टा हतपुत्रो वीन्द्रꣳ सोममाहर-
त्तस्मिन्निन्द्र उपहवमैच्छत तं नोपा-
ह्वयत पुत्रं मेऽवधीरिति स यज्ञवेशसं
कृत्वा प्रासहा सोममपिबत्तस्य यद्-

[1]त्वष्टा । हतपुत्र इति हत-पुत्रः । वीन्द्रमिति वि-इन्द्रम् । सोमम् । एति । अहरत् । तस्मिन्न् । इन्द्रः । उपहवमित्युप-हवम् । ऐच्छत । तम् । न । उपेति । अह्वयत । पुत्रम् । मे । अवधीः । इति । सः । यज्ञवेशसमिति यज्ञ-वेशसम् । कृत्वा । प्रासहेति प्र-सहा । सोमम् । अपिबत् । तस्य । यत् । अत्यशिष्यतेत्यति-अशिष्यत । तत् ।

---

रज्ज्वा उद्बध्य आत्मानं व्यापादयति । पर्णेन पद्मदळादिना । उन्मादुकः उन्मदनशीलः । पूर्ववदुकञ् । खर्वः खर्वैनसोर्वर्तते(?) खण्डिताङ्गः खर्व इति केचित् । व्रतं यथोक्तस्वरूपं प्रजाया रक्षणार्थम् । औणादिकस्थप्रत्ययः, इडागमश्च ॥

इति द्वितीये पञ्चमे प्रथमोऽनुवाकः.

---

[1]त्वष्टा हतपुत्र इत्यादि ॥ व्याख्यातम्* । यदिति । यस्मादेन-

---

*सं. २-४-१२[1].

त्यशिष्यत तत्त्वष्टाऽऽहवनीयमुप प्रा-
वर्तयत्स्वाहेन्द्रशत्रुर्वर्धस्वेति यदवर्त-
यत्तद्वृत्रस्यं वृत्रत्वं यदब्रवीत्स्वाहे-
न्द्रशत्रुर्वर्धस्वेति तस्मादस्य ॥ ८ ॥
इन्द्रश्शत्रुरभवत्स संभवन्नग्नीषोमा-

त्वष्टां। आहवनीयमित्यां—हवनीयंम्। उपं। प्रेतिं। अवर्तयत्। स्वाहां। इन्द्रंशत्रुरितीन्द्रं—शत्रुः। वर्धस्व। इतिं। यत्। अवर्तयत्। तत्। वृत्रस्यं। वृत्रत्वमितिं वृत्र—त्वम्। [2]यत्। अब्रवीत्। स्वाहां। इन्द्रंशत्रुरितीन्द्रं—शत्रुः। वर्धस्व। इतिं। तस्मांत्। अस्य ॥ ८ ॥ इन्द्रंः। शत्रुंः। अभवत्। सः। संभवन्निति सं—भवन्। अग्नीषोमावित्यग्नी—सो-

---

माहवनीयं त्वष्टा अवर्तयत् उपप्रावर्तयत् पीतशेषेण सोमेनादीपयत् तस्मात्ततो जातः वृत्रः वृत्र इति व्यपदेश्यः भवति। वृतेर्ण्यन्तादौणादिकः कर्मणि रक्प्रत्ययः, 'बहुलमन्यत्रापि' इति णिलुक् ॥

[2]यदब्रवीदिति ॥ इन्द्रस्य शत्रुर्वर्धस्व इति विवक्षन् अन्तोदात्तं इन्द्रशत्रुशब्दं आद्युदात्तम्। ततः [शदेर्ण्यन्तात्] औणादिके क्रुन्प्रत्यये 'बहुलमन्यत्रापि' इति णिलुक्। उक्तश्च—'यथेन्द्रशत्रुस्स्वरतोप-

वृभि समभवत्स इषुमात्रमिषुमात्रं
विष्वङ्ङवर्धत स इमाल्लोकानवृणो-
द्यदिमाल्लोकानवृणोत्तद्वृत्रस्य वृत्र-
त्वं तस्मादिन्द्रोऽबिभेत्स प्रजाप-

मौ । अभि । समिति । अभवत् । सः । इषुमात्र-मिषुमात्रमितीषुमात्रं–इषुमात्रम् । विष्वङ् । अव-र्धत । सः । इमान् । लोकान् । अवृणोत् । यत् । इमान् । लोकान् । अवृणोत् । तत् । वृत्रस्य । वृत्रत्वमिति वृत्र–त्वम् । तस्मात् । इन्द्रः । अबि-भेत् । [3]सः । प्रजापतिमिति प्रजा–पतिम् । उपे-

राधात्'* इति । स संभवन्नित्यादि । व्याख्यातम्† । वृत्रत्वमिति । वृणोतेः त्रप्रत्ययः । इदं द्वितीयं वृत्रत्वमस्य ॥

[3]स प्रजापतिमित्यादि ॥ गतम् । सिक्वा तीक्ष्णं कृत्वा । उत्पाद्येत्येके । अथेन्द्रस्तेन वज्रेण सह वृत्रमभ्यागच्छत् । अथ यदग्नीषोमौ पूर्वं स संभवन् वृत्रोभिसमभवत् [तौ] अग्नीषोमौ प्रहर्तुकाममब्रूतां मा त्वमावां प्रहार्षीः, यं त्वं प्रहर्तुमारभसे अत्रान्तर्भूतौ स्वः आवामिति । हरतेर्लुङि सिचि वृद्धौ 'बहुलं छन्दसि' इतीडभावः । अथेन्द्रोऽब्रवीत् मदीयौ सुहृदौ युवां स्थः । इतिकरणो हेतौ । यस्मादेवं तस्मात् मामेवाभ्येतं त्यज्यतामयं जाल्म इति ।

*पाणिनिशिक्षा–५२. †सं. २-४-१२.२

तिमुपाधावच्छत्रुर्मेऽजनीति तस्मै वज्रꣳ सिक्त्वा प्रायच्छदेतेन जहीति तेनाभ्यायत तावब्रूतामग्नीषोमौ मा ॥ १ ॥ प्र हारावमन्तस्स्व इति मम वै युवꣳ स्थ इत्यब्रवीन्मामभ्येतमिति तौ भागधेयमैच्छेतां ताभ्यामेतमग्नीषोमीयमेकादशकपालं पू-

ति । अधावत् । शत्रुः । मे । अजनि । इति । तस्मै । वज्रम् । सिक्त्वा । प्रेति । अयच्छत् । एतेन । जहि । इति । तेन । अभीति । आयत । तौ । अब्रूताम् । अग्नीषोमावित्यग्नी—सोमौ । मा ॥ १ ॥ प्रेति । हाः । आवम् । अन्तः । स्वः । इति । मम । वै । युवम् । स्थः । इति । अब्रवीत् । माम् । अभि । एति । इतम् । इति । तौ । भागधेयमिति भाग—धेयम् । ऐच्छेताम् । ताभ्याम् । एतम् । अग्नीषोमीयमित्यग्नी—सोमीयम् । एकादशकपालमित्येकादश—कपालम् । पूर्णमास इति

---

अथाग्नीषोमौ भागधेयं किञ्चिदात्मीयं भागं इन्द्राल्लब्धुमैच्छताम् । अथ विदिताभिप्राय इन्द्रः ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे आग्नेयस्य अनुनिर्वाप्यं प्रायच्छत् प्रादात् 'द्यावापृथिवी-

र्णमासे प्रायंच्छत्तावंब्रूतामभि संदं-
ष्टौ वै स्वो न शंक्रुव ऐतुमिति स
इन्द्रं आत्मनंश्शीतरूरावंजनयत्त-
च्छीतरूरयोर्जन्म य एवꣳ शीतरूर-
योर्जन्म वेदं ॥ १० ॥ नैनꣳ शीत-

पूर्ण–मासे । प्रेति । अयच्छत् । [4]तौ । अब्रूताम् । अभीति । संदष्टाविति सं–दष्टौ । वै । स्वः । न । शक्रुवः । ऐतुमित्या–एतुम् । इति । सः । इन्द्रः । आत्मनः । शीतरूराविति शीत–रूरौ । अजनयत् । तत् । शीतरूरयोरिति शीत–रूरयोः । जन्म । यः । एवं । शीतरूरयोरिति शीत–रूरयोः । जन्म । वेदं ॥ १० ॥ न । एनम् । शीतरूराविति शीत–

शुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च' इति छः । तस्मादग्नीषोमीयमेकादशकपालं पूर्णमासे प्रधानमेव कुर्यादिति विधिरनुमीयते ॥

[4]अथाग्नीषोमौ लब्धभागावपि पुनरप्यब्रूतां आवामत्र. वृत्रभोगे अभिसन्दष्टौ स्वः लग्नाविव भवावः । तस्मादिमं हित्वा त्वामैतुमागन्तुं न शक्रुवः न क्षमावह इति । अथेन्द्र आत्मनश्शीतरूराख्यौ रोगविशेषौ मूलस्य जृंभणकारिणौ अजनयत् । देहस्यायासकरौ यत्नविशेषावित्येके । तदित्यादि । गतम् । अथेन्द्रस्ताभ्यां शीतरूराभ्यामेनं वृत्रमभ्यनयत् अभिसंप्राप्तमकरोत् । यद्वा—

रूरौ हुतस्ताभ्यामेनमभ्यनयत्तस्मा-
ज्जञ्जभ्यमानादग्नीषोमौ निरक्रामतां
प्राणापानौ वा एनं तदजहितां प्रा-
णो वै दक्षोऽपानः क्रतुस्तस्माज्जञ्ज-
भ्यमानो ब्रूयान्मयि दक्षक्रतू इति

रूरौ । हुतः । ताभ्याम् । एनम् । अभीति । अन- यत् । तस्मात् । जञ्जभ्यमानात् । अग्नीषोमाविः त्यग्नी–सोमौ । निरिति । अक्रामताम् । [5]प्राणा- पानाविति प्राण–अपानौ । वै । एनम् । तत् । अजहिताम् । प्राण इति प्र–अनः । वै । दक्षः । अपान इत्यप–अनः । क्रतुः । तस्मात् । जञ्जभ्य- मानः । ब्रूयात् । मयि । दक्षक्रतू इति दक्ष–क्रतू ।

अन्येनाविष्टस्य तन्मयत्वं प्रतिपन्नस्य तदात्मतया चेष्टा अभिनयः, तत्कारिणं वृत्रमकरोत् । शीतरूरावावेश्य तद्भावापन्नं वृत्रमभिनयतिस्म । ततः तस्माज्जञ्जभ्यमानात् शीतरूरावेशनेन आस्यं व्यादाय जृम्भमाणगात्रात् वृत्रात् अग्नीषोमौ निरक्रामतां निष्क्रान्तौ । 'लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम्' इति यङ् ॥

[5]अथ प्रसङ्गात् इदं परमुच्यते । यदाऽग्नीषोमौ वृत्रमत्यजतां तत् तदा प्राणापानाविव खल्वेतं वृत्रमजहितां अत्यजताम् । किञ्च—प्राणो दक्षः दक्षयिता । अपानः क्रतुः कारयिता ।

प्राणापानावेवात्मन्धत्ते सर्वमायुरेति
स देवता वृत्रान्निर्हूय वार्त्रघ्नꣳ ह-
विः पूर्णमासे निरवपद्घ्नन्ति वा एनं
पूर्णमास आ ॥११॥ अमावास्या-

इति । प्राणापानाविति प्राण-अपानौ । एव ।
आत्मन्न् । धत्ते । सर्वम् । आयुः । एति । [6]सः ।
देवताः । वृत्रात् । निर्हूयेति निः-हूयं । वार्त्रघ्न-
मिति वार्त्र-घ्नम् । हविः । पूर्णमास इति पूर्ण-
मासे । निरिति । अवपत् । घ्नन्ति । वै । एनम् ।
पूर्णमास-इति पूर्ण-मासे । एति ॥ ११॥ अमा-

तस्माज्जअभ्यमानो ब्रूयान्मयि दक्षक्रतू इति न निष्क्रान्ताविति । एवं ब्रुवन्प्राणापानावात्मनि स्थापयते । ततस्सर्वमायुः प्राप्नोति । इदं च क्रत्वङ्गमेवेति राद्धान्तितम्—'अहीनवत्पुरुषधर्मस्तदर्थत्वात्'* इत्यत्र ॥

[6]अथाज्यभागयोर्विशेष उच्यते—अथेन्द्रो देवता अग्नीषोमादीन् वृत्रान्निर्हूय निर्गतान् कृत्वा हन्तुं योग्यं वृत्रं कृत्वा पूर्णमासे वार्त्रघ्नं वृत्रहस्सम्बन्धि हविराज्यभागलक्षणम् । यद्वा—वृत्रहन्त्रर्थं हविराज्यं निरवपत् स्थाल्यां प्रथमं कृतवान् । हेतुमाह—एनं हि वृत्रं पूर्णमासे देवा घ्नन्ति तमोरूपत्वाद्विनाशोपायस्तदा भवति ।

*मीमां. ३-४-२०.

यां प्याययन्ति तस्माद्वार्त्रघ्नी पूर्णमासेऽनूच्येते वृधन्वती अमावास्यायां तत्सꣳस्थाप्य वार्त्रघ्नꣳ ह-

वास्यायामित्यमा-वास्यायाम्। प्याययन्ति। तस्मात्। वार्त्रघ्नी इति वार्त्र-घ्नी। पूर्णमास इति पूर्ण-मासे। अन्विति। उच्येते इति। वृधन्वती इति वृधन्-वती। अमावास्यायामित्यमा-वास्यायाम्। तत्। सꣳस्थाप्येति सं-स्थाप्य। वार्त्रघ्नमिति वार्त्र-घ्नम्। हविः। वज्रम्। आदायेत्या-

तस्माद्वार्त्रघ्नी वृत्रहन्तुः सम्बन्धिन्यौ तल्लिङ्गवत्यौ ऋचौ पूर्णमासेऽनूच्येते आज्यभागयोः पुरोनुवाक्ये क्रियेते[....ते 'अग्निर्वृत्राणि' 'त्वं सोम'* इत्येते। वृधन्वती वृधिधातुयुक्ते अमावास्यायां] 'अग्निः प्रत्नेन' 'सोम गीर्भिः'* इत्येते। वृधेरौणादिके कनिन्प्रत्यये मतुप्, अनो नुट्। वार्त्रघ्नचोः वृत्रस्यैव वृद्धिश्शब्देनोच्यते। स एव पौर्णमासे हन्यते। वृधन्वत्योस्तु सोमस्य वृद्धिश्शब्देनोच्यते। तद्वृद्ध्या वृत्रस्य वृद्धिरित्यर्थात् गम्यते। वृत्रश्च तदानीं वर्धते इति समृद्धिः। उभयत्रापि 'वाच्छन्दसि' इति पूर्वसवर्णदीर्घत्वम्॥

तत्संस्थाप्येत्यादि॥ गतम्। ते इत्यादि। पूर्वं वर्धमानो वृत्रो ये द्यावापृथिव्यौ अभिसमभवत् ते अब्रूतां मा आवां प्रहाः प्रहार्षीः आवयोः खल्वसौ वृत्रः श्रितः तस्मादस्मदाश्रयं प्रहर्तुं

*ब्रा. ३-५-६.

विर्वज्रमादाय पुनरभ्यायत ते अब्रू-
तां द्यावापृथिवी मा प्र हारावयोर्वै
श्रित इति ते अब्रूतां वरं वृणावहै
नक्षत्रविहिताऽहमसानीत्यसावब्रवी-
च्चित्रविहिताऽहमितीयं तस्मान्नक्ष-
त्रविहिताऽसौ चित्रविहितेयं य

दाय । पुनः । अभीति । आयत । ते इति ।
अब्रूताम् । द्यावापृथिवी इति द्यावा-पृथिवी । मा ।
प्रेति । हाः । आवयोः । वै । श्रितः । इति । ते
इति । अब्रूताम् । वरम् । वृणावहै । नक्षत्रविहि-
तेति नक्षत्र-विहिता । अहम् । असानि । इति ।
असौ । अब्रवीत् । चित्रविहितेति चित्र-विहिता ।
अहम् । इति । इयम् । तस्मात् । नक्षत्रविहितेति
नक्षत्र-विहिता । असौ । चित्रविहितेति चित्र-
विहिता । इयम् । यः । एवम् । द्यावापृथिव्योरि-

नार्हसीति । पुनश्च ते अब्रूतां—वरमित्यादि । नक्षत्रविहिता नक्षत्रैर्विविधं विहिता स्थापिता नक्षत्राधीनस्थितिः । यद्वा—नक्षत्रैः विशिष्टावस्थानशरीरा । चित्रविहिता चित्रैः नानाविधैः पूजितैर्वा कुलशैलैः समुद्रादिभिः विहिता तदधीनस्थितिः, तद्विशिष्टाव-

एवं द्यावापृथिव्योः ॥ १२ ॥ वरं वेदैनं वरो गच्छति स आभ्यामेव प्रसूत इन्द्रो वृत्रमहन्ते देवा वृत्रꣳ हत्वाऽग्नीषोमावब्रुवन् हव्यं नो वहतमिति तावब्रूतामपतेजसौ वै त्यौ वृत्रे वै त्ययोस्तेज इति तेऽब्रुवन्क

ति द्यावा-पृथिव्योः ॥१२॥ वरम् । वेद । एति । एनम् । वरः । गच्छति । सः । आभ्याम् । एव । प्रसूत इति प्र-सूतः । इन्द्रः । वृत्रम् । अहन्न् । ते । देवाः । वृत्रम् । हत्वा । अग्नीषोमावित्यग्नी-सोमौ । अब्रुवन्न् । हव्यम् । नः । वहतम् । इति । तौ । अब्रूताम् । अपतेजसावित्यप-तेजसौ । वै । त्यौ । वृत्रे । वै । त्ययोः । तेजः । इति । ते । अब्रुवन्न् । कः । इदम् । अच्छं । एति । इति ।

स्थाना वा । उभयत्रापि 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । स इत्यादि । तत्र इन्द्रः द्यावापृथिवीभ्यां प्रसूतः अनुज्ञातः वृत्रं हतवान् । अथ ते देवा इन्द्रेण राज्ञा वृत्रं हत्वा । अग्नीषोमावित्यादि । गतम् । त्याविति । ताविमौ वामपगततेजस्कौ स्वः वृत्रे खलु त्ययोः । [योस्तेज इति । ते देवा अब्रुवन् को नामेदं तेज आप्तुं गच्छतीति] पुनः स्वयमेव

इदमृच्छैतीति गौरित्यब्रुवन्गौर्वाव
सर्वस्य मित्रमिति साऽब्रवीत् ॥
॥ १३ ॥ वरं वृणै मय्येव सतोभ-
येन भुनजाध्वा इति तद्गौराहरत्त-
स्माद्गवि सतोभयेन भुञ्जत एतद्वा
अग्नेस्तेजो यद्घृतमेतत्सोमस्य यत्प-

गौः । इति । अब्रुवन् । गौः । वाव । सर्वस्य । मित्रम् । इति । [8]सा । अब्रवीत् ॥ १३ ॥ वरम् । वृणै । मयि । एव । सता । उभयेन । भुनजाध्वै । इति । तत् । गौः । एति । अहरत् । तस्मात् । गवि । सता । उभयेन । भुञ्जते । एतत् । वै । अग्नेः । तेजः । यत् । घृतम् । एतत् । सोमस्य । यत् । पयः । यः । एवं । अग्नीषोमयोरित्यग्नी—सो-

देवा अब्रुवन् ननु गौः सर्वस्य मित्रं भवति तस्मात् सर्वत्र गच्छन्तीमिमां न कश्चिन्निवारयति तस्मादियमेव गत्वा तत्तेज आहरत्विति ॥

[8]साऽब्रवीदित्यादि ॥ यथाऽऽज्ञापितं देवैः तदिदं क्रियत एव मया, अहमपि किञ्चित् वरं वृणे वरितुं प्राप्तकालाऽहम् । किं तदिति चेत्? इदं विज्ञाप्यते—मय्येव सता उभयेन घृतेन

यो य एवमग्नीषोमयोस्तेजो वेदं तेजस्व्येव भवति ब्रह्मवादिनो वदन्ति किंदेवत्यं पौर्णमासमिति प्राजापत्यमिति ब्रूयात्तेनेन्द्रं ज्येष्ठं

मयोः । तेजः । वेद । तेजस्वी । एव । भवति । [9]ब्रह्मवादिन इति ब्रह्म–वादिनः । वदन्ति । किंदेवत्यमिति किं–देवत्यम् । पौर्णमासमिति पौर्ण–मासम् । इति । प्राजापत्यमिति प्राजा–पत्यम् । इति । ब्रूयात् । तेन । इन्द्रम् । ज्येष्ठम् । पुत्रम् ।

पयसा च भुनजाध्वै सुहिता भवितुमर्हथ । भोगेन सौहित्यं लक्ष्यते । लेटि आडागमः, 'वैतोन्यत्र' इत्यैकारः, 'छन्दस्युभयथा' इति लेटि आर्धधातुकत्वेन ङित्त्वाभावात् 'श्नसोरल्लोपः' इति न प्रवर्तते । तदित्यादि । गतम् ॥

[9]आज्यभागयोर्विधिः—ब्रह्मवादिन इत्यादि ॥ कस्यै देवतायै इदम् । 'देवतान्तात्तादर्थ्ये यत्' । पौर्णमास्यां कार्यं कर्म पौर्णमासम् । तदिदं किंदेवत्यमिति यावद्ब्रह्मवादिनः पृच्छेयुः तदा ब्रूयादुत्तरं—प्राजापत्यमिति । प्रदर्शनार्थत्वात् आमावास्यमपि गृह्यते । यदुक्तं 'परमेष्ठिनो वा एष यज्ञोग्र आसीत्'* इति । तदवसरे स्मारयति । इन्द्रग्रहणं चोपलक्षणं तत्रोक्तानां त्रयाणां इन्द्राग्निसोमानाम् । एतदुक्तं भवति—प्रशस्ततमान् पुत्रान् इन्द्राग्निसोमान्

*सं. १-६-९[2].

पुत्रं निरवासाययदिति तस्माज्ज्येष्ठं
पुत्रं धनेन निरवंसाययन्ति ॥१४॥
इन्द्रं वृत्रं जघ्निवाꣳसं मृधोभि प्रा-

निरवासाययदिति निः—अवासाययत् । इति । तस्मात् । ज्येष्ठम् । पुत्रम् । धनेन । निरवंसायन्तीति निः—अवंसाययन्ति ॥ १४ ॥

अस्य मा वेदा द्यावापृथिव्योरब्रवीदिति
तस्माच्चत्वारि च ॥ २ ॥

[1]इन्द्रम् । वृत्रम् । जघ्निवाꣳसम् । मृधः । अभि । प्रेति । अवेपन्त । सः । एतम् । वैमृधम् ।

---

प्रजापतिरनेन कर्मणा निरवासाययत् देवान्तरेभ्यो व्यावृत्तानकरोत् प्रशस्ततमान् मन्यमानो ज्येष्ठभागमिन्द्राग्न्यादिभ्यः कर्मैतदुक्तवानिति । तस्मादित्यादि । वयसा विद्यादिना वा प्रशस्यतमं पुत्रं धनेन निरवसाययन्ति पुत्रान्तरेभ्यो व्यावृत्तमधिकधनं कुर्वन्ति पितरः । 'शाच्छासाह्वाव्यावेपाम्' इति युक्, 'गतिर्गतौ' इति पूर्वस्य निघाताभावः 'उदात्तवता तिङा' इति समासः ॥

इति द्वितीये पञ्चमे द्वितीयोऽनुवाकः.

---

[1]इन्द्रं वृत्रमित्यादि ॥ वैमृधस्यैकादशकपालस्य विधिः । वृत्रं

वैपन्त स एतं वैमृधं पूर्णमासेऽनु-
निर्वाप्यमपश्यत्तं निरवपत्तेन वै स
मृधोपाहत यद्वैमृधः पूर्णमासेऽनुनि-
र्वाप्यो भवति मृध एव तेन यजमा-
नोप हत इन्द्रो वृत्रं हत्वा देवता-
भिश्चेन्द्रियेण च व्यार्ध्यत स एतमा-

पूर्णमास इति पूर्ण—मासे । अनुनिर्वाप्यमित्यनु—निर्वाप्यम् । अपश्यत् । तम् । निरिति । अवपत् । तेन । वै । सः । मृधः । अपेति । अहत । यत् । वैमृधः । पूर्णमास इति पूर्ण—मासे । अनुनिर्वाप्य इत्यनु—निर्वाप्यः । भवति । मृधः । एव । तेन । यजमानः । अपेति । हते । [2]इन्द्रः । वृत्रम् । हत्वा । देवताभिः । च । इन्द्रियेण । च । वीति । आर्ध्यत । सः । एतम् । आग्नेयम् । अष्टाकपालमित्य-

हतवन्तमिन्द्रं मृधस्सङ्ग्रामाभिमुख्येन आगत्य प्रकर्षेणावेपयन् । स एतमित्यादि । विमृदिन्द्रः तस्येदं कर्म वैमृधं प्रधानानन्तरं अनुनिर्वाप्यम् । गतमन्यत् ॥

[2]इन्द्रो वृत्रं हत्वेत्यादि ॥ ऐन्द्राग्नस्य विधिः, ऐन्द्रस्य च दध्नः ॥

ग्नेयमष्टाकपालममावास्यायामप-
श्यदैन्द्रं दधि ॥१५॥ तं निरवपत्तेन
वै स देवताश्चेन्द्रियं चावारुन्ध यदा-
ग्नेयोष्टाकपालोमावास्यायां भवत्यैन्द्रं
दधि देवताश्चैव तेनेन्द्रियं च यज-
मानोऽव रुन्ध इन्द्रस्य वृत्रं जघ्नुष

ष्टा–कपालम् । अमावास्यायामित्यमा–वास्या-
याम् । अपश्यत् । ऐन्द्रम् । दधि ॥ १५ ॥ तम् ।
निरिति । अवपत् । तेन । वै । सः । देवताः ।
च । इन्द्रियम् । च । अवेति । अरुन्ध । यत् ।
आग्नेयः । अष्टाकपाल इत्यष्टा–कपालः । अमा-
वास्यायामित्यमा–वास्यायाम् । भवति । ऐन्द्रम् ।
दधि । देवताः । च । एव । तेन । इन्द्रियम् ।
च । यजमानः । अवेति । रुन्धे । [3]इन्द्रस्य । वृ-
त्रम् । जघ्नुषः । इन्द्रियम् । वीर्यम् । पृथिवीम् ।

---

[3]इन्द्रस्य वृत्रं जघ्नुष इत्यादिना सान्नाय्यादीनामुत्पत्तिक्रमं दर्शयति—वृत्रं हतवत इन्द्रस्य इन्द्रियं वीर्यं च पृथिवीमनुप्रविश्य व्यार्छत् विविधं व्याप्तमभवत् । अतः 'पाघ्रा' इत्यादिना ऋच्छादेशः । तच्च पृथिवीमनुप्रविष्टं इन्द्रियं वीर्यं च ओषधयो वीरुधश्चाभवन् तदात्मना परिणतमभूत्—

इन्द्रियं वीर्यं पृथिवीमनु व्यार्छत्तदो-
षधयो वीरुधोऽभवन्त्स प्रजापतिमु-
पाधावद्वृत्रं मे जघ्नुष इन्द्रियं वीर्यम्
॥१६॥ पृथिवीमनु व्यारत्तदोषधयो
वीरुधोऽभूवन्निति स प्रजापतिः पशू-
नब्रवीदेतदस्मै सं नयतेति तत्पशव

अनु । वीति । आर्छत् । तत् । ओषधयः । वीरुधः । अभवन् । सः । प्रजापतिमिति प्रजा–पतिम् । उपेति । अधावत् । वृत्रं । मे । जघ्नुषः । इन्द्रियम् । वीर्यम् ॥ १६ ॥ पृथिवीम् । अनु । वीति । आरत् । तत् । ओषधयः । वीरुधः । अभूवन् । इति । सः । प्रजापतिरिति प्रजा–पतिः । पशून् । अब्रवीत् । एतत् । अस्मै । समिति । नयत । इति । तत् । पशवः । ओषधीभ्य इत्यो-

---

'ओषध्यः फलपाकान्ता लता गुल्माश्च वीरुधः' इति।

अथेन्द्रः प्रजापतिमुपाधावत् 'वृत्रं जघ्नुषः' इत्यादि वदन् । अथ तच्छ्रुत्वा प्रजापतिः पशूनब्रवीत् एतदिन्द्रियादिकमस्मै इन्द्राय संनयत सम्यगिमं प्रापयतेति । पशवश्च ओषधीभ्यः ओषधीनां सकाशात् तृणादिभक्षणद्वारेण तदिन्द्रियादिकं आत्मन्याधिसमन-

ओषधीभ्योऽध्यात्मन्त्समनयन्तत्प्र-
त्यदुहन् यत्समनयन्तत्सांनाय्य-
स्यं सांनाय्यत्वं यत्प्रत्यदुहन्तत्प्रति-
धुषः प्रतिधुक्त्वः समनैषुः प्रत्य-
धुक्षन्न तु मयि श्रयत इत्यब्र-

षधि–भ्यः । अधीति । आत्मन्न् । समिति । अन-
यन्न् । तत् । प्रतीति । अदुहन्न् । यत् । समनय-
न्निति सं–अनयन्न् । तत् । सांनाय्यस्येति सां–ना
य्यस्य । सान्नाय्यत्वमिति सान्नाय्य–त्वम् । यत् ।
प्रत्यदुहन्निति प्रति–अदुहन्न् । तत् । प्रतिधुष इति
प्रति–धुषः । प्रतिधुक्त्वमिति प्रतिधुक्–त्वम् । 4 स-
मिति । अनैषुः । प्रतीति । अधुक्षन्न् । न । तु । म-
यि । श्रयते । इति । अब्रवीत् । एतत् । अस्मै

यन् आत्मनि सम्यगानीतवन्तः । तच्चानुनीतं सञ्जातं प्रत्यदुहन् ओषधीभ्य आत्मनि दुग्धं प्रत्यदुहन् इन्द्राय पुनरदुहन् । एवं सन्नयनात् सान्नाय्यत्वं, प्रतिदोहनात् प्रतिधुक्त्वं पयसः । प्रतिदुह्यत इति प्रतिधुक्, छान्दसो वर्णविकारः । नयतेर्ण्यति 'पाय्यसान्नाय्य' इति निपात्यते, निपातनादेवाभिमतस्वरसिद्धिः ॥

4अथेन्द्रः प्रजापतिमब्रवीत् मदीयमिन्द्रियादिकं पशवः ओषधीभ्य आत्मनि समनैषुः । मह्यं च प्रत्यधुक्षन् । 'शल इगुप-

वोदेतदस्मै ॥ १७ ॥ शृतं कुरुते-
त्यब्रवीत्तदस्मै शृतमकुर्वन्निन्द्रियं
वावास्मिन्वीर्यं तदश्रयन्तच्छृतस्यं
शृतत्वꣳ समनैषुः प्रत्यधुक्षञ्छृत-
मक्रन्न तु मा धिनोतीत्यब्रवीदेत-

॥ १७ ॥ शृतम् । कुरुत । इति । अब्रवीत् । तत् । अस्मै । शृतम् । अकुर्वन् । इन्द्रियम् । वाव । अस्मिन् । वीर्यम् । तत् । अश्रयन् । तत् । शृतस्यं । शृतत्वमिति शृत—त्वम् । [5]समिति । अनैषुः । प्रतीति । अधुक्षन् । शृतम् । अक्रन् । न । तु । मा । धिनोति । इति । अब्रवीत् । एतत् । अस्मै ।

---

धादनिटः क्सः' । कर्तुमपि न श्रयते न पच्यते न मयि प्रीतिं करोति । श्रिञ् पाके, व्यत्ययेन शप् । अथ प्रजापतिः पशूनब्रवीत् एतदस्मै इन्द्राय शृतं पक्वं कुरुत । यद्वा— न तु मयि श्रयते स्थितिं न करोति । श्रीञ् सेवायाम् । एवमिन्द्रेणोक्ते प्रजापतिरब्रवीत् एतदस्मै शृतं पक्वं कुरुत यथाऽस्मिन् श्रयत इति । शृतेति 'शृतं पाके' इति निपात्यते । यद्वा—शृणातेः शृतमिति छान्दसं संप्रसारणम् ॥

[5]अक्रन् ॥ लुङि 'मन्त्रे घस' इति च्लेर्लुक् । धिविं प्रीणने, इदित्वान्नुम्, 'धिन्विकृण्व्योरच' इत्युप्रत्ययः । अथ प्रजापतिरब्रवीत् पशूनेतदस्मै दधि प्रीणनं कुरुतेति । ते चास्मै

दस्मै दधि कुरुतेत्यब्रवीत्तदस्मै
दध्यकुर्वन्तदेनमधिनोत्तद्दध्नो दधित्वं
ब्रह्मवादिनो वदन्ति दध्नः पूर्वस्या-
वदेयम् ॥ १८ ॥ दधि हि पूर्वं क्रि-
यत इत्यनादृत्य तच्छृतस्यैव पू-

दधि । कुरुत । इति । अब्रवीत् । तत् । अस्मै ।
दधि । अकुर्वन् । तत् । एनम् । अधिनोत् । तत् ।
दध्नः । दधित्वमिति दधि-त्वम् । [6]ब्रह्मवादिन इति
ब्रह्म-वादिनः । वदन्ति । दध्नः । पूर्वस्य । अवदे-
यमित्यव-देयम् ॥ १८ ॥ दधि । हि । पूर्वम् ।
क्रियते । इति । अनादृत्येत्यना-दृत्य । तत् । शृ-
तस्य । एव । पूर्वस्य । अवेति । द्येत् । इन्द्रियम् ।

---

प्रीणनमकुर्वन् । तदेनमित्यादि । गतम् । धिनोतीति दधि । धिनोतेः किः द्विर्वचनादि । दधातिर्वा प्रीणने, ( इदित्वान्नुम्, ) ‘ आदृगमहन ’ इति किन्प्रत्ययः । दध्न इत्यनङादेशरयोदात्तत्वादुदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् ॥

[6]ब्रह्मवादिन इत्यादि ॥ अन्तिमायामेव रजन्यां दध्युत्पाद्यते उत्तरेद्युः प्रातर्दोह इति दध्नः पूर्वत्वमिति । एतद्दूषयति— अनादृत्येत्यादि । यदिन्द्रस्येन्द्रियादिकमोषधीभ्य आनीय इन्द्राय

वैस्यावं द्येदिन्द्रियमेवास्मिन्वीर्यꣳ श्रित्वा दध्नोपरिष्टाद्धिनोति यथापूर्वमुपैति यत्पूतीकैर्वा पर्णवल्कैर्वाऽऽतञ्चयात्सौम्यं तद्यत्क्वलै राक्षसं तद्यत्तण्डुलैर्वैश्वदेवं तद्यदातञ्चनेन मा-

एव । अस्मिन् । वीर्यम् । श्रित्वा । दध्ना । उपरिष्टात् । धिनोति । यथापूर्वमिति यथा—पूर्वम् । उपैति । एति । [7]यत् । पूतीकैः । वा । पर्णवल्कैरिति पर्ण—वल्कैः । वा । आतञ्च्यादित्या—तञ्च्यात् । सौम्यम् । तत् । यत् । क्वलैः । राक्षसम् । तत् । यत् । तण्डुलैः । वैश्वदेवमिति वैश्व—देवम् । तत् । यत् । आतञ्चनेनेत्या—तञ्चनेन । मानुषम् । तत् । यत् । दध्ना । तत् । सेन्द्रमिति

प्रतिदुग्धं तदिन्द्रे प्रथमं श्रित्वा सेवितं पक्वं वा कृत्वा उपरिष्टादुत्तरकालं दधिभागेन इन्द्रं धिनोति तस्माच्छ्रितस्यैव पूर्वत्वम् । गतमन्यत् ॥

[7]यदित्यादि ॥ पूतीकः सोमसदृशो लताविशेषः । पर्णवल्कः पलाशवृन्तम् । आतञ्चनं द्रव्यान्तरसंप्रयोगेन पयसो घनीभावः । तञ्चू सङ्कोचने । क्वलः ह्रस्वबदरः । तण्डुलाः—गताः* । आतञ्चनद्रव्यं दधि प्रसिद्धम् । सेन्द्रमिन्द्रेण देवतया सहितम् । अ-

*सं, १–८–९.

नुषं तद्यद्दध्ना तत्सेन्द्रं दध्ना तनक्ति ॥ ११ ॥ सेन्द्रत्वायाग्निहोत्रोच्छेषणमभ्यातनक्ति यज्ञस्य संतत्या इन्द्रो वृत्रꣳ हत्वा परां परावतमगच्छदपाराधमिति मन्यमानस्तं देवताः प्रैषमैच्छन्त्सोऽब्रवीत्प्रजापतिर्यः

स–इन्द्रम् । दध्ना । एति । तनक्ति ॥ ११ ॥ सेन्द्रत्वायेति सेन्द्र–त्वाय । अग्निहोत्रोच्छेषणमित्यग्निहोत्र–उच्छेषणम् । अभ्यातनक्तीत्यभि–आतनक्ति । यज्ञस्य । संतत्या इति सं–तत्यै । [8]इन्द्रः । वृत्रम् । हत्वा । पराम् । परावतमिति परा–वतम् । अगच्छत् । अपेति । अराधम् । इति । मन्यमानः । तम् । देवताः । प्रैषमिति प्र–एषम् । ऐच्छन् । सः । अब्रवीत् । प्रजापतिरिति प्रजा–पतिः । यः । प्रथमः । अनुविन्दतीत्यनु–विन्दति । तस्य ।

ग्निहोत्रोच्छेषणं अग्निहोत्रशेषः यवागूशेषः । तदभ्यातनक्ति दध्ना आतच्य उपर्यातनक्ति यज्ञस्याविच्छेदाय ॥

[8]इन्द्रो वृत्रं हत्वेति ॥ पितृयज्ञविधिः परां परावतमिति । दूरदेशमगच्छत् । ‘उपसर्गाच्छन्दसि धात्वर्थे’ इति वनिप् ।

प्रथमोऽनुविन्दति तस्यं प्रथमं भा-
गधेयमिति तं पितरोऽन्वविन्दन्त-
स्मात्पितृभ्यः पूर्वेद्युः क्रियते सो-
मावास्यां प्रत्यागच्छत्तं देवा अभि
समगच्छन्तामा वै नः ॥२०॥ अद्य

प्रथमम् । भागधेयमिति भाग–धेयम् । इति ।
तम् । पितरः । अन्विति । अविन्दन् । तस्मात् ।
पितृभ्य इति पितृ–भ्यः । पूर्वेद्युः । क्रियते। सः ।
अमावास्यामित्यमा–वास्याम् । प्रति । एति । अ-
गच्छत् । तम् । देवाः । अभि । समिति । अग-
च्छन्त । अमा । वै । नः ॥ २० ॥ अद्य । वसु ।

अपाराधं अपारात्सम् । छान्दसस्सिज्लुक् । वृत्रं हतवानिति साप-
राधमात्मानं मन्यमानो दूरात् गन्तुं श्रेय इति निश्चित्यागच्छत् ।
अथ देवास्तं प्रैषं प्राप्तुमैच्छन् । इष गतौ । सोऽब्रवीदित्यादि । गतम् ।
अनुविन्दति अनुक्रमेण लभते । पूर्वेद्युः पूर्वस्मिन्नह्नि । 'सद्यः
परुत्' इत्यादिना निपात्यते ॥

[1]अमावास्यां प्रति, लक्षणे कर्मप्रवचनीयत्वं, अमावास्यया गमनं
लक्ष्यते इति । अथामावास्यायां देवास्तमिन्द्रमभि समगच्छन्त
आभिमुख्येन सङ्गता अभवन् । कथं वदन्तः? अद्य अस्मिन्न-
ह्नि नः अस्माकं वसु अस्मदीयं धनं इन्द्रोयं अमा सहास्माभिर्व-

वसु वसतीतीन्द्रो हि देवानां वसु
तदमावास्याया अमावास्यत्वं ब्र-
ह्मवादिनो वदन्ति किंदेवत्यꣳ सा-
न्नाय्यमिति वैश्वदेवमिति ब्रूयाद्विश्वे
हि तद्देवा भागधेयमभि समगच्छ-

वसति । इति । इन्द्रः । हि । देवानाम् । वसु ।
तत् । अमावास्याया इत्यमा-वास्यायाः । अमा-
वास्यत्वमित्यमावास्य-त्वम् । [10]ब्रह्मवादिन इति
ब्रह्म-वादिनः । वदन्ति । किंदेवत्यमिति किं-देव-
त्यम् । सांनाय्यमिति सां-नाय्यम् । इति । वैश्व-
देवमिति वैश्व-देवम् । इति । ब्रूयात् । विश्वे ।
हि । तत् । देवाः । भागधेयमिति भाग-धेयम् ।

सतीति । एवं देवा वदन्त एनमिन्द्रमभिगताः समागताः । इन्द्रो हीति । वसु वरिष्ठं द्रव्यं(वा) । अमावास्यत्वमिति अमा सह वसन्त्यस्यामिन्द्रो देवताश्चेत्यमावास्या । अधिकरणे ण्यत् । इदञ्च व्युत्पत्त्यन्तरं, अमा वसतः सूर्याचन्द्रमसावस्यामिति व्युत्पत्तिदर्शनात् ॥

[10]वैश्वदेवमिति ॥ वृत्रवधादनन्तरमिन्द्रियं वीर्यं च दूरतरं गतम् । पितृभिः प्रत्यानीतमिन्द्रममावास्यायां सान्नाय्येन प्रवृ-

न्तेत्यथो खल्वैन्द्रमित्येव ब्रूयादि-
न्द्रं वाव ते तद्भिषज्यन्तोऽभि समग-
च्छन्तेति ॥ २१ ॥

अभीति । समगच्छन्तेति सं—अगच्छन्त । इति । [11]अथो इति । खलु । ऐन्द्रम् । इति । एव । ब्रूयात् । इन्द्रम् । वाव । ते । तत् । भिषज्यन्तः । अभि । समिति । अगच्छन्त । इति ॥ २१ ॥

दधि मे जघ्नुषं इन्द्रियं वीर्यमित्यब्रवीदेतदस्मा अवदेयं तनक्ति नो द्विचत्वारिꣳशच्च ॥ ३ ॥

द्धेन्द्रियवीर्यं कर्तुं विश्वेदेवास्तत्सान्नाय्य एवैन्द्रं भागधेयं अभिसमगच्छन्त । तस्माद्वैश्वदेवं भवितुं युक्तमिति ॥

[11]दूषयति—अथो इति ॥ तदानीं देवा इन्द्रं भिषज्यन्त एवाभिसमगच्छन्त न त्वात्मभागलब्धये । तल्लाभहेतौ शतृप्रत्ययः । इन्द्रभैषज्यार्थमेव अभिसमगच्छन्त । तस्माद्विश्वे देवाः प्रसक्ता एवेति ऐन्द्रमित्येवोत्तरं समीचीनमिति । भिषज्यतिः कण्ड्वादिर्यगन्तः ॥

इति द्वितीये पञ्चमे तृतीयोनुवाकः.

---

ब्रह्मवादिनो वदन्ति स त्वै दर्शपू-
र्णमासौ यजेत य एनौ सेन्द्रौ यजे-
तेति वैमृधः पूर्णमासेऽनु निर्वाप्यो
भवति तेन पूर्णमासस्सेन्द्र ऐन्द्रं द-
ध्यमावास्यायां तेनामावास्या से-
न्द्रा य एवं विद्वान्दर्शपूर्णमासौ
यजते सेन्द्रावेवैनौ यजते श्वश्श्वो-

[1]ब्रह्मवादिन इति ब्रह्म-वादिनः । वदन्ति । सः । तु । वै । दर्शपूर्णमासाविति दर्श-पूर्णमासौ । यजेत । यः । एनौ । सेन्द्राविति स-इन्द्रौ । यजेत । इति । वैमृधः । पूर्णमास इति पूर्ण-मासे । अनुनिर्वाप्य इत्यनु-निर्वाप्यः । भवति । तेन । पूर्णमास इति पूर्ण-मासः । सेन्द्र इति स-इन्द्रः। ऐन्द्रम् । दधि । अमावास्यायामित्यमा-वास्यायाम् । तेन । अमावास्येत्यमा-वास्या । सेन्द्रेति स-इन्द्रा । यः । एवम् । विद्वान् । दर्शपूर्णमासाविति दर्श-पूर्णमासौ । यजते । सेन्द्राविति स-इन्द्रौ । एव । एनौ । यजते । श्वश्श्व इति श्वः-श्वः ।

[1]ब्रह्मवादिन इत्यादि ॥ गतम् । य एनावित्यादि । अविदुषो

स्मा ईजानाय वसीयो भवति देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एताम् ॥ २२ ॥ इष्टिमपश्यन्नाग्नावैष्णवमेकादशकपालꣳ सरस्वत्यै चरुꣳ सरस्वते चरुं तां पौर्णमासꣳ सꣳस्थाप्यानु निरवप-

अस्मै । ईजानाय । वसीयः । भवति । [2]देवाः । वै । यत् । यज्ञे । अकुर्वत । तत् । असुराः । अकुर्वत । ते । देवाः । एताम् ॥ २२ ॥ इष्टिम् । अपश्यन् । आग्नावैष्णवमित्याग्ना-वैष्णवम् । एकादशकपालमित्येकादश-कपालम् । सरस्वत्यै । चरुम् । सरस्वते । चरुम् । ताम् । पौर्णमासमिति पौर्ण-मासम् । सꣳस्थाप्येति सं-स्थाप्य । अनु । निरिति । अवपन् । ततः । देवाः । अभव-

नार्थः । पूर्णमासे वैमृधेन अमावास्यायामैन्द्रेण दध्ना च इत्येवं विदित्वेष्टवते यजमानायोत्तरमुत्तरं दिनं प्रशस्ततरं भवति ॥

[2]देवा वा इत्यादि ॥ गतम्* । एतामिष्टिमिति । वक्ष्यमाणां त्रिहविष्कां पौर्णमासीसमाप्त्यनन्तरं तस्या अनुनिर्वाप्यामकुर्वन् । पौर्णमास्येवानुनिर्वाप्यसहिता फलं ददाति (कूग[कुहू]श्च) । पौर्ण-

*सं. १-७-३.5

न्ततो देवा अभवन्परासुरा यो भ्रा-
तृव्यवान्त्स्यात्स पौर्णमासꣳ सꣳ-
स्थाप्यैतामिष्टिमनु निर्वपेत्पौर्णमा-
सेनैव वज्रं भ्रातृव्याय प्रहृत्याग्नावै-
ष्णवेन देवताश्च यज्ञं च भ्रातृव्यस्य
वृङ्क्ते मिथुनान्पशूंत्सारस्वताभ्यां या-
वदेवास्यास्ति तत् ॥ २३ ॥ सर्वं

न् । परेति । असुराः । यः । भ्रातृव्यवानिति भ्रा-
तृव्य–वान् । स्यात् । सः । पौर्णमासमिति पौर्ण–
मासम् । सꣳस्थाप्येति सं–स्थाप्य । एताम् । इष्टि-
म् । अनु । निरिति । वपेत् । पौर्णमासेनेति पौ-
र्ण–मासेन । एव । वज्रम् । भ्रातृव्याय । प्रहृत्ये-
ति प्र–हृत्य । आग्नावैष्णवेनेत्याग्ना–वैष्णवेन ।
देवताः । च । यज्ञम् । च । भ्रातृव्यस्य । वृङ्क्ते ।
मिथुनान् । पशून् । सारस्वताभ्याम् । यावत् ।
एव । अस्य । अस्ति । तत् ॥ २३ ॥ सर्वम् ।

---

मासेनैवेत्यादि । वृङ्क्ते वर्जयति स्वयं गृह्णाति । यस्मादेवं तस्माद्यावत्किञ्चित् भ्रातृव्यस्य विद्यते तत्सर्वमनयेष्ट्या वृङ्क्ते ॥

वृङ्क्ते पौर्णमासीमेव यजेत भ्रातृव्यवान्नामावास्याꣳ हत्वा भ्रातृव्यं नाप्याययति साकंप्रस्थायीयेन य-

वृङ्क्ते । [3]पौर्णमासीमिति पौर्ण–मासीम् । एव । यजेत । भ्रातृव्यवानिति भ्रातृव्य–वान् । न । अमावास्यामित्यमा–वास्याम् । हत्वा । भ्रातृव्यम् । न । एति । प्याययति । [4]साकंप्रस्थायीयेनेति साकं–प्रस्थायीयेन । यजेत । पशुकाम इति पशु-

[3]नामावास्यामिति ॥ तत्र पितृयज्ञ एव क्रियते । तत्राप्यायितस्य वधादनाप्यायनमेव श्रेयः इति लुप्यते, 'अमावास्यायां प्याययन्ति'* इति । तद्वत्पौर्णमास्या पौर्णमासे भ्रातृव्यं हत्वा अमावास्यालोपेनाप्यायनं अस्य निवर्तयति । यावदमावास्यामाप्यायितस्य वृद्ध्या वृत्रस्य अमावास्याया ऊर्ध्वं वधः क्रियते। तत्राप्यायितस्य वधादनाप्यायनमेव श्रेय इति लुप्यते अमावास्या ॥

[4]साकंप्रस्थायीयेनेति ॥ साकं सह ब्राह्मणैः प्रतिष्ठते होतुमिति साकंप्रस्थायी अध्वर्युः । तस्य सम्बन्धी साकंप्रस्थायीयो यागः । तत्र द्वौ सायं दोहौ द्वौ प्रातर्दोहौ । तत्र ब्राह्मणाः पूर्णपात्रैः अध्वर्युं जुह्वन्तमनुजुह्वति । अमावास्यैव (स्या)विक्रियते । यस्मै वेति । यस्मै अल्पेन प्रमाणेन धनादिकमाहरन्ति अथ स नात्मना तृप्यति । येनात्मनि तृप्तिर्नास्ति

*सं. २–५–२ 6

जेत पशुकामो यस्मै वा अल्पेना-
हरन्ति नात्मना तृप्यति नान्यस्मै
ददाति यस्मै महता तृप्यत्यात्मना
ददात्यन्यस्मै महता पूर्णꣳ होतव्यं
तृप्त एवैनमिन्द्रः प्रजया पशुभिस्त-
र्पयति दारुपात्रेण जुहोति न हि

—कामः । यस्मै । वै । अल्पेन । आहरन्तीत्या—
हरन्ति । न । आत्मना । तृप्यति । न ।
अन्यस्मै । ददाति । यस्मै । महता । तृप्यति ।
आत्मना । ददाति । अन्यस्मै । महता । पूर्णम् ।
होतव्यम् । तृप्तः । एव । एनम् । इन्द्रः । प्रजये-
ति प्र—जया । पशुभिरिति पशु—भिः । तर्पयति ।
[5]दारुपात्रेणेति दारु—पात्रेण । जुहोति । न । हि ।

असौ धनान्तरं च नान्यस्मै दातुं शक्नोति । यदि महता प्रमाणेन अस्मा आहरन्ति, स स्वयं च तृप्यति, अन्यस्मै चायं महता प्रमाणेन ददाति, तस्याप्यतितृप्तिर्भवतीतिभावः ॥

[5]दारुपात्रेणेति ॥ औदुम्बरैश्चतुर्भिः पात्रैः । न हीति । मृन्मयं कुम्भादिकं न ह्याहुतिमानशे अश्नुते आहुतिसाधनं न भवति । मृन्मयेन हुता आहुतिरेव न स्यादिति यावत् । 'एकाचो नित्यं मयटमिच्छन्ति' इति मयट् ॥

मृन्मयमाहुतिमानश औदुम्बरम्
॥ २४ ॥ भवत्यूर्ग्वा उदुम्बर ऊर्क्प-
शवं ऊर्जैवास्मा ऊर्जं पशूनवं रु-
न्धे नागंतश्रीर्महेन्द्रं यंजेत त्रयो
वै गतश्रियश्शुश्रुवान्ग्रामणी रांज-

मृन्मयमितिं मृत्-मयंम् । आहुंतिमित्या-हुतिम् । आनशे । [6]औदुंम्बरम् ॥ २४ ॥ भवति । ऊर्क् । वै । उदुम्बरः । ऊर्क् । पशवः । ऊर्जा । एव । अस्मै । ऊर्जंम् । पशून् । अवेति । रुन्धे । [7]न । अगंतश्रीरित्यगंत-श्रीः । महेन्द्रमितिं महा-इन्द्रम् । यजेत । त्रयः । वै । गतश्रिय इतिं गत-श्रियः । शुश्रुवान् । ग्रामणीरितिं ग्राम-नीः । राजन्यः ।

[6]औदुम्बरमित्यादि ॥ गतम्* । 'अनुदात्तादेरञ्' ॥

[7]नागतश्रीरित्यादि ॥ शुश्रुवान् षडङ्गवेदत्रयवेदी श्रुतसंपन्नः । स च प्राप्तश्रीः, 'सा हि श्रीरमृता सताम्'† इति श्रीत्वाद्वेदानाम् । ग्रामणीः ग्रामाध्यक्षः । राज्ञोपत्यं राजन्यः । 'राजश्वशुराद्यत्', 'राज्ञोपत्ये जातिग्रहणम्' इति क्षत्रिय उच्यते । स्पष्टमेतयोर्गतश्रीत्वं, यतो हीन्द्र एषां देवता । तस्मादेभ्योऽन्योऽगतश्रीः महेन्द्रं यष्टुं नार्हति ॥

*सं. २-१-१४. †तै. ब्रा. १-२-१.

न्यंस्तेषां महेन्द्रो देवता यो वै स्वां
देवतामतियजते प्र स्वायै देवतायै
च्यवते न परां प्राप्नोति पापी-
यान्भवति संवत्सरमिन्द्रं यजेत
संवत्सरꣳ हि व्रतं नाति स्वा ॥२५॥

तेषाम् । महेन्द्र इति महा—इन्द्रः । देवता । [8]यः । वै । स्वाम् । देवताम् । अतियजत इत्यति—यजते । प्रेति । स्वायै । देवतायै । च्यवते । न । पराम् । प्रेति । आप्नोति । पापीयान् । भवति । [9]संवत्सरमिति सं—वत्सरम् । इन्द्रम् । यजेत । संवत्सरमिति सं—वत्सरम् । हि । व्रतम् । न । अतीति । स्वा ॥ २५ ॥ एव । एनम् । देवता । इ-

[8]यो वा इत्यादि ॥ आत्मीयदेवतातिक्रमेण योऽन्यां देवतां यजते स स्वाया देवतायास्तावत् प्रच्यवते तस्या अनुग्राह्यो न भवति । ततश्च पापीयान् पापतरो भवति । अयष्टुरस्यापापत्वमेव । यष्टुः पापतरत्वं स्यात्, देवतावत्त्वाभावात् ॥

[9]संवत्सरमित्यादि ॥ संवत्सरातिक्रमे व्रतं नास्ति । तस्मात् गतश्रीत्वाय संवत्सरं व्रतं चरन्तं स्वा आत्मीया देवता इन्द्र इज्यमाना एनमवगतश्रियं भूत्यर्थं इन्धे दीपयति । ततो वसीयान्

एवैनं देवतेज्यमाना भूत्या इन्धे व-
सीयान्भवति संवत्सरस्य पुरस्ता-
दग्नये व्रतपतये पुरोडाशमष्टाकपालं
निर्वपेत्संवत्सरमेवैनं वृत्रं जघ्निवाꣳ-

ज्यमाना । भूत्यै । इन्धे । वसीयान् । भवति । [10]सं-
वत्सरस्येति सं-वत्सरस्य । पुरस्तात् । अग्नये ।
व्रतपतय इति व्रत-पतये । पुरोडाशम् । अष्टा-
कपालमित्यष्टा-कपालम् । निरिति । वपेत् ।
संवत्सरमिति सं-वत्सरम् । एव । एनम् ।
वृत्रम् । जघ्निवाꣳसम् । अग्निः । व्रतपतिरिति

वसुमत्तरो भवति, महेन्द्रयागार्हो गतश्रीरिव भवति, गता श्रीः आत्मीया देवता अनेनेति कृत्वा ॥

[10]ततस्समाप्ते संवत्सरे गते अग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेत् सोऽग्निर्व्रतपतिः तृप्तः एनं व्रतफलमालम्भयति गतश्रीत्वमस्योत्पादयति स्वयमप्यनुज्ञाय स्थिरीकरोति । कीदृशमित्याह— संवत्सरं व्रतं चरित्वा वृत्रं वारकं पापं महेन्द्रयागानर्हत्वलक्षणं जघ्निवांसं अभिभवन्तं तत्फलं प्रापयति । यथा इन्द्रो वृत्रं हत्वा इन्द्रो महेन्द्रोऽभवत्, एवमयमपि त्वयोग्यतालक्षण वृत्र-

संमाग्निर्व्रतपंतिर्व्रतमा लंम्भयति त-
तोधि कामं यजेत ॥ २६ ॥
नासोमयाजी सं नंयेदनांगतं वा
एतस्य पयो योसोमयाजी यदसो-

व्रत–पतिः । व्रतम् । एति । लम्भयति । ततः । अ-
धीति । कामम् । यजेत ॥ २६ ॥

एतां तदौदुम्बरꣳ स्वा त्रिꣳशच्चं ॥ ४ ॥

[1]न । असोमयाजीत्यसोम–याजी । समिति ।
नयेत् । अनागतमित्यनां–गतम् । वै । एतस्य ।
पयः । यः । असोमयाजीत्यसोम–याजी । यत् ।
असोमयाजीत्यसोम–याजी । संनयेदिति सं–

वधेन महेन्द्रयागयोग्यो भवति । तत उपरि कामं यथेष्टं महे-
न्द्रमेव यजेत ॥

इति द्वितीये पञ्चमे चतुर्थोऽनुवाकः.

---

[1]नासोमयाजी सं नयेदित्यादि ॥ दधिपयोभ्यां यागस्सन्नयनम् ।
अनागतमिति । असोमयाजिनः पयस्सम्बन्धो नास्ति सर्वरसकार-
णेन सोमेन सम्बन्धाभावात् । तस्मादसोमयाजी यदि सन्नयेत्

मयाजी संनयेत्परिमोष एव सोनृतं करोत्यथो परैव सिच्यते सोमयाज्येव सं नयेत्पयो वै सोमः पर्यं-

नयेत् । परिमोष इति परि-मोषः । एव । सः । अनृतम् । करोति । अथो इति । परेति । एव । सिच्यते । सोमयाजीति सोम-याजी । एव । समिति । नयेत् । [2]पयः । वै । सोमः । पयः ।

---

स परिमोषश्चौर्यमेव, अस्वेन यष्टुं प्रवृत्तत्वात् । तस्मादयमनृतं करोति व्रतचारिणो यत्प्रतिषिद्धं तदेवानृतं करोति । अथो अपि च परैव सिच्यते एतद्यष्टव्यं परा सिच्यते अस्थाने विनाश्यत एव । तस्मात्सोमयाज्येव सन्नयेदिति ॥

[2]पयो वा इत्यादि ॥ उभयोः पयस्त्वात्पयसा सोमेन स आत्मनि पयस्सान्नाय्यं धत्ते स्थापयति ॥

[3]वि वा एतमित्यादि ॥ यस्य निरुप्तं हविरभिलक्ष्य निर्वापे कृते पुरस्तात् पूर्वस्यां दिशि चन्द्रमा उदेति एनं प्रजया पशुभिश्च व्यर्धयति । वर्धयति चास्य भ्रातृव्यं शत्रुं, तथोद्यंश्चन्द्रमाः । विनष्टचन्द्रायां हि तिथौ कर्मैतद्दर्शाख्यं क्रियते । अनेन चेष्ट्वा प्रजावान् पशुमान् भ्रातृव्यवांश्च संपद्यते । हविरभ्युद्यंश्चायं विपरीतफलस्स्यात् । तस्मान्निर्वापयागयोर्मध्ये यथा चन्द्रमसः पुरस्तादुदयो न भवति तथा कालो ग्राह्यः ॥

अत्र ब्रूमः— अस्य चन्द्रमसो द्वादश दृश्यादृश्यकला अंशाः एतैरंशैरयं दृश्यश्चादृश्यश्च भवति । तत्र स्फुटजिज्ञासायां वखा [शून्यखा] ग्निभिः* शतत्रयेण द्वादशभागान् सङ्गणय्य पूर्वस्यां दिशि उदयेऽस्तमये च विचार्यमाणे कर्मद्वयसंस्कृतेनोदयराशिना विभज्य लब्धेनांशादिना युक्तस्स्फुटोर्क उदयार्को भवति । तद्युक्तो यावान् स्फुटोर्कः तावान्यदा गणितानीतोर्को भवति तदा चन्द्रमा उदेति अथ तेनैवांशादिना रहितस्स्फुटोर्को वा अस्तमयार्को वा भवति । तावान्यदा स्फुटोर्को भवति तदा चन्द्रमा अस्तमेति । यदा पुनः प्राच्यां दिश्युदयोस्तमयो वा विचार्यते तदा पूर्ववत्संगुणितान् द्वादशभागान् चन्द्रकर्मद्वयसंस्कृतेऽस्तमयराशिना विभज्य लब्धेनांशादिना स्फुटोर्क उदययुक्त उदयार्को भवति । तद्रहितोस्तमयार्कः । तत्र चन्द्रस्य उदयार्केणास्तमयार्केण वा सह यदन्तरं तस्मिन्नन्तरे यावान् कालः तेन कालेन घटिकादिना उदितोस्तं गतो वा भवति । तत्र द्वेधा चन्द्रस्योदयास्तमयो, यथा प्रतिदिनं च भवतः गोळका†प्राप्तिपरित्यागाभ्यां सूर्यस्येव । तथाऽऽदित्यस्यैव सन्निकर्षाद्विप्रकर्षाच्च अस्योदयास्तमयौ भवतः । तदपि कथ्यते— अयं चन्द्रश्शीघ्रगतित्वात् प्रत्यहमर्कसमीपमागच्छति यावत्प्राच्यामस्तं व्रजति । अस्तं गतश्च ततश्शीघ्रगतित्वात् आदित्यमनुदिनं परित्यजति यावत्प्रतीच्यामुदेति । एवमस्यादित्यसन्निकर्षात् विप्रकर्षाच्च प्राच्यामस्तमयः प्रतीच्यामुदयः । तच्चन्द्रार्कयोर्भुक्त्यन्ताः द्वादशमहाभागाः अंशाः । तेन गोळार्धभागानामशीतिशतसङ्ख्यभागे हृते लब्धं पञ्चदश प्रतिपदादयस्तिथयः । तिथिभागघटिके द्वे, दृश्यगोळार्धभागस्य त्रिंशद्घटिकात्वात् । तत्र चन्द्रार्कयोः परो विप्रकर्षः पौर्णमासी, परस्सन्निकर्षोमावास्या । तत्रा-

*घ-शउर्दाग्निभिः. †*घ-...वतः । सूतोल...मा.

स्सांनाय्यं पर्यसैव पर्य आत्मन्धत्ते
वि वा एतं प्रजया पशुभिरर्धयति
वर्धयत्यस्य भ्रातृव्यं यस्य हविर्निरु-

सांनाय्यमिति सां—नाय्यम् । पयसा । एव । पयः ।
आत्मन् । धत्ते । वीति । वै । एतम् । प्रजयेति
प्र—जया । पशुभिरिति पशु—भिः । अर्धयति ।
वर्धयति । अस्य । भ्रातृव्यम् । यस्य । हविः ।
निरुप्तमिति निः—उप्तम् । पुरस्तात् । चन्द्रमाः ॥

भीष्टकाले स्फुटभुक्त्यन्तरं स्फुटकालांशादधिकं वा भवेत्तदन्यूनं वा; अधिकत्वे पञ्चदश्यामपि चन्द्रो दृश्यस्स्यात् । न्यूनत्वे तु चतुर्दश्यां अपि न दृश्येत । तस्मात्तादृशः सूक्ष्मगणनाकौशलशालिना कालोन्वेष्यः ॥

प्रमादाच्चिदुष्टः काल आपतेत् तदा त्रेधा तण्डुलानित्यादि कर्माचरेत् । तत्र निरुप्तमनिरुप्तं वा प्रवृत्तं हविर्यदाऽभ्युदेति तदेदं कर्म कर्तव्यमिति मीमांसकाः; यथोक्तम्—'निरुप्ते स्यात् तत्संयोगात्'* इत्यत्र । तथा हि 'अभिरभागे' इत्यभेदलक्षणे कर्मप्रवर्तनीयत्वम् । लक्षणं च ज्ञापकम् । तथा प्रवृत्तं ज्ञापकमिति यस्य निरुप्तं हविरभ्युदेतीति विधीयते । तदा निरुप्तमिति यागावयवानामुपलक्षणं वाक्यं, उभयविधाने वाक्यभेदप्रसङ्गात् ।

*मी—६-५-१२.

सं पुरस्ताच्चन्द्रमाः ॥ २७ ॥ अभ्यु-
देति त्रेधा तण्डुलान् वि भजेद्ये
मध्यमास्स्युस्तानग्नये दात्रे पुरोडा-
शमष्टाकपालं कुर्याद्ये स्थविष्ठास्ता-

२७ ॥ अभीति । उदेतीत्युत्-एति । [4]त्रेधा ।
तण्डुलान् । वीति । भजेत् । ये । मध्यमाः ।
स्युः । तान् । अग्नये । दात्रे । पुरोडाशम् । अष्टा-
कपालमित्यष्टा-कपालम् । कुर्यात् । ये । स्थवि-
ष्ठाः । तान् । इन्द्राय । प्रदात्र इति प्र-दात्रे ।

ततश्चाग्न्यन्वाधानप्रभृति यावद्ब्राह्मणभोजनमुदयोस्य परिवृर्तव्यः इत्युक्तं भवति । तत्र च 'अभ्युदये कालापराधादिज्याचोदना स्यात् यथा पञ्चशरावे'* इति त्रेधेत्यादिकं न कर्मान्तरविधानं, अपि तु अपनीतदेवताकं तदेव प्राकृतं शूर्पे राशीकृतं हविर्देवता-न्तरैः संयुज्यत इति राद्धान्तितम् । तत्राप्यनिरुप्तेऽभ्युदिते प्राकृ-तीभ्य एव देवताभ्यो निर्वापः कार्यः तण्डुलभूतेषु देवतापनयस्य विधानादिति सिद्धान्तितम् 'अनिरुप्तेऽभ्युदिते प्राकृतीभ्यो निर्व-पेत्'† इत्यादौ ॥

[4]स्थविष्ठाः स्थूलराशिगताः ॥ 'स्थूलदूर' इति लोपो गुणश्च अणिष्ठा अणुराशिगताः । 'टेः' इति टिलोपः । एवं दातृत्वा-दिगुणेभ्योग्न्यादिभ्यो मध्यमादिभिरष्टाकपालादयः कार्याः । दध-

*मी ६-५-१. †मी—६-५१-६.

निन्द्राय प्रदात्रे दधञ्श्चरुं येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुमग्निरेवास्मै प्रजां प्रजनयति वृद्धामिन्द्रः प्र यच्छति यज्ञो वै विष्णुः पशवश्शिपिर्यज्ञ एव पशुषु प्रति तिष्ठति न द्वे ॥ २८ ॥ यजेत यत्पूर्वया संप्रति यजेतोत्तरया छम्ब-

दधन् । चरुम् । ये । अणिष्ठाः । तान् । विष्णवे । शिपिविष्टायेति शिपि–विष्टाय । शृते । चरुम् । [5]अग्निः । एव । अस्मै । प्रजामिति प्र–जाम् । प्रजनयतीति प्र–जनयति । वृद्धाम् । इन्द्रः । प्रेति । यच्छति । यज्ञः । वै । विष्णुः । पशवः । शिपिः । यज्ञे । एव । पशुषु । प्रतीति । तिष्ठति । [6]न । द्वे इति ॥ २८ ॥ यजेत । यत् । पूर्वया । संप्रतीति सं–प्रति । यजेत । उत्तरयेत्युत्–तरया । छम्बट् ।

न्निति 'सुपां सुलुक्' इति सप्तम्या लुक् । अनङादेशे 'विभाषा ङिश्योः' इति लोपाभावः । शृतं पक्वं पयः ॥

[5]अग्निरेवेत्यादि ॥ गतम्* । पशवश्शिपिरिति । शिपयो रश्मयः तैर्विशिष्टः प्रविष्टश्शिपिविष्टः । निर्वेष्टितशेपश्शिपिविष्टः ।

*सं. २-२-४.

कुर्याद्यदुत्तरया संप्रति यजेत पूर्वया छम्बट्कुर्यान्नेष्टिर्भवति न यज्ञस्तदनुहीतमुख्यपगल्भो जायत एकामेव यजेत प्रगल्भोऽस्य जायतेऽनादृत्य तद्द्वे एव यजेत यज्ञमुखमेव पूर्वयाऽऽ-

कुर्यात् । यत् । उत्तरयेत्युत्-तरया । संप्रतीति सं-प्रति । यजेत । पूर्वया । छम्बट् । कुर्यात् । न । इष्टिः । भवति । न । यज्ञः । तत् । अन्वि-ति । हीतमुखीति हीत-मुखी । अपगल्भ इत्यप-गल्भः । जायते । एकाम् । एव । यजेत । प्रगल्भ इति प्र-गल्भः । अस्य । जायते । अना-दृत्येत्यना-दृत्य । तत् । द्वे इति । एव । यजेत । यज्ञमुखमिति यज्ञ-मुखम् । एव । पूर्वया । आ-

इत्यन्ये । तत्र पशुहेतुत्वात्ताच्छब्द्यम् । यज्ञे पशुषु च प्रतिष्ठितो भवतीत्येव ॥

[6]अथ शाखान्तरे ऋद्धिकाममधिकृत्योक्तम्*—'द्वे पौर्णमास्यौ द्वे अमावास्ये यजेत यः कामयेत'† भवतः । तत्र च यावदेवमुपपद्यते तावान् प्रकर्षस्सोप्य(?) इति चतुर्थोंशो दुष्टः । तत्र 'यदीष्ट्या यदि पशुना यदि सोमेन यजेतामावास्यायां पौर्णमास्यां वा यजेत' इत्युच्यते ।

*आप. श्रौ—३·१४·१४. †अत्र ग्रन्थः गलित इव भाति.

लभंते यजंत उत्तरया देवता एव पूर्वयाऽवरुन्ध इंन्द्रियमुत्तरया देवलोकमेव ॥ २१ ॥ पूर्वयाऽभिजयति मनुष्यलोकमुत्तरया भूयंसो यज्ञक्रु-

लभंत इत्या-लभंते । यजंते । उत्तरयेत्युत्-तरया । देवताः । एव । पूर्वया । अवरुन्ध इत्यव-रुन्धे । इन्द्रियम् । उत्तरयेत्युत्-तरया । देवलोकमिति देव-लोकम् । एव ॥ २१ ॥ पूर्वया । अभिजयतीत्यभि-जयति । मनुष्यलोकमिति मनुष्य-लोकम् । उत्तरयेत्युत्-तरया । भूयंसः । यज्ञक्रतूनिति यज्ञ-क्रतून् । उपेति । एति । एषा ।

---

तथा—'पक्षान्तेऽन्वाधानं पक्षादौ यागः' 'पूर्वेद्युरन्वाधानमुत्तरेद्युर्यागः' इति च । अन्वाधानादियावदिष्टचन्तं चन्द्रोदयेऽभ्युदयेष्ट्या भाव्यम् । तथा पर्वसन्धेः पूर्वमिष्टिसमाप्तौ पुनर्यष्टव्यमित्याहुः । तत्र पर्वणः सूक्ष्मत्वात् प्रत्यासन्नतिथिद्वयलक्षणायां पञ्चदशीप्रतिपदौ पर्वणी उच्येते । तस्मात् स्फुटीकरणेन तिथिद्वश्यांश एवानीय कालोन्वेष्टव्यः । तत्र पञ्चदश्यां प्रथमेंऽशे तिथिद्वश्यांशक्षये चन्द्रोदयसम्भावना । तत्रोत्तरयोश्चांशयोस्सन्धेः पूर्वं यागसमाप्तिस्स्यात् । चतुर्थे तु दोषद्वयाप्रसङ्गः । प्रतिपदाद्यंशे

तूनुपैत्येषा वै सुमना नामेष्टिर्यम-
द्येजानं पश्चाच्चन्द्रमा अभ्युदेत्यास्मि-
न्नेवास्मै लोकेऽर्धुकं भवति दाक्षा-
यणयज्ञेन सुवर्गकामो यजेत पूर्ण-

वै । सुमना इति सु-मनाः । नाम । इष्टिः । यम् । अद्य । ईजानम् । पश्चात् । चन्द्रमाः । अभीति । उदेतीत्युत्-एति । अस्मिन्न् । एव । अस्मै । लोके । अर्धुकम् । भवति । [7]दाक्षायणयज्ञेनेति दाक्षायण-यज्ञेन । सुवर्गकाम इति सुवर्ग-कामः । यजेत । पूर्णमास इति पूर्ण-मासे ।

सर्वदोषाभावः । चतुर्थे तु तिथिदृश्यांशे भिभाय [श्व एव] चन्द्रोदयसम्भावना । अथ यदि पूर्वेद्युश्च पञ्चदशघटिका चतुर्दशी उत्तरेद्युरष्टौ घटिकाः पर्व, यदा च पूर्वेद्युरष्टादश घटिकाः पर्व उत्तरेद्युर्दश घटिकाः प्रतिपत् तत्र गत्यभावात् यष्टव्यमित्येके । ननु 'यमद्येजानं' इत्यादिदर्शनात् द्वितीयायामपि तत्सम्भवाद्यागोनुमीयते, मैवं श्वो दृश्यां क्षये प्रतिपद्येवोदयसम्भवाकांक्षासम्भवात् । एवं पश्चादिष्वपि निपुणं निरूपणीयमिति ग्रन्थाविस्तरभयादुपरम्यते ॥

[7]दाक्षायणयज्ञेनेति ॥ येन दाक्षायणा यजन्ते । दक्षात्

मा॒से॒ सं न॑ये॒न्मैत्रा॒व॒रु॒ण्याऽऽमिक्ष॑या॒ऽमा॒वा॒स्या॑यां यजेत पू॒र्णमा॑से॒ वै दे॒वाना॑ꣳ सु॒तस्तेषा॑मे॒तम॑र्धमा॒सं प्रसु॑तस्तेषां॑ मैत्रावरु॒णी व॒शाऽमा॑वा॒स्या॑-

समिति॑ । न॒ये॒त् । मै॒त्रा॒व॒रु॒ण्येति॑ मैत्रा—व॒रु॒ण्या । आ॒मिक्ष॑या । अ॒मा॒वा॒स्या॑या॒मित्य॑मा—वा॒स्या॑याम् । य॒जे॒त॒ । [8]पू॒र्णमा॑स॒ इति॑ पू॒र्ण—मा॒से॒ । वै । दे॒वाना॑म् । सु॒तः । तेषा॑म् । ए॒तम् । अ॒र्ध॒मा॒समित्य॑र्ध—मा॒सम् । प्रसु॑त॒ इति॒ प्र—सु॒तः । तेषा॑म् । मै॒त्रा॒व॒रु॒णीति॑ मैत्रा—व॒रु॒णी । व॒शा । अ॒मा॒वा॒स्या॑-

---

'अत इञ्' 'यञञोश्च' इति फक् । पूर्णमास इति । द्वे पूर्णमास्यौ द्वे अमावास्ये यजेत । तत्र पौर्णमास्यां पूर्वेद्युराग्नेयोष्टाकपाल [ल अग्नीषोमीय एकादशकपालः । आग्नेयोष्टाकपालः] ऐन्द्रं दध्युत्तरेद्युः । अमावास्यायां पूर्वेद्युराग्नेयोष्टाकपालः ऐन्द्राग्न एकादशकपालः आग्नेयोष्टाकपालो मैत्रावरुण्यामिक्षा द्वितीयोत्तरेद्युः ॥

[8]पूर्णमासे वा इत्यादि ॥ देवानां सोमयागत्वेनायं स्तूयते । तत्र यो देवानां सोमयागः तत्स्वरूपं तावदाह । देवा येन सोमेन यजन्ते तत्र पूर्णमासे सुतः अभिषुतः सोमः तेषां देवानां सोमः एतमनन्तरभाविनमर्धमासं सर्वैः प्रसुतो भवति । तस्य प्रकृष्टा गतिर्यागः । यद्वा—प्रकर्षेणानुज्ञातः प्रसुतः हुतो भवति ।

याम॑नूब॒न्ध्या॑ यत् ॥ ३० ॥ पू॒र्वे॒द्यु-
र्यज॑ते॒ वेदि॑मे॒व तत्क॑रोति॒ यद्व॒त्सा-
न॑पाकु॒रोति॑ सदोहवि॒र्धाने॑ ए॒व सं
मि॑नोति॒ यद्यज॑ते दे॒वैरे॒व सु॒त्याꣳ
सं पा॑दयति॒ स ए॒तम॑र्धमा॒सꣳ स॑ध॒-
मा॑दं दे॒वैस्सोमं॑ पिबति॒ यन्मै॑त्रावरु॒-

या॒मित्य॑मा-वा॒स्या॑याम् । अ॒नू॒ब॒न्ध्येत्य॑नु-ब॒न्ध्या॑ ।
[9]यत् ॥ ३० ॥ पू॒र्वे॒द्युः । यज॑ते । वेदि॑म् । ए॒व ।
तत् । क॒रो॒ति॒ । यत् । व॒त्सान् । अ॒पा॒कु॒रो॒तीत्य॑-
प-आ॒कु॒रोति॑ । स॒दो॒ह॒वि॒र्धाने॒ इति॑ सदः-ह॒वि॒र्धा-
ने । ए॒व । समिति॑ । मि॒नो॒ति॒ । यत् । यज॑ते ।
दे॒वैः । ए॒व । सु॒त्याम् । समिति॑ । पा॒द॒य॒ति॒ । सः ।
ए॒तम् । अ॒र्ध॒मा॒समित्य॑र्ध-मा॒सम् । स॒ध॒मा॒दमिति॑
सध-मा॑दम् । दे॒वैः । सोम॑म् । पि॒ब॒ति॒ । यत् ।
मै॒त्रा॒व॒रु॒ण्येति॑ मैत्रा-व॒रु॒ण्या । आ॒मिक्ष॑या । अ॒-

अथ तेषां देवानाममावास्यायां मैत्रावरुणी वशाऽनूबन्ध्या भवति । एवं देवा अयजन्त इति ॥

[9]इदानीं दाक्षायणयज्ञं तद्भावेन रूपयति—यदिति ॥ पूर्वस्मिन् दिने यदग्नीषोमाभ्यां यजते उत्तरवेदिकरणस्थानीयं तत् ।

ण्याऽऽमिक्षयाऽमावास्यायां यजते यैवासौ देवानां वशाऽनूबन्ध्या सो एवैषैतस्य साक्षाद्वा एष देवानभ्यारोहति य एषां यज्ञम् ॥ ३१ ॥ अभ्यारोहति यथा खलु वै श्रेयान-

मावास्यायामित्यमा—वास्यायाम् । यजते । या । एव । असौ । देवानाम् । वशा । अनूबन्ध्येत्यनु—बन्ध्या । सो इति । एव । एषा । एतस्य । [10]साक्षादिति स—अक्षात् । वै । एषः । देवान् । अभ्यारोहतीत्यभि—आरोहति । यः । एषाम् । यज्ञम् ॥ ३१ ॥ अभ्यारोहतीत्यभि—आरोहति । यथा । खलु । वै । श्रेयान् । अभ्यारूढ इत्यभि—आरू-

---

यद्वत्सापाकरणं सदोहविर्धानयोस्सम्मितिस्थानीयं तत् । यदुत्तरस्मिन्नह्नि सान्नाय्येन यजते तत् देवैस्सहेन्द्रस्य सुत्यां यागं सम्पादयति, सुत्यास्थानीयोर्धमासः । यस्मादेवं तस्मात्स इन्द्रः एतमागामिनमर्धमासं सर्वं देवैस्सधमादं सोमं पिबति । देवैस्सह मादयतीति सधमात् । 'सधमादस्थयोः' इति सधादेशः । यद्वा— सह मदित्वा । मैत्रावरुण्यामिक्षा या सा देवानामनूबन्ध्यास्थानीया॥

[10]साक्षाद्वा इत्यादि ॥ इत्थमयमव्यवधानेन देवानभ्यारोहति देवसमूहमनुप्रविशति य एषां देवानां यज्ञमभ्यारोहति अनुष्ठाने-

भ्यारूढः कामयंते तथा करोति यद्यंवविध्यंति पापीयान्भवति यदि नाववि॒ध्यंति सदृङ्ख्यावृत्कांम एतेनं यज्ञेनं यजेत क्षुरपंविर्ह्येष यज्ञस्ताजक्पुण्यो वा भवंति प्र वां

ढः । कामयंते । तथा । करोति । [11]यदि । अववि-ध्यतीत्यंव-विध्यंति । पापीयान् । भवति । यदि । न । अवविध्यतीत्यंव-विध्यंति । सदृङ्ङिति स-दृङ् । व्यावृत्कांम इति व्यावृत्-कामः । एतेनं । यज्ञेनं । यजेत । क्षुरपंविरिति क्षुर-पविः । हि । एषः । यज्ञः । ताजक् । पुण्यः । वा । भवंति ।

नाक्रमति । यथेत्यादि । यथा लोके श्रेयान् अश्रेयांसमभ्यारूढ-मात्मानं कामयते इतोऽप्यहं श्रेयान् भूयासमिति तथाऽयं दाक्षा-यणयज्ञयाजी करोति ॥

[11]इदानीं यज्ञान्तरेभ्योऽस्य वैलक्षण्यं दर्शयितुमाह—यदीति ॥ यागान्तरेषु यद्यवविध्यति विकलानुष्ठायी स्यात् । पापीयान् पाप-तरो भवति । यदि वा नावविध्यति सदृङ् सदृश एव यज-मानान्तरैः स्यात् न तु विशेषैश्वर्यस्स्यात् । तस्मादन्येभ्यो यज-मानेभ्यो व्यावृत्कामः एतेन यजेत । व्यावृत्तिर्व्यावृत् । सम्प-दादिलक्षणः क्विप् । कोऽस्य विशेष इत्याह—क्षुरपविः निश्चित-

मीयते तस्यैतद्व्रतं नानृतं वदेन्न माꣳसमश्नीयान्न स्त्रियमुपेयान्नास्य पल्पूलनेन वासः पल्पूलयेयुरेतद्धि देवास्सर्वं न कुर्वन्ति ॥ ३२ ॥

प्रेति । वा । मीयते । [12]तस्य । एतत् । व्रतम् । न । अनृतम् । वदेत् । न । माꣳसम् । अश्नीयात् । न । स्त्रियम् । उपेति । इयात् । न । अस्य । पल्पूलनेन । वासः । पल्पूलयेयुः । एतत् । हि । देवाः । सर्वम् । न । कुर्वन्ति ॥ ३२ ॥

चन्द्रमा वै देवलोकमेव यद्यज्ञं पल्पूलयेयुष्षट्च ॥ ५ ॥

फलः यथाङ्कुरच्छेदेन पविर्वज्रं सद्यः प्रत्ययकृद्देवमयं यज्ञः ताजक् तदानीमेव प्रमीयते ॥

[12]तस्येत्यादि ॥ गतम् । अनृतौ स्त्रियं नोपेयादित्येके । पल्पूलनं शोधनं उपादि, तेनास्य वासो न पल्पूलयेयुः । अनेनाश्मपीडनादिकमपि निषिध्यत इत्येके । पल्पूलयतिः स्नानकर्मा ॥

इति द्वितीये पञ्चमे पञ्चमोनुवाकः.

---

एष वै देवरथो यद्दर्शपूर्णमासौ
यो दर्शपूर्णमासाविष्ट्वा सोमेन यजं-
ते रथस्पष्ट एवावसाने वरे देवाना-
मवं स्यत्येतानि वा अङ्गापरूंषि
संवत्सरस्य यद्दर्शपूर्णमासौ य एवं

[1]एषः । वै । देवरथ इति देव-रथः । यत् । दरशपूर्णमासाविति दरश-पूर्णमासौ । यः । दर-शपूर्णमासाविति दरश-पूर्णमासौ । इष्ट्वा । सोमे-न । यजंते । रथस्पष्ट इति रथ-स्पष्टे । एव । अवसान इत्यव-साने । वरे । देवानाम् । अवेति । स्यति । [2]एतानि । वै । अङ्गापरूंषीत्यङ्गा-परूं-षि । संवत्सरस्येति सं-वत्सरस्य । यत् । दरशपू-र्णमासाविति दरश-पूर्णमासौ । यः । एवम् ।

[1]एष वा इत्यादि ॥ देवरथः देवानां रथस्थानम् । रथस्पष्टः रथेन प्रकाशितः क्षुण्णः । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वर-त्वम् । तत्र देवानां वरे उत्कृष्टे अवसाने देवानां स्वभूते देवा-नां गृहे अवस्यति देवयजनमध्यवस्यति । तादृशे देवैः स्वभ्यस्ते देवयजनेऽनेनेष्टं भवति ॥

[2]अङ्गापरूंषि अङ्गानि च परूंषि पर्वाणि च संवत्सरास्थिति-

विद्वान्दर्शपूर्णमासौ यजतेऽङ्गापरूꣳ-
ष्येव संवत्सरस्य प्रति दधात्येते
वै संवत्सरस्य चक्षुषी यद्दर्शपू-
र्णमासौ य एवं विद्वान्दर्शपूर्णमासौ
यजते ताभ्यामेव सुवर्गं लोकमनु

विद्वान् । दर्शपूर्णमासाविति दर्श-पूर्णमासौ । यजते । अङ्गापरूꣳषीत्यङ्गा-परूꣳषि । एव । संवत्सरस्येति सं-वत्सरस्य । प्रतीति । दधाति । एते इति । वै । संवत्सरस्येति सं-वत्सरस्य । चक्षुषी इति । यत् । दर्शपूर्णमासाविति दर्श-पूर्णमासौ । यः । एवम् । विद्वान् । दर्शपूर्णमासाविति दर्श-पूर्णमासौ । यजते । ताभ्याम् । एव । सुवर्गमिति सुवः-गम् । लोकम् । अन्विति । प-

हेतुत्वात् । 'परादिश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । प्रतिधानं अविचलितस्थापनम् ॥

[3]संवत्सरनिबन्धनाश्च सर्वेऽर्थाः । संवत्सरात्मनः चक्षुस्स्थानीयाख्यां साक्षादव्यवधानेन स्वर्गमनुक्रमेण पश्यति स्वर्गोस्य प्रकाशितो भवति ॥

पश्यति ॥ ३३ ॥ एषा वै देवानां विक्रान्तिर्यद्दर्शपूर्णमासौ य एवं विद्वान्दर्शपूर्णमासौ यजते देवानामेव विक्रान्तिमनु वि क्रमत एष वै देवयानः पन्था यद्दर्शपूर्णमासौ य

श्यति ॥ ३३ ॥ [4]एषा । वै । देवानाम् । विक्रान्तिरिति वि-क्रान्तिः । यत् । दर्शपूर्णमासाविति दर्श-पूर्णमासौ । यः । एवम् । विद्वान् । दर्शपूर्णमासाविति दर्श-पूर्णमासौ । यजते । देवानाम् । एव । विक्रान्तिमिति वि-क्रान्तिम् । अनु । वीति । क्रमते । [5]एषः । वै । देवयान इति देव-यानः । पन्थाः । यत् । दर्शपूर्णमासाविति दर्श-पूर्णमासौ । यः । एवम् । विद्वान् । दर्शपूर्णमासाविति दर्श-

[4]विक्रान्तिर्विशिष्टं क्रमणं आभ्यां देवा हि विक्रमवन्तो वीरा भवन्ति यागकत्वात्तेषाम् । अनु विक्रमते इति । यत्रयत्र देवा विक्रमन्ते तत्रतत्रायमप्रतिबन्धेन विक्रमते । लक्षणेनोः कर्मप्रवचनीयत्वम् । 'वृत्तिसर्गतायनेषु क्रमः' इति वृत्तावात्मनेपदम् ॥

[5]देवयान इति ॥ देवा येन यान्ति स देवप्रयातो मार्गो देवयानः । देवैस्सदा मुक्तमार्ग एवेति ॥

एवं विद्वान्दर्शपूर्णमासौ यजते य
एव देवयानः पन्थास्तꣳ समारोह-
त्येतौ वै देवानाꣳ हरी यद्दर्शपूर्ण-
मासौ य एवं विद्वान्दर्शपूर्णमासौ
यजते यावेव देवानाꣳ हरी ता-
भ्याम् ॥ ३४ ॥ एवैभ्यो हव्यं वह-
त्येतद्वै देवानामास्यं यद्दर्शपूर्णमासौ

पूर्णमासौ । यजते । यः । एव । देवयान इति देव—यानः । पन्थाः । तम् । समारोहतीति सं—आरोहति । [6]एतौ । वै । देवानाम् । हरी इति । यत् । दर्शपूर्णमासाविति दर्श—पूर्णमासौ । यः । एवम् । विद्वान् । दर्शपूर्णमासाविति दर्श—पूर्णमासौ । यजते । यौ । एव । देवानाम् । हरी इति । ताभ्याम् ॥ ३४ ॥ एव । एभ्यः । हव्यम् । वहति । [7]एतत् । वै । देवानाम् । आस्यम् । यत् । दर्शपूर्णमासाविति दर्श—पूर्णमासौ । यः । एवम् ।

[6]देवा येन प्राप्यन्ते देवप्राप्तिहेतुत्वात् हरी अश्वौ हविषां वाहनस्थानीयत्वात् ॥

[7]आस्यमिति ॥ अभ्यवहर्तव्याधारत्वात् । साक्षादव्यवधानेन देवानामास्ये हुतं भवति ॥

य एवं विद्वान्दर्शपूर्णमासौ यजते
साक्षादेव देवानामास्ये जुहोत्येष
वै हविर्धानी यो दर्शपूर्णमासया-
जी सायंप्रातरग्निहोत्रं जुहोति य-
जते दर्शपूर्णमासावहरहर् हविर्धा-
निनाꣳ सुतो य एवं विद्वान्दर्शपू-

विद्वान् । दर्शपूर्णमासाविति दर्श–पूर्णमासौ । यजते । साक्षादिति स–अक्षात् । एव । देवानाम् । आस्ये । जुहोति । [8]एषः । वै । हविर्धानीति हविः–धानी । यः । दर्शपूर्णमासयाजीति दर्शपूर्णमास–याजी । सायंप्रातरिति सायं–प्रातः । अग्निहोत्रमित्यग्नि–होत्रम् । जुहोति । यजते । दर्शपूर्णमासाविति दर्श–पूर्णमासौ । अहरहरित्यहः–अहः । हविर्धानिनामिति हविः–धानिनाम् । सुतः । [9]यः । एवम् । विद्वान् । दर्शपूर्णमासाविति दर्श–पूर्ण-

[8]हविर्धानी ॥ सोमस्य हविराधारदर्शपूर्णमासवत्त्वात् दर्शपूर्णमासयाजी हविर्धानी । किञ्च—यदयं सायं प्रातरग्निहोत्रं जुहोति दर्शपूर्णमासावेवाहरहर्यजते । यस्मादयं हविर्धानिनां सुतोपि हविर्धानीभिरसुन्वानैरनुज्ञातः । हविर्धानित्वं पर्वणिपर्वण्यसुन्वानत्वमस्यानुमन्यते । पर्वणि सुन्वानः अहरहर्दर्शपूर्णमासयाजी भवति ॥

[9]य एवमित्यादि ॥ एवं हविर्धान्यस्मीति विद्वान् य एतौ

र्णमासौ यजते हविर्धान्यस्मीति सर्वमेवास्य बर्हिष्यं दत्तं भवति देवा वा अर्हः ॥ ३५ ॥ यज्ञियं नाविन्दन्ते दर्शपूर्णमासावपुनन्तौ वा एतौ पूतौ मेध्यौ यद्दर्शपूर्णमासौ य एवं विद्वान्दर्शपूर्णमासौ यजते

मासौ । यजते । हविर्धानीति हविः–धानी । अस्मि । इति । सर्वम् । एव । अस्य । बर्हिष्यम् । दत्तम् । भवति । [10]देवाः । वै । अर्हः ॥ ३५ ॥ यज्ञियम् । न । अविन्दन् । ते । दर्शपूर्णमासाविति दर्श–पूर्णमासौ । अपुनन् । तौ । वै । एतौ । पूतौ । मेध्यौ । यत् । दर्शपूर्णमासाविति दर्श–पूर्णमासौ । यः । एवम् । विद्वान् । दर्शपूर्णमासाविति दर्श–पूर्णमासौ । यजते ।

---

यजते अस्य संम्बन्धि यद्दत्तं यावान् कश्चिदस्य धनव्ययः स सर्वो बर्हिषि यज्ञे विनियुक्तो भवति । सहविर्धानत्वात् सर्वो व्ययो यज्ञे व्ययो भवतीति ॥

[10]देवा वा इत्यादि ॥ यज्ञार्हं यज्ञियं 'यज्ञर्त्विग्भ्यां घखञौ' ।

पूतावेवैनौ मेध्यौ यजते नामावा-
स्यायां च पौर्णमास्यां च स्त्रियमु-
पेयाद्यदुपेया न्निरिंन्द्रियस्स्यात्सो मं-
स्य वै राज्ञोर्धमासस्य रात्रयः
पत्नय आसन्तासाममावास्यां च पौ-
र्णमासीं च नोपैत् ॥ ३६ ॥ ते

पूतौ । एव । एनौ । मेध्यौ । यजते । [11]न । अमावा-स्यायामित्यमा—वास्यायाम् । च । पौर्णमास्या-मिति पौर्ण—मास्याम् । च । स्त्रियम् । उपेति । इयात् । यत् । उपेयादित्युप—इयात् । निरिन्द्रिय इति निः—इन्द्रियः । स्यात् । [12]सोमस्य । वै । राज्ञः । अर्धमासस्येत्यर्ध—मासस्य । रात्रयः । पत्नयः । आसन् । तासाम् । अमावास्यामित्य-मा—वास्याम् । च । पौर्णमासीमिति पौर्ण—मा-सीम् । च । न । उपेति । ऐत् ॥३६॥ ते इति ।

---

दर्शपूर्णमासाविति । कालवचनाविमाविदानीम् । य एवमिति । एवं वेदितुरेव एतौ पूतौ भवतः ॥

[11]नामावास्यायां चेति ॥ गतम् ॥

[12]रात्रय इति ॥ पञ्चदश तिथयः । पत्नय इति छान्दसो

एनमभि समनह्येतां तं यक्ष्म आ-
र्छद्राजानं यक्ष्म आरदिति तद्रा-
जयक्ष्मस्य जन्म यत्पापीयानभ-
वत्तत्पापयक्ष्मस्य यज्जायाभ्यामवि-
न्दत्तज्जायेन्यस्य य एवमेतेषां य-
क्ष्माणां जन्म वेद नैनमेते यक्ष्मा

एनम् । अभि । समिति । अनह्येताम् । तम् । यक्ष्मः । आर्छत् । [13]राजानम् । यक्ष्मः । आरत् । इति । तत् । राजयक्ष्मस्येति राज–यक्ष्मस्य । जन्म । यत् । पापीयान् । अभवत् । तत् । पापयक्ष्मस्येति पाप–यक्ष्मस्य । यत् । जायाभ्याम् । अविन्दत् । तत् । जायेन्यस्य । यः । एवम् । एतेषाम् । यक्ष्माणाम् । जन्म । वेद । न । एनम् । एते । यक्ष्माः ।

वर्णविकारः । अभि समनह्येतामिति । सोमेन राज्ञा अनुपेते त्यक्ते एते तिथी एनमभिभूय आभिमुख्येन वा भोक्तृत्वेन गृहीतवत्यौ । ततस्तं तथा ताभ्यां भुज्यमानं यक्ष्मः क्षयरोग आर्छत् आर्तमकरोत् ॥

[13]राजानं यक्ष्म आरदित्यादि ॥ व्याख्यातममावास्यायामिति शेषः ॥

विन्दान्ति स एते एव नमस्यन्नुपा-
धावत्ते अब्रूतां वरं वृणावहा आवं
देवानां भागधे असाव ॥ ३७ ॥
आवदधि देवा इज्यान्ता इति त-
स्मात्सदृशीनाꣳ रात्रीणाममावा-
स्यायां च पौर्णमास्यां च देवा इ-

विन्दान्ति । [14]सः । एते इति । एव । नमस्यन्न् । उपेति । अधावत् । ते इति । अब्रूताम् । वरम् । वृणावहै । आवम् । देवानाम् । भागधे इति भाग-धे । असाव ॥ ३७ ॥ आवत् । अधीति । देवाः । इज्यान्तै । इति । [15]तस्मात् । सदृशीनाम् । रात्रीणाम् । अमावास्यायामित्यमा-वास्यायाम् । च । पौर्णमास्यामिति पौर्ण-मास्याम् । च । देवाः । इज्यन्ते । एते इति । हि ।

---

[14]स एते इत्यादि ॥ गतम् । भागधे इति । भागानां हविषां धात्र्यौ आवां असाव भवाव । आवदधि आवयोरेव उपरिष्टात् देवाः इज्यान्ता इति । पूर्ववच्छेदः ॥

[15]तस्मादित्यादि ॥ गतम् ॥

ज्यन्त एते हि देवानां भागधे भा-
गधा अस्मै मनुष्या भवन्ति य ए-
वं वेद भूतानि क्षुधंमघ्नंथ्सद्यो म-
नुष्या अर्धमासे देवा मासि पितर-
स्संवत्सरे वनस्पतयस्तस्मादहरहर्म-
नुष्या अशनमिच्छन्तेऽर्धमासे देवा-
इज्यन्ते मासि पितृभ्यः क्रियते सं-

देवानाम् । भागधे इति भाग—धे । भागधा इति भाग—धाः । अस्मै । मनुष्याः । भवन्ति । यः । एवम् । वेद । [16]भूतानि । क्षुधम् । अघ्नन् । सद्यः । मनुष्याः । अर्धमास इत्यर्ध—मासे । देवाः । मासि । पितरः । संवत्सर इति सं—वत्सरे । वनस्पतयः । तस्मात् । अहरहरित्यहः—अहः । मनुष्याः । अशनम् । इच्छन्ते । अर्धमास इत्यर्ध—मासे । देवाः । इज्यन्ते । मासि । पितृभ्य इति पितृ—भ्यः । क्रियते । संवत्सर इति सं—वत्सरे ।

[16]भूतानीत्यादि ॥ सर्वाणि भूतानि क्षुधं बुभुक्षां घ्नन्ति तदुपघातहेतुभिरुपशमयन्ति सद्यस्समानेह्नि एत[क]स्मिन्नह्नि सकृदुपघातहेतुशमनं कृत्वा क्षुधं हन्ति । अर्धमासे देवाः क्षुधं घ्नन्ति हविर्भिर्यागप्रभवैः । मासि पितरः श्राद्धेन । वनस्पतयः संवत्सरे

वत्सरे वनस्पतयः फलं गृह्णन्ति य
एवं वेद हन्ति क्षुधं भ्रातृव्यम्॥३८॥
देवा वै नर्चि न यजुंष्यश्रयन्त ते

वनस्पतयः । फलम् । गृह्णन्ति । यः । एवम् ।
वेद । हन्ति । क्षुधम् । भ्रातृव्यम् ॥ ३८ ॥

पश्यति ताभ्यामहरैदसाव फलꣳ
सप्त च ॥ ६ ॥

[1] देवाः । वै । न । ऋचि । न । यजुंषि । अ-
श्रयन्त । ते । सामन्न् । एव । अश्रयन्त । हिम् ।

---

फलग्रहणेन तृप्ताः क्षुधं घ्नन्ति । तस्मात्पर्वणिपर्वणि यष्टव्या
देवा इति ॥

इति द्वितीये पञ्चमे षष्ठोनुवाकः.

---

[1]अतः परमग्निहोत्रस्य ब्राह्मणं प्राजापत्यमेव काण्डम् ॥ देवा
वा इत्यादि ॥ ऋचि यजुषि च नाश्रयन्त नासेवन्त इति च
स्तुतिः । यजनं च नानीयन्त सामन्येवाश्रयन्त । साम सान्त्वने ।
तस्माद्धिंकरोति हिङ्कारं प्रयुङ्क्ते सामिधेनीनामनुवचनारम्भे होता ।
हिनोति प्रीणयति वा सर्वमिति हिम् । हि गतौ, हिवि प्रीणने,

सामन्नेवाश्रयन्त हिं करोति सामै-
वाकर् हिं करोति यत्रैव देवा अश्र-
यन्त तत एवैनान्प्र युङ्क्ते हिं करोति
वाच एवैष योगो हिं करोति प्रजा
एव तद्यजमानस्सृजते त्रिः प्रथ-

करोति । सामं । एव । अकः । हिम् । करोति । यत्रं । एव । देवाः । अश्रयन्त । ततः । एव । एनान् । प्रति । युङ्क्ते । [2]हिम् । करोति । वाचः । एव । एषः । योगः । हिम् । करोति । प्रजा इति प्र—जाः । एव । तत् । यजमानः । सृजते । [3]त्रिः । प्रथमाम् । अन्विति । आह । त्रिः । उत्तमामि-

ब्रह्मणो नामेदं, छान्दसी रूपसिद्धिः । सामैव अकः कृतं भवति, सामभक्तित्वाद्धिंकारस्य । छान्दसो लुङ्, 'मन्त्रे घस' इति च्लेर्लुक् । असकृद्विधानं हिङ्कारस्य फलभेदप्रदर्शनार्थम् । यत्रैवेति । यत्र स्थिताः देवाः तत एव एनान् देवानानीय इह प्रयुङ्क्ते ॥

[2]वाच इति ॥ वाग्योगः खल्वयम् । वाक् सामिधेनीलक्षणा अनेन युज्यते । प्रजा एवेति । एतेन हिङ्कारस्य पशव्यत्वमाह ॥

[3]त्रिः प्रथमामित्यादि ॥ 'प्र वो वाजाः' * इत्याद्या एकादशर्चः ।

*तै. ब्रा. ३-५-२.

मामन्वाह त्रिरुत्तमां यज्ञस्यैव तद्ब-
रुसम् ॥ ३१ ॥ नह्यत्यप्रंस्रꣳसाय
संततमन्वाह प्राणानामन्नाद्यस्य सं-

त्युत्-तमाम् । यज्ञस्य । एव । तत् । बरुसम् ॥
३१ ॥ नह्यति । अप्रस्रꣳसायेत्यप्र-स्रꣳसाय ।
[4]संततमिति सं-ततम् । अन्विति । आह । प्राणा-
नामिति प्र-अनानाम् । अन्नाद्यस्येत्यन्न-अद्यस्य ।
संतत्या इति सं-तत्यै । अथो इति । रक्षसाम् ।

आद्यन्तयोर्वे [योः पुनर्वे] चेनेन पञ्चदशसामिधेन्यः क्रियन्ते । तेन सामिधेनीनाम् [नीनां आद्यन्तयोरभ्यासेन यज्ञस्य बरुसम् आ] वरणं नह्यति बध्नाति । बृ आवरणे, औणादिकस्सप्रत्ययः । तत् यज्ञस्य अप्रस्रंसनाय भवति ॥

[4]सन्ततामिति ॥ पूर्वस्या उत्तरमर्धर्चं उत्तरस्याश्च पूर्वं संहितं कुर्यात् । प्रथमायां च हिङ्कारेण मध्यमाया अर्धर्चमालभेत । न हिंकृत्येति केचित् । अविशेषात् सर्वेषां सन्ततत्वम् । ऋचावन्त-राऽनुच्छ्वासः सन्ततत्वं श्रूयते 'नान्तरार्चा व्यन्यात्' इति । एकेनोच्छ्वासेनोच्चार्यैव क्रियमाणं प्राणानामन्नाद्यस्य चाविच्छेदाय भवति । अथो अपि च रक्षसामपहत्यै भवति, सामिधेनीनां अनुच्छ्वासेन रक्षसामनुच्छ्वासः क्रियत इति । केचिदाहुः—प्रथमो-त्तमयोरेवेदं सन्ततत्वविधानमिति ॥

तंत्या अथो रक्षसामपहत्यै राथन्तरीं प्रथमामन्वाह राथन्तरो वा अयं लोक इममेव लोकमभि जयति त्रिर्वि गृह्णाति त्रयं इमे लोका इमानेव लोकानभि जयति बार्हतीमुत्तमामन्वाह बार्हतो वा असौ लोकोऽमुमेव लोकमभि जय-

अपहत्या इत्यप-हत्यै । [5]राथन्तरीमिति राथं-तरीम् । प्रथमाम् । अन्विति । आह । राथन्तर इति राथं-तरः । वै । अयम् । लोकः । इमम् । एव । लोकम् । अभीति । जयति । [6]त्रिः । वीति । गृह्णाति । त्रयः । इमे । लोकाः । इमान् । एव । लोकान् । अभीति । जयति । [7]बार्हतीम् । उत्तमामित्युत्-तमाम् । अन्विति । आह । बार्हतः । वै । असौ । लोकः । अमुम् । एव । लोकम् ।

[5]राथन्तरीमिति ॥ सामविशेषसम्बन्धेन ऋचस्स्तुतिः । रथन्तरसामसम्बन्धिनी प्रथमा ऋक्, प्राथम्याद्द्वयोरुदात्तस्वरत्वाच्च । उत्सादित्वादञ् । अयं लोको भूलोकः राथन्तरः, स एव हेतुः ॥

[6]अस्यास्त्रिर्विच्छेदो विग्रहः । तृतीयां त्रिर्विगृह्णातीत्येके ॥

[7]बार्हतीमिति ॥ 'तं त्वा समिद्भिः'* इति तृतीया तिसृणामुत्त-

*तै. ब्रा. ३-५-२.

ति प्र वः ॥ ४० ॥ वाजा इत्यनि-
रुक्तां प्राजापत्यामन्वाह यज्ञो वै प्र-
जापतिर्यज्ञमेव प्रजापतिमा रंभते
प्र वो वाजा इत्यन्वाहान्नं वै वाजो-
न्नमेवाव रुन्धे प्र वो वाजा इत्यन्वा-

अभीति । जयति । [4]प्रेति । वः ॥ ४० ॥ वाजाः । इति । अनिरुक्तामित्यनिः–उक्ताम् । प्राजापत्यामिति प्राजा–पत्याम् । अन्विति । आह । यज्ञः । वै । प्रजापतिरिति प्रजा–पतिः । यज्ञम् । एव । प्रजापतिमिति प्रजा–पतिम् । एति । रभते । प्रेति । वः । वाजाः । इति । अन्विति । आह ।

मा । बृहच्छब्दोप्युत्सादिः । बृहत्सामवत्त्वं पूर्ववत्सम्बन्धि, उभयोस्तृतीयत्वात् ॥

[4]अनिरुक्तामिति ॥ अस्पष्टदेवताकां अतः प्राजापत्यां नीचैस्स्वरत्वाच्च बृहच्छब्दसम्बन्धित्वाच्च । यज्ञात्मानं प्रजापतिमादौ परिगृह्णाति । विशिष्टदेवतासम्बन्धेन स्तुतिरेषा । अन्नं वै वाज इति । वाजपदसम्बन्धेन स्तुतिः । प्राचीनमिति । उपसर्गविशेषसम्बन्धेन स्तुतिः । प्रगतं प्राचीनम् । 'विभाषाञ्चेरदिक्स्त्रियाम्' इति खः ॥

ह तस्मात्प्राचीनꣳ रेतो धीयतेऽग्न आ याहि वीतय इत्याह तस्मात्प्रतीचीः प्रजा जायन्ते प्र वो वाजाः ॥ ४१ ॥ इत्यन्वाह मासा

अन्नम् । वै । वाजः । अन्नम् । एव । अवेति । रुन्धे । प्रेति । वः । वाजाः । इति । अन्विति । आह । तस्मात् । प्राचीनम् । रेतः । धीयते । [9]अग्ने । एति । याहि । वीतये । इति । आह । तस्मात् । प्रतीचीः । प्रजा इति प्र—जाः । जायन्ते । [10]प्रेति । वः । वाजाः ॥ ४१ ॥ इति । अन्विति । आह । मासाः । वै । वाजाः । अर्धमा-

[9]अग्न आ याहीति द्वितीया ऋक् ॥ आयाहीति वचनात् प्राचीनं निहितं रेतः प्राचीनं प्रजात्वेन परिणतं निर्गच्छति । प्रतिकूलाः प्रतीच्यः । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । 'चौ' इति पूर्वपदस्य दीर्घत्वम्, अन्तोदात्तत्वं च ॥

[10]मासा वा इत्यादि ॥ मन्त्रपदानां सर्वेषां स्तुतिः । हे ऋत्विग्यजमानाः वाजादयो युष्माकमभिमतसिद्ध्ये भवन्तु । वाजाः मासाः अन्नहेतवः; गतिमन्तो वा सर्वक्रियाणामाधाराः । अर्धमासाः अभिद्यवः दिवसैरभिगतदीप्तित्वात् साभिप्रायेण क्रियाप्रवर्तकाः । हविष्मन्तो देवाः क्रियया आराध्याः । घृताची

वै वाजा अर्धमासा अभिद्यवो देवा हविष्मन्तो गौर्घृताची यज्ञो देवाञ्जिगाति यजमानस्सुम्नयुरिदमसीदमसीत्येव यज्ञस्य प्रियं धामाव रुन्धे यं कामयेत सर्वमायुरियादिति

सा इत्यर्ध–मासाः । अभिद्यव इत्यभि–द्यवः । देवाः । हविष्मन्तः । गौः । घृताची । यज्ञः । देवान् । जिगाति । यजमानः । सुम्नयुरिति सु-म्न–युः । इदम् । असि । इदम् । असि । इति । एव । यज्ञस्य । प्रियम् । धाम । अवेति । रुन्धे । 11यम् । कामयेत । सर्वम् । आयुः । इयात् । इति ।

घृतमञ्चतीति । घृतहेतुर्गौः हविःप्रदानेन क्रियाप्रवृत्तिहेतुः । पूर्ववत् 'चौ' इति दीर्घत्वम्, अन्तोदात्तत्वं च । स यज्ञो देवान् जिगाति गच्छति तृप्तिहेतुत्वेन । गाङ् गतौ, व्यत्ययेन परस्मैपदं, शपः श्लुः, अभ्यासस्य चेत्वम् । सुम्नयुः सुखमात्मन इच्छतीति सुम्नयुर्यजमानः फलभाक् । एवमेते यज्ञस्याधाराः । एभिस्ताद्रूप्येण इदमसीदमसीति यज्ञं स्तुत्वा यज्ञस्य प्रियं धाम स्थानं वाजादिकमवरुन्धे ॥

11यं इत्यादि ॥ एतेन प्रथमद्वितीययोः सन्तानस्य विशेषणात् आयुर्हेतुत्वेन स्तुतिः क्रियते । 'प्र वो वाजाः'* इत्येता-

*तै. ब्रा. ३-५-२.

प्र वो वाजा इति तस्यानूच्याग्न-
आ याहि वीतय इति संततमुत्तर-
मर्धर्चमा लभेत ॥ ४२ ॥ प्राणेनैवा-
स्यापानं दाधार सर्वमायुरेति यो
वा अरत्निः सामिधेनीनां वेदारत्ना-

प्रेति । वः । वाजाः । इति । तस्य । अनूच्येत्य-
नु-उच्य । अग्ने । एति । याहि । वीतये । इति ।
संततमिति सं-ततम् । उत्तरमित्युत्-तरम् ।
अर्धर्चमित्यर्ध-ऋचम् । एति । लभेत ॥ ४२ ॥
प्राणेनेति प्र-अनेन । एव । अस्य । अपानमित्य-
प-अनम् । दाधार । सर्वम् । आयुः । एति ।
[12]यः । वै । अरत्निम् । सामिधेनीनामिति सां-
इधेनीनाम् । वेद । अरत्नौ । एव । भ्रातृव्यम् ।

मनूच्य अस्या उत्तरमर्धर्चं 'अग्न आ याहि वीतये'* इत्यनया सन्ततमालभेत । ऋचोर्धमर्धर्चम् । 'ऋक्पूः' इति समासान्तः । प्राणेनैवेति । द्वयोः अर्धर्चयोः प्राणापानस्थानीयत्वात् । दाधारेति छान्दसो लिट्, तुजादित्वादभ्यासस्य दीर्घत्वम् ॥

[12]यो वा इत्यादिना सन्तानस्य फलान्तरं दर्शयति । सामिधामाधानमन्त्रास्सामिधेन्यः । 'सामिधामाधाने' इति षेण्यण्प्रत्ययः,

*तै. ब्रा. ३-५-२.

वेव भ्रातृव्यं कुरुतेऽर्धर्चौ सं दधात्येष वा अरत्निस्सामिधेनीनां य एवं वेदारत्नावेव भ्रातृव्यं कुरुत ऋषेर्-

कुरुते । अर्धर्चावित्यर्ध—ऋचौ । सामिति । दधाति । एषः । वै । अरत्निः । सामिधेनीनामिति सां—इधेनीनाम् । यः । एवम् । वेद । अरत्नौ । एव । भ्रातृव्यम् । कुरुते । [13]ऋषेर्‌ऋषेरित्यृषेः—

---

'पिद्गौरादिभ्यश्च' इति ङीप्, 'यस्य' इति लोपे 'हलस्तद्धितस्य' इति यलोपः । तासामरत्निः अरमणम् । नञ्पूर्वाद्रमेर्निप्रत्ययेऽन्त्यविकारः । यद्वा—अरणमरत्निः सामिधेनीनां गमनविशेषः। अर्तेरत्निप्रत्ययः । अथवा—द्वौ प्रादेशौ संहितावरत्निः, प्रदेशस्थानीययोरर्धर्चयोस्सन्धानम् । तावेवारत्निरित्युपचर्यते । प्रमाणलक्षणाद्वा सामिधेनीनामुच्छ्वासप्रमाणं यो वेदेति । अरत्नाविति । सन्धानस्यारत्निशब्देनाभिधानस्येदं फलम् । अरमणे अरमणशीलत्वे प्रादेशद्वयपरिमितत्वे वा शत्रून् कुरुते । कः पुनस्स आसामरत्निरित्याह—अर्धर्चाविति । यजमानव्यतिरिक्तवेदित्रर्थं य एवं वेदेत्यादेः पुनर्वचनम् ॥

[13]ऋषीणां सम्बन्धिभ्य आविर्भूताः एताः । ता यदि परस्परं असंयुक्ताः स्युः तदा या एता ऋषिभ्यो गोत्रकृद्भ्यः भृग्वादिभ्यः उत्पन्नाः प्रजाः पशवश्च ; तैरपि सर्वैरेता वितिष्ठेरन् विश्लिष्टाः स्युः यजमानस्य प्रजापशुसिद्धिहेतवो न स्युरित्यर्थः तस्मादर्धर्चसन्धानेन एतास्संयुनक्ति । ताश्च संयुक्तवत्सा गाव इव

ऋषेर्वा एता निर्मिता यत्सामिधेन्यं-
स्ता यदसंयुक्तास्स्युः प्रजया पशुभि-
र्यजमानस्य वि तिष्ठेरन्नर्धर्चौ सं दधा-
ति सं युनक्त्येवैनास्ता अस्मै संयुक्ता
अवरुद्धास्सर्वामाशिषं दुह्रे ॥ ४३ ॥

ऋषेः । वै । एताः । निर्मिता इति निः—मिताः । यत् । सामिधेन्यं इति सां—इधेन्यंः । ताः । यत् । असंयुक्ता इत्यसं—युक्ताः । स्युः । प्रजयेति प्र—जया । पशुभिरिति पशु—भिः । यजमानस्य । वीति । तिष्ठेरन् । अर्धर्चावित्यर्ध—ऋचौ । सामिति । दधाति । सामिति । युनक्ति । एव । एनाः । ताः । अस्मै । संयुक्ता इति सं—युक्ताः । अवरुद्धा इत्यव—रुद्धाः । सर्वाम् । आशिषमित्या—शिषम् । दुह्रे ॥ ४३ ॥

बर्सं वो जायन्ते प्र वो वाजा लभेत दधा-
ति सं दश च ॥७॥

---

गोष्ठेऽवरुद्धाः अस्मै यजमानाय सर्वामाशिषमभिमतमर्थं दुह्रे स्वयमेव दुहन्ते । कर्मकर्तरि 'न दुहस्नुनमाम्' इति यगभावः, 'बहुलं छन्दसि' इति लट्, 'लोपस्त आत्मनेपदेषु' इति तलोपः, अतो गुणे पररूपत्वम् ॥

इति द्वितीये पञ्चमे सप्तमोनुवाकः ॥

अयंज्ञो वा एष योऽसामाग्न आ याहि वीतय इत्याह रथन्तरस्यैष वर्णस्तं त्वा समिद्भिरङ्गिर इत्याह वामदेव्यस्यैष वर्णो बृहदग्ने सुवीर्यमित्याह बृहत एष वर्णो यदेतं तृचम-

[1]अयंज्ञः । वै । एषः । यः । असामा । अग्ने । एति । याहि । वीतये । इति । आह । रथन्तरस्येति रथं-तरस्य । एषः । वर्णः । तम् । त्वा । समिद्भिरिति समित्-भिः । अङ्गिरः । इति । आह । वामदेव्यस्येति वाम-देव्यस्य । एषः । वर्णः । बृहत् । अग्ने । सुवीर्यमिति सु-वीर्यम् । इति । आह । बृहतः । एषः । वर्णः । यत् । एतम् । तृचम् । अन्वाहेत्यनु-आह । यज्ञम् ।

[1]अयज्ञो वा इत्यादि ॥ द्वितीयाप्रभृतेः ऋचः स्तुतिः क्रियते । रथन्तरस्येति । पूर्ववत्प्राथम्यादिना रथन्तरादिरूपत्वं तिसृणामृचाम् । 'वामदेवाड्ड्यड्ड्यौ' । बृहदग्न इति । बृहच्छब्दसम्बन्धेन बार्हतत्वं दर्शयितुं तृतीयस्य पदस्योपादानम् । तृचमिति । तिसृणामृचां समाहारस्तृचम् । 'ऋक्पूः' इति समासान्तः । त्रेस्सम्प्रसारणं, उत्तरपदलोपश्च । सामन्वन्तमिति । 'अनो नुट्' इति नुट् ॥

न्वाहं यज्ञमेव तत्सामंन्वन्तं करो-
त्यग्निरमुष्मिंन्लोक आसींदादित्यो-
स्मिन्ताविमौ लोकावशान्तौ॥४४॥
आस्तां ते देवा अंब्रुवन्नेतेमौ वि पर्यू-
हामेत्यग्न आ याहि वीतय इत्यस्मि-
न्लोकेऽग्निमंदधुर्बृहदंग्ने सुवीर्यमित्य-
मुष्मिंन्लोक आदित्यं ततो वा इमौ

एव । तत् । सामंन्वन्तमिति सामन्न्-वन्तम् । करोति । [2]अग्निः । अमुष्मिन्न् । लोके । आसीत् । आदित्यः । अस्मिन्न् । तौ । इमौ । लोकौ । अशान्तौ ॥ ४४ ॥ आस्ताम् । ते । देवाः । अब्रुवन्न् । एत । इत । इमौ । वि । परीति । ऊहाम । इति । अग्ने । एति । याहि । वीतये । इति । अस्मिन्न् । लोके । अग्निम् । अदधुः । बृहत् । अग्ने । सुवीर्यमिति सु-वीर्यम् । इति । अमुष्मिन्न् । लोके । आदित्यम् । ततः । वै । इमौ ।

[2]अग्निरमुष्मिन्नित्यादि ॥ स्वर्लोके अग्निरासीत्, पृथिव्यामादित्यः। तत इमौ लोकौ अशान्तौ असुखौ आस्तां अभवताम् । अथ च ते तथा पश्यन्तो देवाः परस्परमब्रुवन्—एत आगच्छत स-

लोकावंशाम्यतां यदेवमन्वाहानयो-
र्लोकयोश्शान्त्यै शाम्यंतोस्मा इमौ
लोकौ य एवं वेद पञ्चदश सामि-
धेनीरन्वाह पञ्चदश ॥ ४५ ॥ वा

लोकौ । अशाम्यताम् । यत् । एवम् । अन्वाहे-त्यनु–आह । अनयोः । लोकयोः । शान्त्यै । शाम्यतः । अस्मै । इमौ । लोकौ । यः । एवम् । वेद । [3]पञ्चदशेति पञ्च–दश । सामिधेनीरिति सां–इधेनीः । अन्विति । आह । पञ्चदशेति पञ्च–दश ॥४५॥ वै । अर्धमासस्येत्यर्ध–मासस्य । रात्र-

वैऽपि यूयमिमौ अग्न्यादित्यौ विपर्यूहाम विपरिवृत्तलोकौ स्थापयाम । अग्न आयाहीति बर्हिषि निषीदेति लिङ्गं नीचैरवस्थानस्य। ऋचश्च प्रथमत्वात्. प्रथमलोकपरिग्रहः । तत्र तृतीयदेशस्यापि प्रथमपादादावग्नि * शब्दोपादानादग्नेः प्रथमलोकावस्थानं सूच्यते । बृहदग्न इति । विवासनकारित्वमादित्यात्मन एव । अग्नेरिति । तस्योच्चैरवस्थानलिङ्गविशेषः । ऋचस्तृतीयत्वात् तृतीयलोकपरिग्रहः । तत्र तृतीयदेशत्वम् ॥

[3]अर्धमासशः [अर्धमासेन] अक्षरशः अक्षरेण संवत्सरमाप्नोति ।

*घ–हः । तत्रापि प्रथम

अर्धमासस्य रात्रयोर्धमासशस्संव-
त्सर आप्यते तासां त्रीणि च श-
तानि षष्टिश्चाक्षराणि तावतीस्संव-
त्सरस्य रात्रयोक्षरश एव संवत्सर-
माप्नोति नृमेधश्च परुच्छेपश्च ब्रह्म-

यः । अर्धमासश इत्यर्धमास-शः । संवत्सर इति सं-वत्सरः । आप्यते । तासाम् । त्रीणि । च । शतानि । षष्टिः । च । अक्षराणि । तावतीः । संवत्सरस्येति सं-वत्सरस्य । रात्रयः । अक्षरश इत्यक्षर-शः । एव । संवत्सरमिति सं-वत्सरम् । आप्नोति । [4]नृमेध इति नृ-मेधः । च । परुच्छेपः ।

अक्षराणां रात्रीणां च समसङ्ख्याकारेण संवत्सरावाप्तिः । पूर्ववच्छम् ॥

[4]नृमेधश्चेत्यादिना ॥ ब्रह्मवादित्वं ब्रह्मवाद्यम् । ब्रह्म वेदं वदितुमिष्टे विषये नियोक्तुं सामर्थ्यं ब्रह्मवादः, तदेव ब्रह्मवाद्यम् । स्वार्थिको यत् 'परादिश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । यद्वा—ब्रह्मणो वदनसामर्थ्यं ब्रह्मवाद्यम् । 'वदस्सुपि क्यप्च' इति यत्, वर्णविकारश्छान्दसः, कृदुत्तरपदप्रकृतिस्वरत्वेन 'यतोऽनावः' इत्याद्युदात्तत्वम् । श्यन्वा व्यत्ययेन प्रवर्तते । पूर्वं नृमेधपरुच्छेपनामानावृषी ब्रह्मवाद्ये विप्रतिपन्नावभवताम्, अहं

वाद्यमवदेतामस्मिन्दारावार्द्रेऽग्निं जनयाव यतरो नौ ब्रह्मीयानिति नृमेधोऽभ्यवदत्स धूममजनयत्परुच्छेपोऽभ्यवदत्सोऽग्निमजनयदृष इत्यब्रवीत् ॥ ४६ ॥ यत्समावद्विद्व कथा त्व-

च । ब्रह्मवाद्यमिति ब्रह्म-वाद्यम् । अवदेताम् । अस्मिन् । दारौ । आर्द्रे । अग्निम् । जनयाव । यतरः । नौ । ब्रह्मीयाम् । इति । [5]नृमेध इति नृ-मेधः । अभीति । अवदत् । सः । धूमम् । अजनयत् । परुच्छेपः । अभीति । अवदत् । सः । अग्निम् ।

ब्रह्मतरोऽहं ब्रह्मतर इति । तौ तथा विप्रतिपन्नौ इत्थं ब्रह्मवाद्यमवदेतां वैमत्येन अवदताम् । 'भासन' इत्यादिना विमतावात्मनेपदम् । कथमित्याह—नौ आवयोर्मध्ये यतरो ब्रह्मीयान् ब्रह्मतरः अस्मिन्नार्द्रे दारौ अग्निं जनयाव अहं वा त्वं वा । तन्त्रेण द्वयोरभिधानं, यतरो नौ ब्रह्मीयान् त्वं वाऽहं वा तावावामत्राग्निं जनयावेति । विशिष्टज्ञाननिमित्तत्वेन ब्रह्मशब्दस्य गुणवचनत्वात् 'अजादी गुणवचनादेव' इति ईयसुन् प्रत्यये अलोपः । 'कियत्तदो निर्धारणे' इति यच्छब्दात् डतरच्प्रत्ययः ॥

[5]नृमेधोऽभ्यवदत् ॥ आर्द्रं दारुमभिलक्ष्य अग्निं जनयितुकामो

मग्निमजीजनो नाहमिति सामिधे-
नीनामेवाहं वर्णं वेदेत्यब्रवीद्यद्घृतवं-
त्पदमनूच्यते स आसां वर्णस्तं त्वा
समिद्भिरङ्गिर इत्याह सामिधेनी-

अजनयत् । ऋषे । इति । अब्रवीत् ॥ ४६ ॥
यत् । समावत् । विद्म । कथा । त्वम् । अग्निम् ।
अजीजनः । न । अहम् । इति । सामिधेनीना-
मिति सां–इधेनीनाम् । एव । अहम् । वर्णम् ।
वेद । इति । अब्रवीत् । [6]यत् । घृतवदिति घृत–
वत् । पदम् । अनूच्यत इत्यनु–उच्यते । सः ।
आसाम् । वर्णः । तम् । त्वा । समिद्भिरिति समि-

ब्रह्म वदन् स धूममेवाजनयत् नाग्निम् । परुच्छेपस्त्वग्निमजनयत् । अथ तं दृष्टातिशयप्रतिपत्त्यर्थं ऋषिशब्देन प्रेम्णाऽऽमन्त्र्य नृमेधोऽब्रवीत् यत् यदा समावत् विद्म सममेवावयोर्वेदनं सर्वत्र तदा कथा केन हेतुना त्वमग्निमजीजनः नाहमिति । समादावतुप् स्वार्थिकः, 'था हेतौ च' इति थाप्रत्ययः । अथ परुच्छेपोऽब्रवीत्—सामिधेनीनां वर्णं स्वरूपमहं वेद जानामि न त्वामिति ॥

[6]इदानीं तं वर्णं स्वयमेव परुच्छेप आह—यदिति ॥ घृतेनाभिधेयेन तद्वत्पदं घृतवत् घृतशब्द एव । यद्वा—घृतशब्दवत्पदं 'तं त्वा समिद्भिः'* इत्यस्याः द्वितीयः पादः । तस्य

*तै. ब्रा. ३-५-२.

ष्वेव तज्ज्योतिर्जनयति स्त्रियस्तेन यदृचस्स्त्रियस्तेन यद्गायत्रियस्स्त्रियस्तेन यत्सामिधेन्यो वृषण्वतीमन्वाह ॥ ४७ ॥ तेन पुꣳस्वतीस्तेन

तु–भिः । अङ्गिरः । इति । आह । सामिधेनीष्विति सां–इधेनीषु । एव । तत् । ज्योतिः । जनयति । स्त्रियः । तेन । यत् । ऋचः । स्त्रियः । तेन । यत् । गायत्रियः । स्त्रियः । तेन । यत् । सामिधेन्य इति सां–इधेन्यः । [7]वृषण्वतीमिति वृषण्–वतीम् । अन्विति । आह ॥ ४७ ॥ तेन । पुꣳस्वतीः । तेन ।

यदनुवचनं स एव तासां एको वर्णः । तमेवार्थं समर्थयते— तं त्वेति । ज्योतिष्मत्त्वमासां घृतसम्बन्धेन क्रियते तेजो घृतमिति । अथ वर्णान्तराण्याह—स्त्रियस्तेनेत्यादि । ऋक्त्वेन गायत्रीत्वेन सामिधेनीत्वेन त्रिप्रकारं स्त्रीत्वमासाम् ॥

[7]वृषण्वतीमिति ॥ 'वृषणं त्वा वयं वृषन्'* इत्येतत्सम्बन्धेनैताः पुंस्त्ववत्यः सेन्द्रा मिथुनाश्च भवन्ति । वृषा सेक्ता पुमान् । 'तसौ मत्वर्थे' इति भत्वम् । वृषा इन्द्रः प्रधानत्वाद्देवतानाम् । स्त्रीत्वात् पुंसो योगाच्च मिथुनत्वमासामस्तीति मिथुनाः । पामादित्वान्नप्रत्ययः । केचिदाहुः—'स नः पृथु श्रवाय्यम्'* इत्यन्तानां चतसृणां पूर्वं स्तुतिः कृता । 'अग्निं दूतं'* इत्यादीनां स्तुतिः करिष्यते । 'ईडेन्यः'* इत्यादीनां तिसृणां वृषण्वतीम-

*तै. ब्रा. ३-५-२.

सेन्द्रास्तेन मिथुना अग्निर्देवानां दू-
त आसीदुशना काव्योसुराणां तौ
प्रजापतिं प्रश्नमैताꣳ स प्रजापतिर-
ग्निं दूतं वृणीमह इत्यभि पर्यावर्त-

सेन्द्रा इति स-इन्द्राः । तेन । मिथुनाः । [४]अग्निः । देवानाम् । दूतः । आसीत् । उशना । काव्यः । असुराणाम् । तौ । प्रजापतिमिति प्रजा-पतिम् । प्रश्नम् । ऐताम् । सः । प्रजापतिरिति प्रजा-पतिः । अग्निम् । दूतम् । वृणीमहे । इति । अभीति । पर्याव-र्ततेति परि-आवर्तत । ततः । देवाः । अभवन् । परेति ।

न्वाहेत्यादिका स्तुतिः क्रियते इति । 'अनो नुट्' इति नुट् । अयस्मयादित्वेन भत्वात्पदकालेऽपि तस्य णत्वं न निवर्तते ॥

[४]अग्निर्देवानामित्यादि ॥ दूतो हविषां देवसकाशं प्रापयिता । देवानामग्निर्दूतोऽभवत् । असुराणां कवेः पुत्र उशना शुक्रो दूतोऽभवत् । अवन्ती [आसीदिति ?] छान्दसमन्तोदात्तत्वम् । 'ऋदुशनस्पुरुदंसः' इत्युशनसोऽनङादेशः । अथ तौ प्रजापतिं प्रश्नमैतां आवयोः को यागे दूत्यमर्हतीति प्रजापतिसकाशमगच्छताम् । 'यजयाच' इति कर्मणि नङ्प्रत्ययः । विभक्तिव्यत्ययो वा प्रश्नार्थं प्रजापतिमैतामिति । अथ पृच्छ्यमानः प्रजापतिः 'अग्निं दूतं वृणीमहे'* इतीमामृचं ब्रुवन्, अग्निमेवाभि-

* तै. ब्रा. ३-५-२.

त ततो देवा अभवन्परासुरा यस्यै-
वं विदुषोऽग्निं दूतं वृणीमह इत्यन्वा-
ह भवत्यात्मना पराऽस्य भ्रातृव्यो
भवत्यध्वरवतीमन्वाह भ्रातृव्यमे-
वैतया ॥ ४८ ॥ ध्वरति शोचि-
ष्केशस्तमीमह इत्याह पवित्रमेवैत-

असुराः । [9]यस्य । एवम् । विदुषः । अग्निम् । दूतम् ।
वृणीमहे । इति । अन्वाहेत्यनु–आह । भवति ।
आत्मना । परेति । अस्य । भ्रातृव्यः । भवति ।
[10]अध्वरवतीमित्यध्वर–वतीम् । अन्विति । आह ।
भ्रातृव्यम् । एव । एतया ॥ ४८ ॥ ध्वरति ।
शोचिष्केश इति शोचिः–केशः । तम् । ईमहे ।
इति । आह । पवित्रम् । एव । एतत् ।

पर्यावर्तत अग्निमेवालक्ष्य पर्यावृत्तोऽभवत् । ततोऽग्नेरेव दूत्यार्ह-
त्वात् तद्दूतका एवाभवन्, असुराश्च पराभूताः ॥

[9]यस्यैवमित्यादि ॥ गतम् *॥

[10]अध्वरवतीमिति ॥ ‘ समिध्यमानो अध्वरे ’† इत्येताम् । ध्वरति
हिनस्तीति ध्वृ मूर्छने । पवित्रमिति । शोचिस्सम्बन्धेन शुचित्वात्
पवित्रमियमृक् ॥

*सं. १-७-३. 5 † तै. ब्रा. ३-५-२.

यजमानमेवैतया पवयति समि-
द्धो अग्न आहुतेत्याह परिधिमेवैतं
परि दधात्यस्कन्दाय यदत ऊर्ध्वम-
भ्यादध्याद्यथा बहिःपरिधि स्कन्द-
ति तादृगेव तत्त्रयो वा अग्नयो
हव्यवाहनो देवानां कव्यवाहनः पि-

यजमानम् । एव । एतया । पवयति । [11]समिद्ध इति सं–इद्धः । अग्ने । आहुतेत्या–हुत । इति । आह । परिधिमिति परि–धिम् । एव । एतम् । परीति । दधाति । अस्कन्दाय । यत् । अतः । ऊर्ध्वम् । अभ्यादध्यादित्यभि–आदध्यात् । यथा । बहिःपरिधीति बहिः–परिधि । स्कन्दति । तादृक् । एव । तत् । [12]त्रयः । वै । अग्नयः । हव्यवाहन इति हव्य–वाहनः । देवानाम् । कव्यवाहन इति

[11]परिधिमिति ॥ 'समिद्धो अग्न आहुत'* इतीयमृक्परिधिस्थानीया । परिधानं विधानसमापनम् । समिद्ध इति च समाप्तिलिङ्गम् । अत एवानूयाजे वेदितव्या । परिधेर्बहिः बहिःपरिधि । 'अपपरिबहिरञ्चवः' इत्यव्ययीभावः ॥

[12]त्रयो वा इत्यादि ॥ 'हव्येनन्तःपादम्' इत्युभयत्र ञ्युट्

*तै. ब्रा. ३-५-२.

तृणाꣳ सहरक्षा असुराणां त एतर्ह्या
शꣳसन्ते मां वरिष्यते माम्॥४१॥
इति वृणीध्वꣳ हव्यवाहनमित्याह
य एव देवानां तं वृणीत आर्षेयं

कव्य—वाहनः । पितृणाम् । सहरक्षा इति
सह—रक्षाः । असुराणाम् । ते । एतर्हि । एति ।
शꣳसन्ते । माम् । वरिष्यते । माम् ॥ ४१ ॥
इति । वृणीध्वम् । हव्यवाहनमिति हव्य—वाहनम् ।
इति । आह । यः । एव । देवानाम् । तम् । वृणी-
ते । [13]आर्षेयम् । वृणीते । बन्धोः । एव । न ।

'कव्यपुरीषपुरीष्येषु ञ्युट्' । त्रयोऽप्येतेऽग्नयोऽस्मिन्काले आ-
शंसन्ते प्रार्थयन्ते मामयं वरिष्यते इति । तत्र 'वृणीध्वं
हव्यवाहनम्'* इति वचनेन कव्यवाहादिव्युदासेन देवानामग्निर्ह-
व्यवाहन एव वृतो भवति ॥

[13]आर्षेयमिति ॥ ऋषेरपत्यमार्षेयम् । 'इतश्चानिञः' इति
ढक् । आत्मीयगोत्र ऋषिः । तद्धितप्रत्ययान्तानामामन्त्रितविभक्त्या
यथाप्रवरं वृणीते सामिधेन्यनन्तरम् । यथा भृगूणां 'अग्ने
महाꣳ असि ब्राह्मण भारत भार्गवच्यावनाप्नुवानौर्वजामदग्न्य' इति
पञ्चार्षेयः प्रवरः व्रियते । अत्र भृग्वादिभिरिष्टोऽग्निरेव तत्तद-
पत्यतयोपचर्यते । बन्धोरिति । बन्धुभ्यो भृग्वादिभ्य एवं वृणानो

*तै. ब्रा. ३-५-२.

वृणीते बन्धोरेव नैत्यथो संतत्यै पर-
स्तादर्वाचो वृणीते तस्मात्परस्ताद-
र्वाञ्चो मनुष्यान्पितरोनु प्र पिपते॥५०

एति । अथो इति । सन्तत्या इति सं–तत्यै । [14]परस्तात् । अर्वाचः । वृणीते । तस्मात् । पर-स्तात् । अर्वाञ्चः । मनुष्यान् । पितरः । अनु । प्रेति । पिपते ॥ ५० ॥

अशान्तावाह पञ्चदशाब्रवीदन्वाहैतया वरिष्यते
मामेकान्न त्रिꣳशच्च ॥ ८ ॥

नैति न च्युतो भवति । अथो अपि च इदमार्षेयवरणं अस्य पुत्रादिसन्तानसमृद्ध्यै भवति । यद्वा 'ऋषिणा हि देवाः पुरुषमनुबुद्ध्यन्ते' इति भृग्वादिभिः प्रसिद्धैः मन्त्रकृद्भिः बन्धुभिः व्रीयमाणैरयं बन्धुमान् भवति । ततो देवैरनुबुद्धो भवति, सन्तानवृद्धिश्च भवति ॥

[14]परस्तादिति ॥ परस्तात् पुरुषादारभ्य अर्वाचः अधस्तादवस्थितानृषीन् वृणीते यथा—भृग्वादयो जमदग्न्यन्ताः । परशब्दात्पञ्चम्यन्तात् 'दिक्छब्देभ्यः' इत्यादिना अस्तातिप्रत्ययः । तस्मादिति । परस्तादर्वाञ्चः पितरो मनुष्यान् प्रपिपते प्रकर्षेण विद्याभागितया अनुक्रमेण रक्षन्ति । अपरे परे पुरुषान् भजन्ते, अपरे परित्यजन्ति । छान्दसश्शुरात्मनेपदं च ॥

इति द्वितीये पञ्चमे अष्टमोऽनुवाकः.

अग्ने महाꣳ असीत्याह महान् ह्येष यदग्निर्ब्राह्मणेत्याह ब्राह्मणो ह्येष भारतेत्याहैष हि देवेभ्यो हव्यं भरति देवेद्ध इत्याह देवा ह्येतमैन्धत मन्विद्ध इत्याह मनुर्ह्येतमुत्तरो देवेभ्य

[1]अग्ने । महान् । असि । इति । आह । महान् । हि । एषः । यत् । अग्निः । ब्राह्मण । इति । आह । ब्राह्मणः । हि । एषः । भारत । इति । आह । एषः । हि । देवेभ्यः । हव्यम् । भरति । [2]देवेद्ध इति देव–इद्धः । इति । आह । देवाः । हि । एतम् । ऐन्धत । मन्विद्ध इति मनु–इद्धः । इति । आह । मनुः । हि । एतम् । उत्तर इत्युत्–तरः । देवेभ्यः । ऐन्ध ।

[1]अग्ने महानसीत्यादिना प्रवरमन्त्रपदानि व्याचष्टे ॥ महान् ह्येष इति । स्वभावत एवेति भावः । ब्राह्मणो ह्येष इति । यदग्निरेव जात्या ब्राह्मणः, ब्रह्मणो मुखाद्द्वयोरपि जातत्वात् । ब्रह्मणोपत्यत्वेन वा स्तुतिः । 'ब्राह्मोऽजातौ' इति व्यत्ययेन प्रवर्तते । एष हीति । हविषां भरणात् भारतः, भरतानामृत्विजामपत्यत्वात् भारतः ॥

[2]अथ प्रवरमुक्त्वा निविदोन्वाह—देवेद्ध इत्याद्याः ॥ ता व्याचष्टे—देवा हीति । देवा ऋत्विज इन्द्रादयो वा एतमैन्धत

ऐन्ध ऋषिष्टुत इत्याह ऋषयो ह्येतम-
स्तुवन्विप्रानुमदित इत्याह ॥ ५१ ॥
विप्रा ह्येते यच्छुश्रुवाꣳसः कविश-
स्त इत्याह कवयो ह्येते यच्छुश्रुवा-

ऋषिष्टुत इत्यृषि–स्तुतः । इति । आह । ऋषयः । हि । एतम् । अस्तुवन् । विप्रानुमदित इति वि-प्र–अनुमदितः । इति । आह ॥ ५१ ॥ विप्राः । हि । एते । यत् । शुश्रुवाꣳसः । [3]कविशस्त इति कवि–शस्तः । इति । आह । कवयः । हि । एते । यत् । शुश्रुवाꣳसः । ब्रह्मसꣳशित इति ब्रह्म–

दीपयन्ति, तस्माद्देवेद्धः । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । मनुर्द्धेतं इति । मनुर्द्धेतं देवतार्थमैन्ध । देवेभ्योऽपि वा मनुरुत्तरो मनुरेतस्मात् मन्विद्धः । पूर्ववत्स्वरः । एवं सर्वत्र । ऋषयो दर्शनवन्तोप्येनमस्तुवन् । विप्रा हीति । विप्रा मेधाविनः . ये शुश्रुवांसः श्रुतार्थाः गृहीतवेदार्थाः तैरप्यनुमदितः अनुमोदितः अनुक्रमेण वा स्तुतः । मद तृप्तियोगे ; मन्दतेर्वा, छान्दसो नुमभावः ॥

[3]कवयो हीति ॥ कवयः क्रान्तदर्शनाः सूक्ष्मदृशः तेऽपि श्रुतवन्तः एव । तैरपि शस्तः स्तुतः । ब्रह्मसंशितो हीति ॥

ऽसो ब्रह्मसꣳशित इत्याह ब्रह्मसꣳशितो ह्येष घृताहवन इत्याह घृताहुतिर्ह्यस्य प्रियतमा प्रणीर्यज्ञानामित्याह प्रणीर्ह्येष यज्ञानाꣳ रथीरध्वराणामित्याहैष हि देवरथोऽतू-

सꣳशितः । इति । आह । ब्रह्मसꣳशित इति ब्रह्म-सꣳशितः । हि । एषः । घृताहवन इति घृत-आहवनः । इति । आह । घृताहुतिरिति घृत-आहुतिः । हि । अस्य । प्रियतमेति प्रिय-तमा । प्रणीरिति प्र-नीः । यज्ञानाम् । इति । आह । प्रणीरिति प्र-नीः । हि । एषः । यज्ञानाम् । [4]रथीः । अध्वराणाम् । इति । आह । एषः । हि । देवरथ इति देव-रथः । अतूर्तः । होता । इति । आह ।

ब्रह्मणा ऋगादिना मन्त्रेण परवस्तुनैव वा संशितः सम्यक् तीक्ष्णीकृतः । घृताहुतिर्हीति । घृतमाहवनमाहुतिः प्रीतिहेतुरस्येति घृताहवनः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । प्रणीरिति । प्रकर्षेण यज्ञानां नेता उत्पादयिता ॥

[4]देवरथ इति ॥ अध्वराणां देवान् प्रति रंहयिता देवरथः । रंहणात् रथिः । औणादिक इप्रत्ययो वर्णविकारः । न हीति । कश्चिदप्येनं न तरति नातिक्रमते । तरतेः कर्मणि निष्ठायां

तों होतेत्याह न ह्येतं कश्चन ॥५२॥
तरति तूर्णिर् हव्यवाडित्याह सर्वं
ह्येष तरत्यास्पात्रं जुहूर्देवानामित्याह
जुहूर्ह्येष देवानां चमसो देवपान

न । हि । एतम् । कः । चन ॥ ५२ ॥ तरति । तूर्णिः । हव्यवाडिति हव्य—वाट् । इति । आह । सर्वम् । हि । एषः । तरति । आस्पात्रम् । जुहूः । देवानाम् । इति । आह । जुहूः । हि । एषः । देवानाम् । [5]चमसः । देवपान इति देव—पानः ।

छान्दसो नत्वाभावः । नञ्समासे 'परादिश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । केन चिदप्यतिक्रमितुं न शक्तः । होता देवानामाह्वाता । सर्वं हीति । तरतेः कर्तरि औणादिको निन्प्रत्ययः, क्तिन्येव वा 'ऋकारल्वादिभ्यः क्तिन्निष्ठावद्भवति' इति निष्ठावद्भावः, 'रदाभ्यां' इति णत्वम् । सर्वं तरितुमतिक्रमितुं समर्थो हविषां वोढारम् । जुहूर्हीति । जुहूस्थानीयोऽयं देवानां, यथा जुह्वाऽग्नौ हविः प्राप्यते एवमग्निना देवेषु हविः प्राप्स्यन्ते इति । विशेषस्त्वस्यास्पात्रत्वम् । अयस्पात्रवत् दृढतरा अग्निलक्षणा जुहूरिति ॥

[5]चमसो हीति ॥ देवा येन सोमं पिबन्ति स देवपानश्चमसः । तत्स्थानीयोऽयमग्निः । देवान् हीति । एष हि देवान् परितः

इत्याह चमसो ह्येष देवपानोऽराꣳ
इवाग्ने नेमिर्देवाꣳस्त्वं परिभूरसीत्या-
ह देवान् ह्येष परिभूर्यद्ब्रूयादा व-
ह देवान्देवयते यजमानायेति भ्रातृ-

इति । आह । चमसः । हि । एषः । देवपान
इति देव-पानः । अरान् । इव । अग्ने । नेमिः ।
देवान् । त्वम् । परिभूरिति परि-भूः । असि ।
इति । आह । देवान् । हि । एषः । परिभूरिति
परि-भूः । [6]यत् । ब्रूयात् । एति । वह । देवान् ।
देवयत इति देव-यते । यजमानाय । इति । भ्रा-

सर्वतो भवति परिगृह्णाति व्याप्नोति अरानिव नेमिः, तस्मा-द्देवान् परिभूरसीत्युच्यते । 'अभितःपरितः' इति द्वितीया; छान्दसस्तसिलोपः ॥

[6]यद्ब्रूयादिति ॥ आवह देवान् यजमानाय इत्यन्ता निवित् । शाखान्तरेषु तु 'आवह देवान् देवयते यजमानाय' इति पाठः। सोऽनेन निन्द्यते । यदि ब्रूयात् देवयते यजमानायेति भ्रातृव्य-मस्मै यजमानाय जनयेत् । तथाहि—यजमानाय देवानावहेत्येव यावद्देवानामुपादाने सिद्धे पुनः देवानात्मन इच्छते यजमानायेति विशेषणोपादानं देवव्यतिरिक्तानामनिष्यमाणतया यजमानस्य भ्रातृ-व्यवत्त्वं सूचयति । ततश्च भ्रातृव्यवान् यजमानश्च स्यात् ।

व्यमस्मै ॥ ५३ ॥ जनयेदा वह देवान् यजमानायेत्याह यजमानमेवैतेन वर्धयत्यग्निमग्न आ वह सोममा वहेत्याह देवता एव तद्यथापूर्वमुप ह्वयत आ चाग्ने देवान् वह सुयजा च यज जातवेद इत्याहाग्निमेव तत्सꣳ श्यति सोऽस्य सꣳ-

तृव्यम् । अस्मै ॥ ५३ ॥ जनयेत् । एति । वह । देवान् । यजमानाय । इति । आह । यजमानम् । एव । एतेन । वर्धयति । [7]अग्निम् । अग्ने । एति । वह । सोमम् । एति । वह । इति । आह । देवताः । एव । तत् । यथापूर्वमिति यथा—पूर्वम् । उपेति । ह्वयते । एति । च । अग्ने । देवान् । वह । सुयजेति सु—यजा । च । यज । जातवेद इति जात—वेदः । इति । आह । अग्निम् । एव । तत् । समिति । श्यति । सः । अस्य । सꣳशित इति

तस्माद्दैवयते इति पदं नोपादेयम् । ततश्च भ्रातृव्यशङ्काया अभावात् यजमानं वर्धयत्येवैश्वर्येण ॥

[7]अथ निविद उक्त्वा अग्निमग्न आवहेत्यादिना देवता आवाहयति—यथापूर्वमिति ॥ अग्न्याद्या यागदेवता अनुक्रमेणाग्निनाऽऽवा-

शितो देवेभ्यो हव्यं वहत्यग्निर् होता ॥ ५४ ॥ इत्याहाग्निर्वै देवानाꣳ होता य एव देवानाꣳ होता तं वृणीते स्मो वयमित्याहात्मानमेव सत्त्वं गमयति साधु ते यजमान देवतेत्याहा-

सं–शितः । देवेभ्यः । हव्यम् । वहति । अग्निः । होता ॥ ५४ ॥ इति । आह । अग्निः । वै । देवानाम् । होता । यः । एव । देवानाम् । होता । तम् । वृणीते । [8]स्मः । वयम् । इति । आह । आत्मानम् । एव । सत्त्वमिति सत्–त्वम् । गमयति । साधु । ते । यजमान । देवता । इति । आह । आशिषमि-

हयति । आचाग्र इति । आवह देवान् सुयजा त्वं अभिन्नेन च शोभनेन च यागेन च देवान् यज हे जातवेदः त्वं खलु जातानां वेदिता जातवेदा जातधनो वेत्येवं उपश्लोकनेनाग्निं संश्यति सम्यक् तीक्ष्णीकरोतीत्येव । स चाग्निः तथोज्ज्वलीकृतः तुष्टो देवस्थानं प्रापयति ॥

[8]स्मः स्याम वयं होतारः सर्वदा तवेति मन्त्रार्थं दर्शयति— आशिषमिति ॥ हे यजमान इज्यमाना देवता तव साधयित्री अभिमतानां इत्येतामाशिषमनेनाशास्ते । भवत्येव च तत्फलमिति । अत्र ‘ साधु ते यजमान देवता योऽग्निं होतारमवृथाः ’ इत्यध्वर्युप्रवरानुवादेन

शिर्षमेवैतामा शास्ते यद्ब्रूयाद्योऽग्निꣳ होतारमवृथा इत्यग्निनोभयतो यजमानं परि गृह्णीयात्प्रमायुकस्स्याद्यजमानदेवत्या वै जुहूर्भ्रातृव्यदेवत्योपभृत् ॥ ५५ ॥ यद्वे इव ब्रूया-

त्या-शिर्षम् । एव । एताम् । एति । शास्ते । यत् । ब्रूयात् । यः । अग्निम् । होतारम् । अवृथाः । इति । अग्निना । उभयतः । यजमानम् । परीति । गृह्णीयात् । प्रमायुक इति प्र-मायुकः । स्यात् । [1]यजमानदेवत्येति यजमान-देवत्या । वै । जुहूः । भ्रातृव्यदेवत्येति भ्रातृव्य-देवत्या । उपभृदित्युप-भृत् । ॥ ५५ ॥ यत् । द्वे इति । इव । ब्रूयात् । भ्रातृ-

शाखान्तरीयपाठः । सोनेन निन्द्यते । एवं हि ब्रुवन्नग्निना यजमानमुभयतः परिगृह्णीयात् 'अग्निर्होता वेत्वग्निः' 'अग्निं होतारमवृथाः' इत्येतयोर्मध्ये यजमानस्य श्रवणात्; ततोयं प्रमायुकः मरणशीलः स्यात् । तस्मात्तथा न कर्तव्यमिति । मीयतेश्छान्दस उकञ् ॥

[1]यजमानदेवत्येत्यादि ॥ अत्र 'घृतवतीमध्वर्यो स्रुचम्'*इत्येकवचनेन स्रुक् निर्दिश्यते । 'द्वे' इति जुहूपभृतौ आदीयेते । तस्माद्द्वित्वादानस्याभिप्रायं ब्राह्मणमिदमिति दर्शयति—यद्वे इव

*तै. ब्रा. ३-५-४.

भ्रातृव्यमस्मै जनयेद्घृतवतीमध्व-
र्यो स्रुचमास्यस्वेत्याह यजमानमे-
वैतेन वर्धयति देवायुवमित्याह दे-
वान् ह्येषाऽवति विश्ववारामित्याह

व्यम् । अस्मै । जनयेत् । घृतवतीमिति घृत-व-
तीम् । अध्वर्यो इति । स्रुचम् । एति । अस्यस्व ।
इति । आह । यजमानम् । एव । एतेन । वर्धयति ।
10 देवायुवमिति देव-युवम् । इति । आह । देवान् ।
हि । एषा । अवति । विश्ववारामिति विश्व-वाराम् ।

ब्रूयात् सामान्यविवक्षां कृत्वा घृतवत्यौ स्रुचाविति ।' यदि द्वे एव जुहूपभृतौ पृथङ्निर्दिशेत्तदा भ्रातृव्यदेवत्याया उपभृतो-प्युद्भूतरूपत्वाद्यजमानाय भ्रातृव्यं जनयेत् । एकवचनेन निर्देशात् यजमानदेवत्या वै जुहूरेव उद्भूतरूपा भवतीति भ्रातृव्याभावादैश्व-र्येणैनं वर्धयतीति । नन्वेकवचनेन सामान्याद्द्वयोरपि निर्देशात्पुन-रप्युद्भूतैवोपभृत्स्यात् । यद्यपि गुणभूतत्वादुपभृतः स्वातन्त्र्येण ग्रहणं नास्ति । तथाऽपि तुल्यप्रतिपत्ती स्याताम् । नैष दोषः । द्वे इति द्विवचनान्तस्यैव प्रतिषेधो विवक्षितः । इवशब्देन हि शब्द*-प्रतिपन्नयोः द्वयोस्समत्वं प्रतिद्योत्यते ; तस्माद्धोमसाधनभूता जुहूरेव उपभृता गृह्यते ॥

10 देवान् ह्येषेति ॥ देवानात्मन इच्छति रक्षितुमेवेति भावः ।

*क. ताच्छब्द्यम्.

विश्वꣳ ह्येषाऽवतीडामहै देवाꣳ ईडे-
न्यान्नमस्यान्नमस्यान् यजाम य-
ज्ञियानित्याह मनुष्या वा ईडेन्याः
पितरो नमस्या देवा यज्ञिया देवता
एव तद्यथाभागं यजति ॥ ५६ ॥

इति । आह । विश्वम् । हि । एषा । अवति । ई-
डामहै । देवान् । ईडेन्यान् । नमस्यान् । नम-
स्यान् । यजाम । यज्ञियान् । इति । आह । मनु-
ष्याः । वै । ईडेन्याः । पितरः । नमस्याः । देवाः ।
यज्ञियाः । देवताः । एव । तत् । यथाभागमिति
यथा—भागम् । यजति ॥ ५६ ॥

विप्रानुमदित इत्याह चनास्मै होतोपभृद्देवता
एव त्रीणि च ॥ ९ ॥

विश्वं हीति । विश्वकालप्रतिपत्तित्वात् विश्वमियं रक्षति । मनुष्या वा इत्यादि । मनुष्यादयोपि देवताः । तत्र मनुष्यात्मिका ईडेन्याः स्तुत्याः । औणादिक एन्यप्रत्ययः । पित्रात्मिका नमस्याः । 'नमोवरिवश्चित्रङः क्यच्,' तदन्तादचो यत् । देवतात्मिका यज्ञिया यज्ञार्हा यष्टव्याः । 'यज्ञर्त्विग्भ्यां घखञौ' । यथाभागमिति । या देवता यस्यां प्रतिपत्तौ तत्तदनतिक्रमेण तां यजति पूरयति ॥

इति द्वितीये पञ्चमे नवमोनुवाकः.

त्रीꣳस्तृचाननु ब्रूयाद्राजन्यस्य त्र-
यो वा अन्ये राजन्यात्पुरुषा ब्राह्म-
णो वैश्यश्शूद्रस्तानेवास्मा अनुका-
न्करोति पञ्चदशाननु ब्रूयाद्राजन्यस्य
पञ्चदशो वै राजन्यस्स्व एवैनꣳ
स्तोमे प्रतिष्ठापयति त्रिष्टुभा परि

[1]त्रीन् । तृचान् । अन्विति । ब्रूयात् । राज-न्यस्य । त्रयः । वै । अन्ये । राजन्यात् । पुरुषाः । ब्राह्मणः । वैश्यः । शूद्रः । तान् । एव । अस्मै । अनुकानित्यनु—कान् । करोति । [2]पञ्चदशेति पञ्च—दश । अन्विति । ब्रूयात् । राजन्यस्य । पञ्चदश इति पञ्च—दशः । वै । राजन्यः । स्वे । एव । एनम् । स्तोमे । प्रतीति । स्थापयति । [3]त्रिष्टुभा ।

[1]पुनरपि सामिधेनीरेवाधिकृत्योच्यते—त्रींस्तृचानिति ॥ नवेत्यवचनादावृत्तौ एव नवर्चः । आद्यास्तिस्त्रः तिसृभिरुक्ता इत्येके । त्रित्वान्वयात् ब्राह्मणादीन् अस्यानुकान् कमितॄन् करोति । ‘अनुकाभिक’ इति निपात्यते ॥

[2]पञ्चदशो वा इति ॥ प्रजापतेरुरोबाहुप्रभवत्वाद्द्वयोः । पूर्वेण सहास्य विकल्पः ॥

[3]त्रिष्टुभेति ॥ ‘त्वं वरुण उत’* इति । इन्द्रियं वा इति । तद्धेतुत्वात्ताच्छन्द्यम् ॥

* तै. ब्रा. ३-५-२.

दध्यादिन्द्रियं वै त्रिष्टुगिन्द्रियकामः खलु वै राजन्यो यजते त्रिष्टुभैवास्मा इन्द्रियं परि गृह्णाति यदि कामयेत ॥ ५७ ॥ ब्रह्मवर्चसमस्त्विति गायत्रिया परि दध्याद्ब्रह्मवर्चसं वै गायत्री ब्रह्मवर्चसमेव भवति सप्त-

परीति । दध्यात् । इन्द्रियम् । वै । त्रिष्टुक् । इन्द्रियकाम इतीन्द्रिय-कामः । खलु । वै । राजन्यः । यजते । त्रिष्टुभा । एव । अस्मै । इन्द्रियम् । परीति । गृह्णाति । [4]यदि । कामयेत ॥ ५७ ॥ ब्रह्मवर्चसमिति ब्रह्म-वर्चसम् । अस्तु । इति । गायत्रिया । परीति । दध्यात् । ब्रह्मवर्चसमिति ब्रह्म-वर्चसम् । वै । गायत्री । ब्रह्मवर्चसमिति ब्रह्म-वर्चसम् । एव । भवति । [5]सप्तदशेति सप्त-

[4]गायत्रियेति ॥ 'आजुहोत'* इत्येतया । 'पृथुपाजाः'† 'तंसबाधः'† इत्येते धाय्यास्थाने निधेये ॥

[5]सप्तदशेति ॥ द्वयोरपि मध्यदेशप्रभवत्वात् प्रजापतेः । जगत्येति । 'जनस्य गोपाः'‡ इत्येतया, जगतीशब्द उत्सादिः ॥

*तै. ब्रा. ३-५-२. †तै. ब्रा. ३-६-१. ‡तै. सं. ४-४-४.

दशानु ब्रूयाद्वैश्यस्य सप्तदशो वै वै-
श्यस्स्व एवैनꣳ स्तोमे प्रतिष्ठापयति
जगत्या परि दध्याज्जागता वै पश-
वः पशुकामः खलु वै वैश्यो यजते
जगत्यैवास्मै पशून्परि गृह्णात्येक-
विꣳशतिमनु ब्रूयात्प्रतिष्ठाकामस्यै-
कविꣳशस्स्तोमानां प्रतिष्ठा प्रति-

दश । अन्विति । ब्रूयात् । वैश्यस्य । सप्तदश इति सप्त–दशः । वै । वैश्यः । स्वे । एव । एनम् । स्तोमे । प्रतीति । स्थापयति । जगत्या । परीति । दध्यात् । जागताः । वै । पशवः । पशुकाम इति पशु–कामः । खलु । वै । वैश्यः । यजते । जगत्या । एव । अस्मै । पशून् । परीति । गृह्णाति । [6]एकविꣳशतिमित्येक–विꣳशतिम् । अन्विति । ब्रूयात् । प्रतिष्ठाकामस्येति प्रतिष्ठा–कामस्य । एकविꣳश इत्येक–विꣳशः । स्तोमानाम् । प्रति-ष्ठेति प्रति–स्था । प्रतिष्ठित्या इति प्रति–स्थित्यै ।

[6]एकविंशतिमिति ॥ पञ्चदशत्वान्वयात्प्रथमोत्तमावृत्तिवत् एतासामेवावृत्त्या एकविंशत्याद्यभिमतसङ्ख्यापूरणमिति केचित् । 'युक्ष्वा

ष्ठित्यै ॥ ५८ ॥ चतुर्विंशतिमनुब्रूयाद्ब्रह्मवर्चसकामस्य चतुर्विंशत्यक्षरा गायत्री गायत्री ब्रह्मवर्चसं गायत्रियैवास्मै ब्रह्मवर्चसमवं रुन्धे त्रिंशतमनुं ब्रूयादन्नंकामस्य त्रिंशदक्ष-

॥ ५८ ॥ [7]चतुर्विंशतिमिति चतुः-विंशतिम् । अन्विति । ब्रूयात् । ब्रह्मवर्चसकामस्येति ब्रह्मवर्चस-कामस्य । चतुर्विंशत्यक्षरेति चतुर्विंशति-अक्षरा । गायत्री । गायत्री । ब्रह्मवर्चसमिति ब्रह्म-वर्चसम् । गायत्रिया । एव । अस्मै । ब्रह्मवर्चसमिति ब्रह्म-वर्चसम् । अवेति । रुन्धे । [8]त्रिंशतम् । अन्विति । ब्रूयात् । अन्नकामस्येत्यन्न-कामस्य । त्रिंशदक्षरेति त्रिंशत्-अक्षरा ।

हि'* इत्यादिनवसामिधेनीति केचित् । स्तोमानां प्रतिष्ठेति । त्रिवृत्पञ्चदशसप्तदशानां प्रधानस्तोमानां, तत्र अनुगतत्वात् ॥

[7]चतुर्विंशतिमित्यादि ॥ गतम् ॥

[8]त्रिंशदक्षरा विराडिति ॥ त्रिभिः दशकैः विराडिति ॥

*तै. सं. २-६-११.[1]

रा विराडन्नं विराड्विराजैवास्मा अन्ना-
द्यमव रुन्धे द्वात्रिंꣳशतमनु ब्रूया-
त्प्रतिष्ठाकामस्य द्वात्रिंꣳशदक्षराऽनु-
ष्टुगनुष्टुप्छन्दसां प्रतिष्ठा प्रतिष्ठित्यै
षट्त्रिंꣳशतमनु ब्रूयात्पशुकामस्य

विराडिति वि–राट् । अन्नम् । विराडिति वि–राट् । विराजेति वि–राजा । एव । अस्मै । अन्नाद्यमित्यन्न–अद्यम् । अवेति । रुन्धे । [9]द्वात्रिंꣳशतम् । अन्विति । ब्रूयात् । प्रतिष्ठाकामस्येति प्रतिष्ठा–कामस्य । द्वात्रिंꣳशदक्षरेति द्वात्रिंꣳशत्–अक्षरा । अनुष्टुगित्यनु–स्तुक् । अनुष्टुबित्यनु–स्तुप् । छन्दसाम् । प्रतिष्ठेति प्रति–स्था । प्रतिष्ठित्या इति प्रति–स्थित्यै । [10]षट्त्रिंꣳशतमिति षट्–त्रिंꣳशतम् । अन्विति । ब्रूयात् । पशुकामस्येति पशु–कामस्य । षट्त्रिंꣳशदक्षरेति षट्त्रिंꣳशत्–अक्षरा ।

[9]छन्दसां प्रतिष्ठेति ॥ 'वाग्वा अनुष्टुप्'* इति. तस्याः सर्ववाङ्मयत्वात् ॥

[10]बृहतीशब्दोप्युत्सादिः । बृहत्याः पशव्यत्वात् बार्हतत्वं पशूनाम् ॥

*तै. सं. ५-१-३.

षट्त्रिꣳशदक्षरा बृहती बार्हताः पशवो बृहत्यैवास्मै पशून् ॥ ५१ ॥ अव रुन्धे चतुश्चत्वारिꣳशतमनु ब्रूयादिन्द्रियकामस्य चतुश्चत्वारिꣳशदक्षरा त्रिष्टुगिन्द्रियं त्रिष्टुप्त्रिष्टुभैवास्मा इन्द्रियमव रुन्धेऽष्टाचत्वारिꣳशतमनु ब्रूयात्पशुकामस्याष्टाचत्वारिꣳशदक्षरा जगती जागताः

बृहती । बार्हताः । पशवः । बृहत्या । एव । अस्मै । पशून् ॥ ५१ ॥ अवेति । रुन्धे । [11]चतुश्चत्वारिꣳशतमिति चतुः–चत्वारिꣳशतम् । अन्विति । ब्रूयात् । इन्द्रियकामस्येतीन्द्रिय–कामस्य । चतुश्चत्वारिꣳशदक्षरेति चतुश्चत्वारिꣳशत्–अक्षरा । त्रिष्टुक् । इन्द्रियम् । त्रिष्टुप् । त्रिष्टुभा । एव । अस्मै । इन्द्रियम् । अवेति । रुन्धे । [12]अष्टाचत्वारिꣳशतमित्यष्टा–चत्वारिꣳशतम् । अन्विति । ब्रूयात् । पशुकामस्येति पशु–कामस्य । अष्टाचत्वारिꣳशदक्ष-

[11]इन्द्रियं त्रिष्टुबिति ॥ इन्द्रियत्रिष्टुभोस्समानप्रभवत्वात् ॥

[12]जगत्या इति ॥ जगत्याः पशव्यत्वात् ॥

पशवो जगत्यैवास्मै पशूनव रुन्धे सर्वाणि छन्दाꣳस्यनु ब्रूयाद्बहुयाजिनस्सर्वाणि वा एतस्य छन्दाꣳस्यवरुद्धानि यो बहुयाज्यपरिमितमनु ब्रूयादपरिमितस्यावरुध्यै॥६०॥

रेत्यष्टाचत्वारिꣳशत्–अक्षरा । जगती । जागताः। पशवः। जगत्या । एव । अस्मै । पशून् । अवेति । रुन्धे । [13]सर्वाणि। छन्दाꣳसि । अन्विति । ब्रूयात् । बहुयाजिन इति बहु–याजिनः । सर्वाणि । वै । एतस्य । छन्दाꣳसि । अवरुद्धानीत्यव–रुद्धानि । यः । बहुयाजीति बहु–याजी । अपरिमितमित्यपरि–मितम् । अन्विति । ब्रूयात् । अपरिमितस्येत्यपरि–मितस्य । अवरुध्या इत्यव–रुद्ध्यै ॥६०॥

कामयेत प्रतिष्ठित्यै पशून्त्सप्तचत्वारिꣳशच्च ॥१०॥

[13]बहुयाजिन इति ॥ सोमयाजी बहुयाजी, तस्य सर्वाणि गायत्र्यादीनि जगत्यन्तानि छन्दांस्यवरुद्धानि । अपरिमितमिति । नवाद्यष्टाचत्वारिंशदन्तोक्तसङ्ख्यापरिच्छेदरहितं अपरिच्छिन्नस्य फलस्याप्त्यै भवति॥

इति द्वितीये पञ्चमे दशमोऽनुवाकः ॥

निवी॑तं मनु॒ष्या॑णां प्राचीनावी॒तं पि॒तॄणामु॒प॑वीतं दे॒वाना॒मुप॑ व्ययते देवल॒क्ष्मम॒व तत्कु॑रु॒ते॒ तिष्ठ॒न्नन्वा॑ह॒

[1]निवी॑त॒मिति॒ नि—वी॒त॒म् । म॒नु॒ष्या॑णाम् । प्रा॒ची॒ना॒वी॒त॒मिति॑ प्राचीन—आ॒वी॒तम् । पि॒तॄणाम् । उप॑वीत॒मित्यु॒प॑—वी॒त॒म् । दे॒वाना॑म् । उपेति॑ । व्य॒य॒ते॒ । दे॒व॒ल॒क्ष्ममिति॑ देव—ल॒क्ष्मम् । ए॒व । तत् । कु॒रु॒ते॒ । [2]तिष्ठ॑न् । अन्विति॑ । आ॒ह॒ । तिष्ठ॑न् । हि ।

[1]निवीतमित्यादि ॥ स्वाध्यायविधावुपवीतादीनां लक्षणं भविष्यति । अत्र तु तत एव प्राप्तत्वादर्थवादः । उक्तश्च 'निवीतमिति मनुष्यधर्मः शब्दस्य तत्प्रधानत्वात्'* इत्यत्र । उभावपि बाहू न्यग्भूतौ वीयेते तन्निवीतं मनुष्याणां स्वं मनुष्यकार्येषु प्रशस्तम् । प्राचीनो दक्षिणो बाहुरावीयते अधस्तात् क्रियते यत्र तत् प्राचीनावीतं पितृकर्मणि प्रशस्तम् । यज्ञसाधनभूतो दक्षिणो बाहुरुपवीतं समन्ताच्छाद्यते यत्र तद्यज्ञोपवीतम् । यथोक्तं,—'दक्षिणं बाहुमुद्धरतेऽव धत्ते सव्यमिति'† इति । तत्र 'सत्यभामा' 'भामा' इतिवत् पदैकदेशो लुप्यते । गतार्थत्वादप्रयोगो लोपः । एतद्देवकर्मणि प्रशस्तम् । तस्माद्धोता सामिधेनीरनुब्रुवन् उपव्ययते उपवीतं करोति । देवानामेव तेन लक्षणं कृतं भवति । 'अनसन्तान्नपुंसकात्' इत्यच्समासान्तः ॥

[2]तिष्ठन्नित्यादि ॥ लोके हि योऽतिशयेन आश्रोतुं भवति प्रति-

* मी-सू. ३-४-१. † तै. आ. २-१.

तिष्ठन् ह्याश्रुततरं वदति तिष्ठन्नन्वाह सुवर्गस्य लोकस्याभिजित्या आसीनो यजत्यस्मिन्नेव लोके प्रति तिष्ठति यत्क्रौञ्चमन्वाहासुरं तद्यन्मन्द्रं मानुषं तद्यदन्तरा तत्सदेव-

आश्रुततरमित्याश्रुत-तरम् । वदति । तिष्ठन् । अन्विति । आह । सुवर्गस्येति सुवः-गस्य । लोकस्य । अभिजित्या इत्यभि-जित्यै । आसीनः । यजति । अस्मिन् । एव । लोके । प्रतीति । तिष्ठति । [3]यत् । क्रौञ्चम् । अन्वाहेत्यनु-आह । आसुरम् । तत् । यत् । मन्द्रम् । मानुषम् । तत् । यत् । अन्तरा । तत् । सदेवमिति स-देवम् ।

श्रुतमिच्छति स तिष्ठन् वदन् दृश्यते । तस्मात्तिष्ठन्ननुब्रूयात् किञ्च—सुवर्गस्य लोकस्याभिजयाय भवति, प्रत्यासत्त्या, आभिमुख्याद्वा । आसित्वा यागे अस्मिन् लोके प्रतिष्ठित्यै भवति, एतल्लोकप्रत्यासत्त्या अविचलत्वाच्च ॥

[3]क्रौञ्चम् ॥ क्रौञ्चमिव स्वरः शुष्कः *मन्द्रः गभीरः तद्द्वयोरन्तरा मध्यमस्वरोऽभिधीयते । सदेवं देवसहितं तस्मान्मन्द्रक्रौञ्चयोरन्तरा मध्ये अनूच्यं मध्यस्थेन स्वरेणानुब्रुयात् । छान्दसः क्यच् ॥

* घ—...मिव स्वमन्द्रो.

मन्तराऽनूच्यꣳ सदेवत्वाय विद्वाꣳ-
सो वै ॥ ६१ ॥ पुरा होतारोऽभूव-
न्तस्माद्विधृता अध्वानोऽभूवन्न प-
न्थानस्समरुक्षन्नन्तर्वेद्यन्यः पादो
भवति बहिर्वेद्यन्योथान्वाहाध्वनां
विधृत्यै पथामसꣳरोहायाथो भूतं

अन्तरा । अनूच्यमित्यनु–उच्यम् । सदेवत्वायेति सदेव–त्वाय । [4]विद्वाꣳसः । वै ॥ ६१ ॥ पुरा । होतारः । अभूवन् । तस्मात् । विधृता इति वि–धृताः । अध्वानः । अभूवन् । न । पन्थानः । समिति । अरुक्षन् । अन्तर्वेदीत्यन्तः–वेदि । अन्यः । पादः । भवति । बहिर्वेदीति बहिः–वेदि । अन्यः । अथ । अन्विति । आह । अध्वनाम् । विधृत्या–इति वि–धृत्यै । पथाम् । असꣳरोहायेत्यसं–रोहाय ।

---

[4]विद्वांस इत्यादि ॥ पूर्वं विद्वांसः अध्वरज्ञा होतारोऽभूवन् । समरुक्षन् अन्योन्यं समारूढा नाभूवन् । 'शल इगुपधादनिटः क्सः' । तत्कथमिदानीं तैर्होत्रादिभिः कर्तव्यमित्याह—अन्तर्वेदीत्यादि । अन्तर्वेदि दक्षिणतः पादोऽवस्थाप्यः, इतरो बहिर्वेदि नातिदूरेऽवस्थाप्यः । अथानन्तरमेवमवस्थापितपादद्वयोऽनुब्रूयात् ; अध्वनामसङ्कीर्णत्वाय असंरोहाय च भवति । अन्यः पन्थाः अन्यस्मिन् समारूढो न भवति । मार्गमोहश्च न भवतीत्यर्थः ॥

चैव भविष्यच्चाव रुन्धेऽथो परिमितं
चैवापरिमितं चाव रुन्धेऽथो ग्राम्या-
ꣳश्चैव पशूनारण्याꣳश्चाव रुन्धेऽथो
॥ ६२ ॥ देवलोकं चैव मनुष्यलोकं
चाभि जयति देवा वै सामिधेनी-

[5]अथो इति । भूतम् । च । एव । भविष्यत् । च । अवेति । रुन्धे । अथो इति । परिमितमिति परि-मितम् । च । एव । अपरिमितमित्यपरि-मितम् । च । अवेति । रुन्धे । अथो इति । ग्राम्यान् । च । एव । पशून् । आरण्यान् । च । अवेति । रुन्धे । अथो इति ॥ ६२ ॥ देवलोकमिति देव-लोकम् । च । एव । मनुष्यलोकमिति मनुष्य-लोकम् । च । अभीति । जयति । [6]देवाः । वै । सामिधेनीरिति सां-इधेनीः । अनू-

---

[5]अथो इत्यादि ॥ अन्तर्वेदि भूतं इष्टसाधनत्वेन परिनिष्पन्नत्वात्, बहिर्वेदि भविष्यत् अतथाभावात् । अन्तर्वेदि परिमितं इतरदपरिमितम् । अन्तर्वेदि ग्राम्याः पशवो यज्ञसाधनत्वात् । बहिरारण्याः विपर्ययत्वात् । अत्र गोश्वाजाविपुरुषगर्दभोष्ट्रा ग्राम्याः पशवः । द्विखुरश्वापदपक्षिसरीसृपहस्तिमर्कटनादेया आरण्याः । अन्तर्वेदि देवलोकः । बहिर्वेदि अन्यः ॥

[6]देवा वै सामिधेनीरनूच्येत्यादि ॥ समाप्तं हौत्रम् । अतःपरं दार्श-

रनूच्यं यज्ञं नान्वंपश्यंथ्स प्रजापं-
तिस्तूष्णीमांघारमाघांरयत्ततों वै दे-
वा यज्ञमन्वंपश्यन्यत्तूष्णीमांघार-
मांघारयंति यज्ञस्यानुंख्यात्या अ-
थों. सामिधेनीरेवाभ्यंनक्त्यलूंक्षो भ-

च्येत्यंनु–उच्यं । यज्ञम् । न । अन्विति । अपश्यन्न् । सः । प्रजापंतिरिति प्रजा–पतिः । तूष्णीम् । आघारमित्यां–घारम् । एति । अघारयत् । ततः । वै । देवाः । यज्ञम् । अन्विति । अपश्यन्न् । यत् । तूष्णीम् । आघारमित्यां–घारम् । आघारयतीत्यां–घारयंति । यज्ञस्यं । अनुंख्यात्या इत्यनु–ख्यात्यै । [7]अथो इति । सामिधेनीरिति सां–इधेनीः । एव । अभीति । अनक्ति । अलूक्षः । भवति । यः । एवम् ।

पौर्णमासिकमाधुर्यवं प्राजापत्यमेव काण्डम् । सामिधेन्यनुवचनानन्तरं यज्ञप्रयोगं देवा नान्वपश्यन् अनन्तरं कर्तव्यं नाजानन् । स इत्यादि । प्रजापतिरुत्तरं परिधिसन्धि अन्ववहृत्य दक्षिणाप्राञ्चमाघारं तूष्णीमाघारयत् आज्यमक्षारयत् । यज्ञस्यानुक्रमेण ख्यात्यै भवति ॥

[7]अथो इत्यादि ॥ सामिधेनीभिर्हुतानां समिधामियमभ्याक्तिः क्रियते अञ्जनस्थानीयत्वात् । यथोक्तम्—'अभ्यञ्जनं वाव स्त्रिया अन्नम्'* इति । एवं विद्वानलूक्षो भवति । लूक्षो दुर्गतः । लुब्ध इत्येके ।

*तै. ब्रा. २-५-१?

वति य एवं वेदाथो तर्पयंत्येवैना-
स्तृप्यंति प्रजया पशुभिः ॥ ६३ ॥
य एवं वेद यदेकयाऽऽघारयेदेकां
प्रीणीयाद्यद्द्वाभ्यां द्वे प्रीणीयाद्यत्ति-
सृभिरति तद्रेचयेन्मनसाऽऽघारयति

वेद । अथो इति । तर्पयंति । एव । एनाः । तृप्यंति । प्रजयेति प्र-जया । पशुभिरिति पशु-भिः ॥६३॥ यः । एवम् । वेद । [8]यत् । एकया । आघारयेदित्या-घारयेत् । एकाम् । प्रीणीयात् । यत् । द्वाभ्याम् । द्वे इति । प्रीणीयात् । यत् । तिसृभिरिति तिसृ-भिः । अतीति । तत् । रेचयेत् । मनसा । एति । घारयति । मनसा । हि । अनाप्तम् । आप्यते ।

---

अभ्यञ्जनादिसमृद्धो भवति । तर्पयत्येवेति । अग्नौ प्रक्षेपं विस्मृत्य यथातृप्ता एव भवन्ति तथा करोत्यनेन ॥

[8]यदेकयेत्यादि ॥ यद्येकया वाचा मन्त्रात्मिकया आघारयेत् एकामेव सामिधेनीं प्रीणीयात् । द्वाभ्यां द्वे । यदिति। तिसृभिस्तदतिरेचयेत्। आघारमात्रं तिसृभिः क्रियते इत्यतिरेकोयम् । तस्माद्गत्यभावात् मनसा तूष्णीं आघारयति । एवं ह्यनाप्तं आप्तुमयोग्यं ह्याप्तं भवति ॥

मन॑सा ह्यना॑प्तमा॒प्यते॑ । ति॒र्यश्च॑मा
घा॑रय॒त्यछ॑म्बट्का॒र॒ं वाक्च॒ मन॑श्चार्ती-
येताम॒हं दे॒वेभ्यो॑ ह॒व्यं व॑हामी॒ति
वाग॑ब्रवीद॒हं दे॒वेभ्य॒ इति॒ मन॒स्तौ
प्र॒जाप॑तिं प्र॒श्नमै॑ता॒ँ सो॑ऽब्रवीत् ॥

[9]ति॒र्यञ्च॑म् । एति॑ । घा॒र॒य॒ति॒ । अछ॑म्बट्का॒र॒मित्यछ॑-म्बट्—का॒र॒म् । [10]वाक् । च॒ । मन॑ः । च॒ । आ॒र्ती॒ये॒-ता॒म् । अ॒हम् । दे॒वेभ्य॑ः । ह॒व्यम् । व॒हा॒मि॒ । इति॑ । वाक् । अ॒ब्र॒वी॒त् । अ॒हम् । दे॒वेभ्य॑ः । इति॑ । मन॑ः । तौ । प्र॒जाप॑ति॒मिति॑ प्र॒जा—प॒ति॒म् । प्र॒श्नम् । ऐ॒ता॒म् । [11]सः । अ॒ब्र॒वी॒त् ॥ ६४ ॥ प्र॒जाप॑ति॒रिति॑ प्र॒जा—

---

[9]तिर्यञ्चमिति ॥ सर्वगतिको दण्डवत् धारकत्वात् तिरश्चीन आघारोऽग्नेरनार्तत्वाय भवति ॥

[10]वाक्चेत्यादि ॥ ऋतिस्सौत्रो धातुः घृणायां वर्तते । तस्माल्लुङ्, 'ऋतेरीयङ्' 'आडजादीनाम्' । वाक्च मनश्च देवेषु आर्तीयेतां आदरातिशयमकुरुताम् । अहमेव देवेभ्यो हव्यं वहानीति वागब्रवीत् । मनश्चाहमेव वहानीत्यब्रवीत् । अथ तौ तथा श्रद्धातिशयेन विप्रतिपद्यमानौ वाङ्मनसाख्यौ पदार्थौ पुत्रौ वा प्रजापतेः । लिङ्गव्यत्ययेन वा 'नपुंसकमनपुंसकेन' इति बाध्यते । प्रजापतिं प्रश्नमैतां प्रष्टव्यत्वेनागच्छताम् ॥

[11]सोऽब्रवीदित्यादि ॥ 'सुपां सुलुक्' इति हल्ङ्यादिलोपापवादः

६ ४॥ प्रजापतिर्दूतीरेव त्वं मनसोसि
यद्धि मनसा ध्यायति तद्वाचा वद-
तीति तत्खलु तुभ्यं न वाचा जुह-
वन्नित्यब्रवीत्तस्मान्मनसा प्रजापतये
जुह्वति मन इव हि प्रजापतिः प्र-

पतिः । दूतीः । एव । त्वम् । मनसः । असि ।
यत् । हि । मनसा । ध्यायति । तत् । वाचा । व-
दति । इति । तत् । खलु । तुभ्यम् । न । वाचा ।
जुहवन् । इति । अब्रवीत् । तस्मात् । मनसा ।
प्रजापतय इति प्रजा–पतये । जुह्वति । मनः ।
इव । हि । प्रजापतिरिति प्रजा–पतिः । प्रजाप-

स्वादेशः । वाचमब्रवीत् प्रजापतिः—मनस्याध्यातस्य बहिःख्यापयि-
त्रीति दूतस्थानीयैव त्वमसि । तस्मान्मन एव हविर्वोढुमर्हतीति ।
अथ वाक् प्रजापतिमब्रवीत्—तर्हि केचिदपि तुभ्यं न वाचा मन्त्रेण
जुहुवन्न जुहुयुः । तस्माद्वाचश्शापात्प्रजापतये मनसैव जुह्वतीति ।
लेटि तस्यार्धधातुकत्वेन ङित्वाभावाद्गुणः, अन्त्यादेशश्च, द्विविकरण-
त्वेन शबपि* मध्येऽवतिष्ठते । मन इव हीति । व्यापकत्वेन
प्रजापतितुल्यत्वेन मनसा होमः प्रजापतेराप्त्यै भवति ॥

*क.—शबिव.

जापतेराप्त्यै परिधीꣳस्सं मार्ष्टि पुना-
त्येवैनान्त्रिर्मध्यमं त्रयो वै प्राणाः
प्राणानेवाभि जयति त्रिर्दक्षिणार्ध्यं
त्रयः ॥ ६५ ॥ इमे लोका इमानेव
लोकानभि जयति त्रिरुत्तरार्ध्यं त्रयो
वै देवयानाः पन्थानस्तानेवाभि ज-

तेरिति प्रजा–पतेः । आप्त्यै । [12]परिधीनिति परि–धीन् । समिति । मार्ष्टि । पुनाति । एव । एना-न् । त्रिः । मध्यमम् । त्रयः । वै । प्राणा इति प्र–अनाः । प्राणानिति प्र–अनान् । एव । अभी-ति । जयति । त्रिः । दक्षिणार्ध्यमिति दक्षिण–अर्ध्यम् । त्रयः ॥६५॥ इमे । लोकाः । इमान् । एव । लोकान् । अभीति । जयति । त्रिः । उत्त-रार्ध्यमित्युत्तर–अर्ध्यम् । त्रयः । वै । देवयाना इ-ति देव–यानाः । पन्थानः । तान् । एव । अभीति ।

---

[12]परिधीनित्यादि ॥ गतम् । मध्यमादीनां प्राणादिजयहेतुत्वं यथा-कथञ्चिदुत्प्रेक्ष्यम् । केचिदाहुः—देहमध्यस्थप्राणादिस्थानीया मध्यमा । दक्षिणभूगोळस्य प्रकाशत्वेन लोकत्वात् दक्षिणा लोकस्थानीया । उत्तरगोळस्याप्रकाशत्वात् देवपथतुल्या उत्तरा इति । 'दिक्पूर्वपदा-ड्ढ्य' इति अर्धान्ताद्यत्प्रत्ययः ॥

यति त्रिरुप वाजयति त्रयो वै देव-
लोका देवलोकानेवाभि जयति
द्वादश सं पद्यन्ते द्वादश मासास्सं-
वत्सरस्संवत्सरमेव प्रीणात्यथो सं-
वत्सरमेवास्मा उप दधाति सुवर्ग-
स्य लोकस्य समष्ट्या आघारमा

जयति । [13]त्रिः । उपेति । वाजयति । त्रयः । वै । देवलोका इति देव—लोकाः । देवलोकानिति देव—लोकान् । एव । अभीति । जयति । द्वादश । स-मिति । पद्यन्ते । द्वादश । मासाः । संवत्सर इति सं—वत्सरः । संवत्सरमिति सं—वत्सरम् । एव । प्रीणाति । अथो इति । संवत्सरमिति सं—वत्स-रम् । एव । अस्मै । उपेति । दधाति । सुवर्गस्येति सुवः—गस्य । लोकस्य । समष्ट्या इति सं—अष्ट्यै । [14]आघारमित्या—घारम् । एति । घारयति । तिरः ।

---

[13]त्रिरुप वाजयतीति ॥ अग्निं त्रिर्विधूनयति । देवलोकस्थानीय-स्याग्नेः उपवाजनेन लोकत्रयावाप्तिः । सत्यलोकान्तास्त्रयो देवलोकाः । वातेर्णिजन्तस्य 'वोविधूनने जुक्' इति जुगागमः । द्वादशत्वान्वयात् द्वादशमासात्मकः संवत्सरोऽत्र संपादितो भवति । स च स्वर्गावाप्ति-हेतुरिति ॥

[14]आघारमित्यादि ॥ धारां; तिरश्चीनत्वेन तिरोभूतात्मानं स्वर्गमस्मै

धारयति तिर इव ॥ ६६ ॥ वै सुव-
र्गो लोकस्सुवर्गमेवास्मै लोकं प्र
रोचयत्यृजुमा धारयत्यृजुरिव हि
प्राणस्संततमा धारयति प्राणाना-
मन्नाद्यस्य संतत्या अथो रक्षसाम-
पहत्यै यं कामयेत प्रमायुकस्स्या-
दिति जिह्मं तस्या धारयेत्प्राणमे-

इव ॥ ६६ ॥ वै । सुवर्ग इति सुवः—गः । लोकः। सुवर्गमिति सुवः—गम् । एव । अस्मै । लोकम् । प्रेति । रोचयति । ऋजुम् । एति । धारयति । ऋ-जुः । इव । हि । प्राण इति प्र—अनः । संततमि-ति सं—ततम् । एति । धारयति । प्राणानामिति प्र—अनानाम् । अन्नाद्यस्येत्यन्न—अद्यस्य । संतत्या इति सं—तत्यै । अथो इति । रक्षसाम् । अपहत्या इत्यप—हत्यै । [15]यम् । कामयेत । प्रमायुक इति प्र—मायुकः । स्यात् । इति । जिह्मम् । तस्य । एति । धारयेत् । प्राणमिति प्र—अनम् । एव । अस्मात् ।

---

प्ररोचयति दीपयति वा । ऋजुरिति । अकुटिलधारामाधारयति । प्राणानामन्नाद्यस्य अविछेदाय भवति । रक्षसामपहत्यै भवति ॥

[15]यमित्यादि ॥ गतम् । जिह्मं कुटिलम् ॥

वास्माज्जिह्मं नयति ताजक्प्र मीयते शिरो वा एतद्यज्ञस्य यदाघार आत्मा ध्रुवा ॥६ ७॥ आघारमाघार्य ध्रुवा॑ समनक्त्यात्मन्नेव यज्ञस्य शिरः प्रति दधात्यग्निर्देवानां दूत

जिह्मम् । नयति । ताजक् । प्रेति । मीयते । [16]शिरः । वै । एतत् । यज्ञस्य । यत् । आघार इत्या-घारः । आत्मा । ध्रुवा ॥६ ७॥ आघारमित्या-घारम् । आघार्येत्या-घार्य । ध्रुवाम् । समिति । अनक्ति । आत्मन्न् । एव । यज्ञस्य । शिरः । प्रतीति । दधाति । [17]अग्निः । देवानाम् । दूतः । आसीत् ।

---

[16]शिरो वा इत्यादि ॥ आघारशेषेण ध्रुवादिसमञ्जनादात्मनि यज्ञस्य शिरः प्रतिहितं भवति ॥

[17]अग्निर्देवानामित्यादि ॥ अध्वर्युप्रवरविधिः । दैव्य इति वक्ष्यमाणत्वान्मानुषोऽग्निर्गृह्यते । स च ब्राह्मण एषः देवानां यागे हविषो वोढाऽऽसीत्; दैव्योऽग्निरसुराणामासीत् । 'देवाद्यञ्जौ' इति यञ् । तौ प्रजापतिं प्रश्नमैतां प्रष्टव्यत्वेनागच्छतां कतरो नो हविषा यष्टुमर्हतीति । अथ स प्रजापतिः ब्राह्मणं मानुषमग्निं दूत्ये स्थापयितुकामोऽब्रवीत्—आश्रावयेति । यदिदमध्वर्युणा त्वां प्रत्युच्यते एतद्विब्रूहि आचक्ष्वेति । सोऽपीदं देवाः शृणुतेति । देवेभ्य आवेदनार्थं वावेति तदब्रवीत् । ततः 'अग्निर्देवो होता' इत्यादिना वाक्येन य एव दूतो

आसीद्दैव्योसुराणां तौ प्रजापतिं प्र-
श्नमैताꣳ स प्रजापतिर्ब्राह्मणमब्रवी-
देतद्वि ब्रूहीत्या श्रावयेतीदं देवाश्शृ-
णुतेति वाव तदब्रवीदग्निर्दैवो होतेति
य एव देवानां तमवृणीत ततो देवाः
॥६८॥ अभवन्पराऽसुरा यस्यैवं वि-

दैव्यः । असुराणाम् । तौ । प्रजापतिमिति प्रजा-पतिम् । प्रश्नम् । ऐताम् । सः । प्रजापतिरिति प्रजा-पतिः । ब्राह्मणम् । अब्रवीत् । एतत् । वीति । ब्रूहि । इति । एति । श्रावय । इति । इदम् । देवाः । शृणुत । इति । वाव । तत् । अब्रवीत् । अग्निः । दैवः । होता । इति । यः । एव । देवानाम् । तम् । अवृणीत । [18]ततः । देवाः ॥ ६८ ॥ अभवन् । परेति । असुराः । यस्य । एवम् । वि-

ब्राह्मणात्माऽग्निः तमेवावृणीत—अयमग्निर्दैवो होता ब्राह्मणात्मा देवान् यष्टुमर्हति विद्वान् आश्रावणादितत्त्वज्ञः । चिकित्वा महाज्ञानः—मनुरिव भारत इव जमदग्निरिवोर्व इवाप्नुवान इव च्यवन इव भृगुरिवेति । एवमिति । ऊर्ध्वानृषीन्प्रवृणानो होतारं वृणीते ॥

[18]ततो देवा इत्यादि ॥ गतम्* ॥

*तै. सं. १-७-३[5].

दुर्षः प्रवरं प्रवृणते भवत्यात्मना प-
राऽस्य भ्रातृव्यो भवति यद्ब्राह्मणश्चा-
ब्राह्मणश्च प्रश्नमेयातां ब्राह्मणायाधि
ब्रूयाद्यद्ब्राह्मणायाध्याहात्मने ऽध्याह
यद्ब्राह्मणं पराऽऽहात्मानं पराऽऽह
तस्माद्ब्राह्मणो न परोच्यः ॥ ६१ ॥

दुर्षः । प्रवरमिति प्र—वरम् । प्रवृणत इति प्र—वृणते ।
भवति । आत्मना । परेति । अस्य । भ्रातृव्यः । भवति ।
[19]यत् । ब्राह्मणः । च । अब्राह्मणः । च । प्रश्नम् । एया-
तामित्या—इयाताम् । ब्राह्मणाय । अधीति । ब्रूयात् ।
यत् । ब्राह्मणाय । अध्याहेत्यधि—आह । आत्मने ।
अधीति । आह । यत् । ब्राह्मणम् । पराहेति परा—
आह । आत्मानम् । परेति । आह । तस्मात् ।
ब्राह्मणः । न । परोच्य इति परा—उच्यः ॥६१॥

वा आरण्याꣳश्चाव रुन्धेऽथो पशुभिस्सोऽब्रवीद्दक्षि-
णाद्धर्यं त्रयं इव ध्रुवा देवाश्चत्वारिꣳशच्च ॥ ११ ॥

[19]यद्ब्राह्मणश्चेत्यादि॥ ब्राह्मणाब्राह्मणयोः प्रश्नार्थमागतयोः ब्राह्मणा-
याधिकं पक्षपातेन ब्रूयात्। गतमन्यत्। अनादरेण वचनं परोच्य इति। छान्दसः
क्यच् ॥

इति द्वितीये पञ्चमे एकादशोऽनुवाकः

आयुष्ट आयुर्दा अग्न आ प्यायस्व

[1]आयुः । ते । [2]आयुर्दा इत्यायुः—दाः । अग्ने । [3]एति ।

---

[1]अथ पौरोडाशिकमध्ये याज्याकाण्डं वैश्वदेवम् । 'अग्निं वा एतस्य शरीरं गच्छति'* इत्यादेः पञ्चहविषो यागस्याग्नेयस्य पुरोऽनुवाक्या 'आयुष्टे विश्वतो दधत्' इत्यनुष्टुप् ॥ इतःप्रभृति चतुर्दशानां मन्त्राणां प्रतीकग्रहणम् । इयं 'त्वमग्ने रुद्रः'† इत्यत्र व्याख्याता । अयं वरेण्यः अग्निस्ते तुभ्यं विश्वमायुर्दधातु । गतोऽपि प्राणः पुनस्त्वामागच्छतु । त्वयि यक्ष्मरोगं परासुवामि नाशयामीति ॥

[2]तत्रैव याज्या—आयुर्दा अग्ने हविष इति त्रिष्टुप् ॥ इयमपि तत्रैव व्याख्याता† । हे अग्ने अन्नस्य हविषो जुषाणः सेवमानः घृतारम्भः घृतस्योदकस्य योनिः त्वमस्यायुर्दा भवेति । किञ्च—घृतं मधुरसं चारु गव्यं पीत्वा इमं यजमानं पिता पुत्रमिवाभिरक्षत्विति ॥

[3]अथ सौम्यस्य पुरोऽनुवाक्या—आ प्यायस्व समेतु त इति गायत्री ॥ इयञ्चाग्निकाण्डे 'मा नो हिंसीत्'‡ इत्यत्र व्याख्यास्यते यत्राम्नायते । हे सोम आप्यायस्व वर्धस्व त्वत्प्रसादात् विश्वतः वृष्ण्यं शुक्लं समेतु समागच्छतु । भव च वाजस्यान्नस्य सङ्गथे सङ्गमनायैवेति ॥

---

*तै. सं. २-३-११.[1] †तै. सं १-३-१४.[11-12] ‡तै. सं. ४-२-७.

सं तेऽवं ते हेड उदुत्तमं प्रणो

प्यायस्व । [4]समिति । ते । [5]अवेति । ते । हेडः । [6]उदिति । उत्तममित्युत्-तमम् । [7]प्रेति । नः ।

---

[4]तत्रैव याज्या—सं ते पयांसीति त्रिष्टुप् ॥ इयमपि तत्रैवाम्नायते* । हे सोम अभिमातीनां पाप्मनामभिभवितुस्तव प्रसादात् पयांसि च वाजाश्च वृष्णियानि च संयन्तु इमं सङ्गच्छन्तु । त्वं चाप्यायमानः दिवि द्युलोके अस्यामृतत्वाय उत्तमानि श्रवांसि अन्नानि धिष्व स्थापयेति ॥

[5]अथ वारुणस्य पुरोनुवाक्या—अव ते हेड इति त्रिष्टुप् ॥ इयं 'वैश्वानरो नः'† इत्यत्र व्याख्याता । हे वरुण नमोभिः नमस्कारैरन्नैर्वा यज्ञैश्च हविर्भिश्च हविष्मद्भिर्वा यज्ञैः तव हेडः क्रोधं अवेमहे अवनयामः । हे असुर प्राणप्रद प्रकृष्टचेतस्क राजन् अस्मभ्यमस्मदर्थं क्षयन्निवसन् अस्माकं कृतानि पापानि शिश्रथः श्लथयेति ॥

[6]तत्रैव याज्या–उदुत्तममिति त्रिष्टुप् ॥ इयमपि तत्रैव व्याख्याता† । हे वरुण उत्तमं उत्तमफलप्राप्तिहेतुं ऊर्ध्वकर्षणं वा पाशं कर्मपाशं अस्मत्त उच्छ्रथाय ऊर्ध्वमुत्क्षिप्य उत्कृष्य नाशय । अधमं निकृष्टफलप्राप्तिहेतुं अधःपतनहेतुं वा कर्मपाशमवश्रथय अधस्तादपकृष्य नाशय । मध्यमं पाशं विश्रथय विष्वङ्नाना विकृष्य नाशय । अथैवं त्वया कृते वयमनागसः क्षालितसर्वकर्माणः तव व्रते कर्मणि उपासनात्मनि स्याम अदितये अखण्डितैश्वर्याय हे आदित्य देवानामादिभूत अदितेर्वा अपत्येति ॥

[7]अथ सारस्वतस्य पुरोनुवाक्या—प्रणो देवीति गायत्री ॥ 'अग्ना-

*तै. सं. ४-२-७. †तै. सं. १-५-११.[9—10]

देव्या नो दिवोऽग्नाविष्णू अ-
ग्नाविष्णू इमं मे वरुण तत्त्वा या-

देवी । [8]एति । नः । दिवः । [9]अग्नाविष्णू इत्यग्ना-
विष्णू । [10]अग्नाविष्णू इत्यग्ना–विष्णू । [11]इमम् । मे ।
वरुण । [12]तत् । त्वा । यामि । [13]उदिति । उ । त्यम् ।

---

विष्णू महि '* इत्यत्र व्याख्याता । सरस्वती देवी वाजवतीभिः क्रियाभिः तद्वती धियामवित्री अस्मान्वाजैरन्नैः प्रावत्विति । प्रकर्षेण रक्षत्विति ॥

[8]तत्रैव याज्या—आ नो दिव इति त्रिष्टुप् ॥ इयमपि तत्रैव व्याख्याता* । यजमानस्य वाजनीया देवी सरस्वती दिवः विप्रकृष्टाद्वा देशात् बृहतो वा पर्वतात् विषमाद्देशादागच्छतु. अस्माकमिमं यज्ञं अस्माकमाह्वानं सेवमाना घृताची घृताञ्चना उदकाञ्चना वा उशती कामयमाना अस्मत्स्तोत्रं हविर्वा शग्मां शक्तां वाचं शृणोत्विति ॥

[9]अथाग्नावैष्णवस्य याज्या—अग्नाविष्णू इति त्रिष्टुप् ॥ तत्रैव व्याख्याता† । हे अग्नाविष्णू युवयोस्तत् महित्वं माहात्म्यं महान्तौ युवां घृतस्य गुह्यानि नामानि पुरोडाशादीनि वीतं खादतम् । यज्ञगृहे शोभनानि स्तोत्राणि वर्धयन्ति । युवयोः जिह्वा प्रत्येकं घृतमुच्छ्रितं पिबति ॥

[10]तत्रैव याज्या—अग्नाविष्णू इति त्रिष्टुप् ॥ तत्रैव व्याख्याता* ॥

[11]'यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणान् चतुष्कपाला-

---

*तै. सं. १-८-२२[1—4]

म्युदु त्यं चित्रम् । अपां नपादा
ह्यस्थादुपस्थं जिह्मानामूर्ध्वो विद्युतं

[14]चित्रम् । [15]अपाम् । नपात् । एति । हि । अस्थात् ।
उपस्थमित्युप–स्थम् । जिह्मानाम् । ऊर्ध्वः । वि-
द्युतमिति वि–द्युतम् । वसानः । तस्य । ज्येष्ठम् ।

न्निर्वपेत्'* इत्यस्याः पुरोऽनुवाक्या—इमं मे वरुण श्रुधी हवम् इति गायत्री ॥ 'इन्द्रं वो विश्वतस्परीन्द्रं नरः' इत्यत्र व्याख्याता† । हे वरुण इमं मे हवं आह्वानं श्रुधि शृणु । अद्यास्मिन् कर्मणि मां मृडय त्वामहं अवस्युः रक्षणाय आचके आभिमुख्येन भजे ॥

[12]तत्रैव याज्या—तत्त्वा यामि ब्रह्मणा वन्दमान इति त्रिष्टुप् ॥ इयमपि तत्रैव व्याख्याता† । हे वरुण अहं ब्रह्मणा मन्त्रेण हविषा त्वां वन्दमानः स्तुवन् अहं त्वामभियाचे यजमानोऽपि तदेव हविर्भिराशास्ते त्वमपि तत्? अहेडमानः अक्रुध्यन् इह कर्मणि बुद्ध्यस्व । किंपुनः तत्? हे वरुण उरु शंसमानः अस्माकमायुर्मा प्रमोषीरिति ॥

[13]'यद्यपरं प्रतिग्राही स्यात् सौर्यमेककपालमनु निर्वपेत्'* इत्यस्याः पुरोनुवाक्या—उदु त्यं जातवेदसमिति गायत्री ॥ इयं ग्रहप्रश्ने व्याख्याता‡ । त्यं तं इमं जातवेदसं जातानां वेदितारं सूर्यं देवं केतवः रश्मयः उद्वहन्ति सर्वस्य लोकस्य दर्शनार्थमिति ॥

*तै. सं. २-३-१२[1,3] †तै. सं. २-१-११[20–21] ‡तै. सं. १-४-४३[1]

वसा॑नः । तस्य॒ ज्येष्ठं॑ महि॒मान॑ं व-
ह॑न्ती॒र् हिर॑ण्यवर्णाः॒ परि॑ यन्ति य॒-
ह्वीः । सम् ॥ ७० ॥ अ॒न्या यन्त्यु॒-
प॑ यन्त्य॒न्याः स॑मा॒नमू॒र्वं न॒द्यः॑ पृण-

म॒हि॒मान॑म् । वह॑न्तीः । हिर॑ण्यव॒र्णा इति॒ हिर॑ण्य-
व॒र्णाः । परीति॑ । य॒न्ति॒ । य॒ह्वीः । [16]समिति॑॥७०॥
अ॒न्याः । यन्ति॑ । उपेति॑ । य॒न्ति॒ । अ॒न्याः । स॒मा-
नम् । ऊ॒र्वम् । न॒द्यः॑ । पृ॒ण॒न्ति॒ । तम् । उ॒ । शु-

[14]तत्रैव याज्या—चित्रं देवानामिति त्रिष्टुप् ॥ इयमपि तत्रैव व्याख्याता* । देवानामनीकस्थानीयं मित्रादीनां चक्षुस्स्थानीयं उदेति । अयं जगतः तस्थुपश्च आत्मा । सूर्यः द्यावापृथिवी अन्तरिक्षं आपूरयति तेजसेति ॥

[15]'अपोनप्त्रीयं चरुं पुनरेत्य'† इत्यस्य पुरोनुवाक्या—अपां नपादिति त्रिष्टुप् ॥ अपां नपात् चतुर्थोऽग्निः उपस्थं अन्तरिक्षं मेघं वा अपामुपस्थानमास्थादातिष्ठति हि । 'हि च' इति निघाताभावः । जिह्मानां कुटिलगतीनां अपामूर्ध्वः उपरिवर्ती विद्युतं वसानः विद्युद्रूपेणात्मानं छादयन् तासामुपस्थमातिष्ठति । हि यदेवं तस्मात्ता आपस्तस्याग्नेरपां नपातो ज्येष्ठं प्रशस्तं महिमानं माहात्म्यं वहन्तीः वहन्त्यः ख्यापयन्त्यः अनेन हि मेघं भित्त्वा वयं प्रवर्तिता इति कृतज्ञतामिव दर्शयन्त्यः हिरण्यवर्णास्तेजोरूपा एव भासमानाः यह्वीः यह्वयः महत्यः तमग्निं परियन्ति परिगच्छन्ति परित इवासते ॥

[16]तत्रैव याज्या—समन्या यन्तीति त्रिष्टुप् ॥ अन्या आपः संयन्ति

*तै. सं. १-४-४३[2] †तै. सं. २-३-१२[4]

न्ति । तम् शुचिं शुचयो दीदिवाꣳसमपां नपातं परि तस्थुरापः । तमस्मेरा युवतयो युवानं मर्मृज्यमानाः परि यन्त्यापः । स शुक्रेण

चिम् । शुचयः । दीदिवाꣳसम् । अपाम् । नपातम् । परीति । तस्थुः । आपः । [17]तम् । अस्मेराः । युवतयः । युवानम् । मर्मृज्यमानाः । परीति । यन्ति । आपः । सः । शुक्रेण । शिक्वना । रेवत् ।

---

सङ्गच्छन्ते एकीभूताः प्रवहन्ति अन्या उपयन्ति परितस्सङ्गता इव त्वां मध्येन प्रवहन्ति । ततः सर्वा अपि समानं नद्यो भूत्वा और्वं और्वस्याग्नेराधारं महान्तं आपगाः पृणन्ति पूरयन्ति । पृण प्रीणने । अथ तं तत्रस्थं और्वं शुचिं शुद्धं दीदिवांसं मध्ये दीप्यमानम् । दीदितिर्दीप्तिकर्मा छान्दसः, क्वसौ 'वस्वेकाजाद्घसाम्' इति नियमादिडभावः । ईदृशं अपां नपातं शुचयः आपः परितस्सर्वतोप्युपतस्थुः तिष्ठन्ति । छान्दसो लिट् । 'एकान्याभ्यां समर्थाभ्याम्' इति प्रथमस्याम्रेडितस्याख्यातस्य निघाताभावः । उ अवधारणे, पादपूरणे वा । 'अन्येषामपि दृश्यते' इति सांहितिको दीर्घः ॥

[17]अथात्रैव याज्या विकल्प्यते—तमस्मेरा इति त्रिष्टुप् ॥ तमग्निमपां नपातं मर्मृज्यमानाः अत्यर्थमलङ्कुर्वाणाः । मृजू शौचालङ्कारयोः । अस्मेरा विदग्धा युवतयो युवानं युवराजमिव आपः

शिक्वना रेवदग्निर्दीदायानिध्मो घृत-
निर्णिगप्सु । इन्द्रावरुणयोरहꣳ स-
म्राजोरव आ वृणे । ता नो मृडा-

अग्निः । दीदाय । अनिध्मः । घृतनिर्णिगिति घृत-निर्णिक् । अप्स्वित्यप्-सु । [18]इन्द्रावरुणयोरितीन्द्रा-वरुणयोः । अहम् । सम्राजोरिति सं-राजोः । अवः । एति । वृणे । ता । नः । मृडातः । ईदृशे ।

परियन्ति परितस्सेवन्ते । यद्वा—नित्यतरुणमग्निं नित्यतरुण्यः आपः परियन्ति । स चाग्निस्तास्वप्सु मध्ये शुक्रेण निर्मलेन शिक्वना रोचिषा इत्थंभूतः रेवत् रेवान् महाधनः राजेव । छान्दसो लिङ्गव्यत्ययः । सलिलव्यतिरिक्तेन काष्ठादीन्धनरहितो दीदाय दीप्यते । छान्दसो लिट्, छान्दसो द्विर्वचनाभावः, दीधिङो वा वर्णव्यत्ययः । तेन जक्षित्यादिना अभ्यस्तत्वाद्विर्वचनाभावः । घृतनिर्णिक्, घृतेनोदकेन वा एषणीयः, घृतनिर्णेजनमस्येति बहुव्रीहिः । यद्वा तेजोरूपमानः । एवं महानुभावोयं अस्मान् प्रतिग्रहदोपापनयेन शोधयत्विति ॥

[18] 'यः पाप्मना गृहीतस्स्यात्तस्मा एतामैन्द्रावरुणीं पयस्यां निर्वपेत्'* इत्यस्याः पुरोनुवाक्या—इन्द्रावरुणयोरहमिति गायत्री ॥ इन्द्रावरुणयोस्सम्राजोः सम्यक् दीप्यमानयोः अवः रक्षणं यादृशं तदीयं रक्षणं तदहमावृणे आभिमुख्येन याचे । ता तौ च नः अस्मान् मृडातः सुखयेताम् । ईदृशे विशिष्टे रक्षणे स्थित्वा मृडयताम् । लेट्यागमः ॥

*तै. सं. २-३-१३[13]

त इंदृशे । इन्द्रावरुणा युवमध्व-
रार्य नः ॥७१॥ विशे जनाय महि
शर्म यच्छतम् । दीर्घप्रयज्युमति यो
वनुष्यति वयं जयेम पृतनासु दू-

[19]इन्द्रावरुणेतीन्द्रा–वरुणा । युवम् । अध्वराय । नः । ॥७१॥ विशे । जनाय । महि । शर्म । यच्छतम् । दीर्घप्रयज्युमिति दीर्घ–प्रयज्युम् । अतीति । यः । वनुष्यति । वयम् । जयेम । पृतनासु । दूढ्यः ।

[19]तत्रैव याज्या—इन्द्रावरुणा युवमिति जगती ॥ हे इन्द्रावरुणा इन्द्रावरुणौ । 'सुपां सुलुक्' इत्यादिनाऽऽकारः । युवं युवां नः अस्मभ्यं महि महत् शर्म सुखं पापयक्ष्माभावप्रभवं यच्छतं दत्तम् । अध्वराय यज्ञाय दर्शपूर्णमासादियज्ञनिर्वहणं यथा भवेत् विशे च यथा पुत्रादिका प्रजा मां न निवर्तते जनाय चान्यस्मै सुहृदादये स यथा मां न त्यजेत् । यदुक्तमध्वराद्यर्थमिति तदेव प्रकटीकरोति—दीर्घप्रयज्युः दीर्घकालं यावज्जीवं प्रकर्षेणानतिपत्त्या कर्तव्यो दर्शपूर्णमासादियज्ञो दीर्घप्रयज्युः । यजेः औणादिको युप्रत्ययः, दासीभारादिः द्रष्टव्यः । वचनव्यत्ययो वा । दीर्घकालकर्तव्या दर्शपूर्णमासादयः प्रकृष्टा यागा येषां तानस्मानतिक्रम्य यो वनुष्यति अभिभवति पापयक्ष्मा । वनेरुसिप्रत्ययान्तात्क्यचि षत्वम् । तं तावद्वयं जयेम न तेन वयं जीयेमहि । किंच—पृतनासु सङ्ग्रामेषु दूढ्यः दुर्धियश्च जयेमेत्येव । कैश्चिद्दुर्बुद्धिभिः न वयं जीयेमहि पृषोदरादित्वादभीष्टस्वररूपसिद्धिः ॥

ढ्यः । आ नो मित्रावरुणा प्र बा-
हवा । त्वं नो अग्ने वरुणस्य वि-
द्वान्देवस्य हेडोऽवं यासिसीष्ठाः ।

[20]एति । नः । मित्रावरुणेति मित्रा—वरुणा । [21]प्रेति । बाहवा । [22]त्वम् । नः । अग्ने । वरुणस्य । विद्वान् । देवस्य । हेडः । अवेति । यासिसीष्ठाः । यजिष्ठः ।

[20]'आ नो मित्रावरुणा' 'प्र बाहवा सिसृतं' इति द्वे गायत्रीत्रिष्टुभौ व्याख्याते ॥ 'अग्नाविष्णु महि'* इत्यत्र । अनयोश्चात्र प्रतीकग्रहणम् । तयोः क्वचित् मैत्रावरुणे विनियोगः द्रष्टव्यः । प्रायश्चित्ते वा । तत्र प्रथमा—हे मित्रावरुणौ अस्माकं गव्यूतिं घृतैरुक्षतम् । हे शोभनकर्माणौ मधुरसेन लोकानुक्षतमिति ॥

[21]द्वितीया—प्र बाहवेति ॥ बाहुबलवन्तौ युवां अस्मान् जीवयितुमागच्छतम् । आगत्य च अस्माकं गव्यूतिं घृतेन सर्वतः उक्षतम् । हे युवानौ नित्यततरुणौ अस्मान् जनेषु श्रवयतमाख्यापयतम् । इमानि च महाह्वानानि शृणुतमिति ॥

[22]अथ त्वं नो अग्ने स त्वं नो अग्ने इति गायत्रीत्रिष्टुभौ ॥ क्वचिदाग्निवारुणे विनियोगो द्रष्टव्यः । प्रायश्चित्ते वा । तत्र प्रथमा—हे अग्ने विद्वान् सर्वार्थसाधनो वा यज्ञे स त्वं देवस्य वरुणस्य हेडः क्रोधः अनादरो वा पाशग्रहणादिकः नः अस्माकं

*तै. सं. १-८-२२४—७

यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्र मुमुग्ध्यस्मत् । स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो

वह्नितम इति वह्नि-तमः । शोशुचानः । विश्वा । द्वेषांसि । प्रेति । मुमुग्धि । अस्मत् । [23]सः । त्वम् । नः । अग्ने । अवमः । भव । ऊती । नेदिष्ठः । अस्याः । उषसः । व्युष्टाविति वि-उष्टौ ।

अस्मत्संबन्धि अवयासिसीष्ठाः अपनय । अवपूर्वात् यासेर्ण्यन्तादाशीर्लिङि इडादावपि णिलोपश्छान्दसः । 'छन्दस्युभयथा' इति लिङ्गा सार्वधातुकत्वादिडभावो ङित्त्वं च । किं च—यजिष्ठः यष्टृतमः । यष्टृशब्दात् 'तुश्छन्दसि' इतीष्ठन् प्रत्ययः । 'तुरिष्ठेमेयस्सु' इति तृशब्दस्य लोपः । वह्नितमः हविषां वोढृतमः शोशुचानः अतिशयेन दीप्यमानः । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । ईदृशः त्वं विश्वानि वरुणव्यतिरिक्तान्यपि द्वेष्टॄणि वा रक्षःप्रभृतीनि अस्मत् अस्मत्तः प्रमुमुग्धि प्रकर्षेण मोचय । 'बहुलं छन्दसि' इति शपश्श्लुः ॥

[23]अथ द्वितीया—हे अग्ने स त्वं नः अस्माकं अवमः अविता भव ऊत्या गमनेन । यद्वा—ऊत्या रक्षणेन अवमः अर्वाचीनः प्रत्यासन्नो भव । अस्या उषसो रात्रेरवसाने प्रातरेव अस्माकं नेदिष्ठः अन्तिकतमः अस्मिन् दिवसे प्रातरेव अस्मत्पार्श्वमागतस्त्वमिदानीं तत्क्षणेनापि प्रत्यासन्नतरो भवेति । 'अन्तिकबाढ-

अस्या उषसो व्युष्टौ । अवं यक्ष्व नो वरुणम् ॥ ७२ ॥ रराणो वीहि मृडीकꣳ सुहवो न एधि । प्रप्राय-मग्निर्भरतस्य शृण्वे वि यत्सूर्यो न

अवेति । यक्ष्व । नः । वरुणम् ॥ ७२ ॥ रराणः । वीहि । मृडीकम् । सुहव इति सु-हवः । नः । एधि । [24]प्रप्रेति प्र-प्र । अयम् । अग्निः । भरतस्य । शृण्वे । वीति । यत् । सूर्यः । न । रोचते । बृहत् ।

योर्नैदसाधो ' । किञ्च—रराणः अस्मदीये परिचरणे रममाण .अस्माकं वरुणं वारकं वरुणप्रवर्तितं वा पापरोगादिकमवयक्ष्व नाशय । ' बहुलं छन्दसि ' इति शपो लुक् । रातेः शान-चि अन्त्यलोपश्छान्दसः, पूर्वपदाद्युदात्तत्वम् । तदर्थं वीहि भुङ्क्ष्व मृडीकं सुखहेतुमिदं हविः । किञ्च—नः अस्माकं सुहवः शोभ-नाह्वानश्च एधि भव. आह्वानप्रयोजनस्य सद्यस्सम्पत्तिः शोभनत्वम् । ' आद्युदात्तं द्व्यच्छन्दसि ' इत्युत्तरपदाद्युदात्तत्वम् ॥

[24]' यो भ्रातृव्यवान् स्यात् स स्पर्धमान एतयेष्ट्या यजेताग्नये प्र-वते पुरोडाशमष्टाकपालं निर्वपेदग्नये विबाधवतेऽग्नये प्रतीकवते' *इत्यस्यां त्रिहविष्कायां 'अग्नये प्रवते'* इत्यस्य पुरोनुवाक्या—प्रप्रेति त्रिष्टुप् ॥ ' प्रसमुपोदः पादपूरणे ' इति द्विर्वचनम् । अयमग्निर्भर-तस्य यजमानस्य भरणात् भरतः । औणादिकोतच्प्रत्ययः ।

* तै. सं. २-४-१,6

रोचते बृहद्भाः । अभि यः पूरुं पृतनासु तस्थौ दीदाय दैव्यो अतिथिश्शिवो नः । प्र ते यक्षि प्र त इयर्मि मन्म भुवो यथा वन्द्यो नो

भाः । अभीति । यः । पूरुम् । पृतनासु । तस्थौ । दीदाय । दैव्यः । अतिथिः । शिवः । नः । [25]प्रेति । ते । यक्षि । प्रेति । ते । इयर्मि । मन्म । भुवः । यथा । वन्द्यः । नः । हवेषु । धन्वन्न् । इव । प्रपे-

प्रशृण्वे प्रकर्षेण शृणोतु । आह्वानप्रयोजनं शीघ्रं करोत्वित्यर्थः। लिटि 'लोपस्त आत्मनेपदेषु' इति तलोपः । अग्निर्विशेष्यते—यत् योऽग्निः सूर्य इव बृहद्भिरोचते अत्यर्थं दीप्यते । भाः भासनशीलः । 'भ्राजभास' इति क्विप् । यश्चाग्निः पृतनासु सङ्ग्रामेषु पूर्वमाप्यायमानं शत्रुम् । पूरी आप्यायने, औणादिक उप्रत्ययः । पूर्वं महान्तमपि शत्रुमभितस्थौ अभितिष्ठति । अधितिष्ठति आक्रामति । किंच—योऽस्माकमतिथिर्भूत्वा दीदाय दीप्यते । छान्दसो लिट्, अतिथिः विशेष्यते—दैव्यः दिवि भवः । 'देवाद्यञञौ' शिवः कल्याणगमनः । यद्वा—सोऽस्माकमस्त्विति सामर्थ्याल्लभ्यते ॥

[25]तत्रैव याज्या—प्र ते यक्षीति त्रिष्टुप् ॥ 'इयक्षवे' इति चतुर्थपादादिः । हे अग्ने त्वां प्रयक्षि प्रकर्षेण यजे । छान्दसो लिट् । ते तव मन्म मननमनुध्यानं प्र इयर्मि प्रकर्षेण गच्छामि । यद्वा—

हवेषु । धन्वन्निव प्रपा असि त्वमग्न इयक्षवे पूरवे प्रत्न राजन् ॥७३॥

र्ति प्र–पा । असि । त्वम् । अग्ने । इयक्षवे । पूरवे । प्रत्न । राजन् ॥ ७३ ॥ [26]वीति । पाजसा ।

ते त्वदीयं मन्म मननीयं प्रकर्षेण सम्पादयामि । ऋ गतौ, शपः श्लुः । 'अर्तिपिपर्त्योश्च' इत्यभ्यासस्येत्वम्, 'अभ्यासस्यासवर्णे' इतीयङ् । मन्यतेरौणादिको मनिन् प्रत्ययः । यथा त्वमस्माकं हवेषु यज्ञेषु पुनःपुनः वन्द्यः स्तुत्यः भवः भवेः यथा ते श्रद्धयैव [ह्वैव] पुनःपुनरस्मान् पुनातु धनकामादिना तथा वयं मन्तव्याः इति । 'ईडवन्द' इत्याद्युदात्तत्वम् । भवतेर्लेट्, शपो लुकि अडागमे 'भूसुवोस्तिङि' इति गुणाभावः । पादादित्वान्न निहन्यते । कः पुनः तव विशेषः इति चेदिदमुच्यते—हे अग्ने धन्वन् निर्जले प्रदेशे प्रपेव शीतलपानीयपूर्णशालेवासि भक्तानां सकलक्लेशनिवृत्तिहेतुत्वात् । तस्य इयक्षवे इयक्षा यष्टुमिच्छा यजनकार्येच्छा। छान्दस आदिवर्णलोपः । पूरवे महात्मने पूरयित्रे वा हविषां हे प्रत्न पुराण राजन् दीप्यमान सर्वदा राजनशील ॥

[26]'अग्नये विबाधवते'* इत्यस्य पुरोनुवाक्या—वि पाजसेति त्रिष्टुप् ॥ इयमग्निकाण्डे व्याख्यास्यते यत्राम्नायते† । प्रतीकग्रहणं त्वस्याः पृथुना पाजसा बलेन शोशुचानः दीप्यमानस्त्वं द्विषो बाधस्व रक्षांसि च अमिवा रोगांश्च । तव सुशर्मणः शोभनशरणस्य शोभनसुखस्य वा बृहतः महात्मनः शर्मणि अहं स्याम् । सदा वर्धीय अग्नेः अङ्गनादिगुणयुक्तस्य सुहवनस्य शोभनाह्वानस्य प्रणीतौ परिचरणे वर्तमान इति ॥

*तै. सं. २-४-१[6]. †तै. सं. ४-१-५[1].

वि पाजसा वि ज्योतिषा । स त्व-
मंग्ने प्रतीकेन प्रत्योष यातुधान्यः ।
उरुक्षयेषु दीद्यत् । तꣳ सुप्रतीकꣳ

[27]वीति । ज्योतिषा । [28]सः । त्वम् । अग्ने । प्रतीके-
न । प्रतीति । ओष । यातुधान्य इति यातु-धान्यः।
उरुक्षयेष्वित्युरु-क्षयेषु । दीद्यत् । [29]तम् । सुप्रती-

[27]तत्रैव याज्या—वि ज्योतिषेति त्रिष्टुप् ॥ इयं तु 'कृणुष्व पाजः' इत्यत्र व्याख्याता* । प्रतीकं गृह्यते अस्याः । अयमेवाग्निः बृहता ज्योतिषा विभाति विश्वानि च महित्वा माहात्म्यानि आविष्कृणुते आविष्कृणुतां वा । किंच—अदेवीः अदेवनशीलाः दुरेवाः दुःखेन एतव्याः काममायाः प्रसहते प्रकर्षेणाभिभवति अभिभवतु वा । अपिच—रक्षसां च विनाशाय आत्मीये शृङ्गे शृङ्गस्थानीये ज्वाले शिशीते तीक्ष्णीकुरुते कुरुतां वा । एवं महानुभावोऽयमस्माकं भ्रातृव्यं विनाशयत्विति ॥

[28]'अग्नये प्रतीकवते'† इत्यस्य पुरोनुवाक्या—स त्वमिति गायत्री ॥ हे अग्ने स त्वं प्रतीकेन ज्वालाया उपक्रमणमात्रेण प्रत्योषं प्रतिमुखं प्रत्येकं वा यातुधान्यः यातुधानीः यातुधानजातीः क्षयेषु यज्ञगृहेषु । 'क्षयो निवासे' इत्याद्युदात्तत्वम् । उरु महत् दीद्यत् जाज्वल्यमानः । दीद्यतिश्छान्दसः । अभ्यस्तसंज्ञिकत्वान्नुमभावः । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् ॥

[29]तत्रैव याज्या—तं सुप्रतीकमिति त्रिष्टुप् ॥ तमग्निं सुप्रतीकं

*तै. सं. १-२-१४.[17] †तै. सं २-४-१६.

सुदृशꣳ स्वश्वमविद्वाꣳसो विदुष्टरꣳ सपेम । स यक्षद्विश्वा वयुनानि विद्वान्प्र हव्यमग्निरमृतेषु वोचत् ।

कमिति सु–प्रतीकम् । सुदृशमिति सु–दृशम् । स्वश्वम् । अविद्वाꣳसः । विदुष्टरमिति विदुः–तरम् । सपेम । सः । यक्षत् । विश्वा । वयुनानि । विद्वान् । प्रेति । हव्यम् । अग्निः । अमृतेषु । वोचत् । [30] अꣳ-

शोभनावयवं शोभनोपक्रमं वा । कृदुत्तरपदाद्युदात्तत्वम् । सुदृशं सुष्ठु द्रष्टारं अभिमतानाम् । क्विपि कृदुत्तरपदप्रकृतिस्वरत्वम् । शोभनदृष्टिं वा । 'नञ्सुभ्याम्' इत्युत्तरपादान्तोदात्तत्वम् । स्वश्वं शोभनगतिं .विदुष्टरं विद्वत्तमम् । अयस्मयादित्वेन भत्वात् द्वयो- रसम्प्रसारणम् । सपेम परिचरेम, भजेम वा । षप समवाये । स चाग्निः विश्वानि वयुनानि ज्ञानानि यक्षत् । लेटि 'सिब्बहुलं लेटि' इति सिप् । सर्वार्थसाधनो वा यज्ञः, मदीयं च हव्यं अमृतेषु देवेषु प्रवोचत् प्रब्रवीतु । देवसदसि ख्यापयतु वा । छान्दसे लुङि 'वच उम्' इति उमागमः । 'बहुलं छन्दस्य- माङ्योगेऽपि' इत्यडभावः ॥

[30] 'यो भ्रातृव्यवान् स्यात् स स्पर्धमान एतयेष्ट्या यजेतेन्द्रा- यांहोमुचे पुरोडाशमेकादशकपालं निर्वपेदिन्द्राय वैमृधायेन्द्राये- न्द्रियावते'* इत्यस्यास्त्रिहविष्कायाः क्रमेण याज्यानुवाक्याः—अं- होमुच इत्याद्याः षडृचः ॥ आसां प्रतीकग्रहणम् । अत्र तृती-

* तै. सं. २-४-२.3

अ॒ꣳहोमुचे॑ वि॒वेष॒ यन्मा॒ वि न॑

हो॒मु॒च॒ इत्यꣳहः॒-मु॒चे॑। [31]वि॒वेष॑। यत्। मा॒। [32]वीति॑।

---

याऽनुष्टुप्, पञ्चमी गायत्री । अन्यास्त्रिष्टुभः । सर्वाश्चैता 'इन्द्रं वो विश्वतस्परि' इत्यत्र व्याख्याताः* । 'इन्द्रायांहोमुचे'† इत्यस्य पुरोनुवाक्या—अंहसां मोचयित्रे इन्द्राय ओषिष्ठदाव्ने·दावेन दग्धृतमस्यादित्यस्यापां दापयित्रे, तस्मै वा वृष्ट्यर्थमपां दात्रे सुमतिं शोभनां मनीषां प्रभरेम प्रकर्षेण स्वीकुर्मः । गृणानाः स्तुवन्तो वयम् । त्वं च तया स्तुत्या तुष्टः इदं हव्यं प्रतिगृभाय ।.हे इन्द्र यजमानस्य कामा मनोरथाः सत्या अमोघा भवन्तु ॥

[31]अथ याज्या—विवेषेति ॥ यत् यस्मान्मां धिषणा तादृशी बुद्धिः जजान विवेष व्याप्तवती तस्मादहं जजान जातवानस्मि नो चेदजातसम एव स्याम् । धिषणा विशेष्यते—पार्यात् पारेभवादन्तच्चादह्नः पुरा पूर्वं यावन्मरणादिन्द्रं स्तवै स्तुत्या तोषयामीति इयं धिषणा मां विवेश । पुनश्च धिषणा विशेष्यते—यस्यां सत्यामंहसः पापात् पीपरत् पारयति उत्तारयति । पुरुषं यथा अंहस उत्तारितानस्मान् उभये उभयकुलप्रभवा अपि हवन्ते आह्वयन्ति मां रक्ष मां रक्षेति नदीमध्ये नावाऽऽयान्तं नाविकं उभयतः स्थिता यथा आह्वयन्ति भो भो मामुत्तारय मामुत्तारयेति ॥

[32]अथ 'इन्द्राय वैमृधाय'† इत्यस्य पुरोऽनुवाक्या—वि न इन्द्रेति ॥ हे इन्द्र नः अस्माकं मृधः योद्धॄन् विजहि विविधं मारय । किञ्च—पृतन्यतः सङ्ग्रामं कर्तुमिच्छतः पुरुषान्नीचान्नचग्भूतान् यच्छ

---

* सं. १-६-१२. 9—10,12—13, 3—4. † तै. सं. २-४-२[3].

इन्द्रेन्द्र क्षत्रमिन्द्रियाणि शतक्रतोऽ-
नु ते दायि ॥ ७४ ॥

नः । इन्द्र । [33]इन्द्र । क्षत्रम् । [34]इन्द्रियाणि । शतक्रतो इति शत-क्रतो । [35]अन्विति । ते । दायि ॥ ७४ ॥

यद्वीस्समध्वरायं नो वरुणः राजञ्छ्रतुंश्रत्वा-
रिंशच्च ॥ १२ ॥

---

उपरमय । किंच—योऽस्मानभिदासाति उपक्षपयति तमधस्पदमेव कृधि अस्मत्पादयोः पतितं प्रणतं पतितशिरस्कं कुरु ॥

[33]तत्रैव याज्या—इन्द्रेति ॥ हे इन्द्र वामं वननीयं क्षत्रमोजः अभ्यजायथाः अभिलक्ष्य जातो हे चर्षणीनां मनुष्याणां वृषभ कामानां वर्षितः तादृशस्त्वमस्मांश्चामित्रयन्तं शत्रुभावमिच्छन्तं जनं अपानुदः । किंच—देवेभ्यो हविःप्रदानादिव्यवहारिभ्यो यजमानेभ्यः—उरुं विस्तीर्णं लोकं स्थानं अकृणोः कुरु । उ इत्यवधारणे ॥

[34]अथ 'इन्द्रायेन्द्रियावते'* इत्यस्य पुरोनुवाक्या—इन्द्रियाणीति ॥ हे इन्द्र शतक्रतो यानि तव इन्द्रियाणि वीर्याणि पञ्चसु जनेषु निषादपञ्चमेषु ब्राह्मणादिषु देवमनुष्यपितृरक्षोगन्धर्वेषु वा त्वया दत्तानि तिष्ठन्ति तान्यहमावृणे आभिमुख्येन याचे । तव प्रसादान्मदभिमतान्यपि साधयन्त्विति ॥

[35]अथ याज्या—अनु त इति ॥ हे इन्द्र यजत्र यष्टव्य ते

---

* तै. सं. २-४-२.३

विश्वरूपस्त्वष्टेन्द्रं वृत्रं ब्रह्मवादिनस्स त्वै नासौ-
मयाज्येष वै देवरथो देवा वै नर्चि नायज्ञोग्ने महा-
न्त्रीन्निवीतमायुंष्टे द्वादश ॥ १२ ॥

विश्वरूपो नैनꣳ शीतरूरावद्य वसु पूर्वेद्युर्वाजा
इत्यग्ने महान्निवीतमन्या यन्ति चतुस्सप्ततिः॥७४॥

विश्वरूपोनु ते दायि ॥ हरिः ओं तत्सत् ॥

तुभ्यं दायि दीयते । देवेभिः ऋत्विग्भिः सामर्थ्याद्धविः कृत्स्नमपि तुभ्यमेव दीयते त्वत्प्रधानत्वाद्देवानाम् । यद्वा—तुभ्यमेव दायि दीयतां सत्त्रेषु सर्तव्येषु यज्ञेषु सर्वैरपि । देवान्तरेभ्य इन्द्रस्य विशेषानाचष्टे—महे महते इन्द्रियाय वीर्याय महता इन्द्रियेण तद्वानयमिति कृत्वा । अनुवृत्रहत्ये वृत्रं हतवानयमिति कृत्वा । अनुक्षत्रं धनवानयमिति कृत्वा । अनुसहं बलवानयमिति कृत्वा । नृपह्ये सर्वेषां नृणामभिभवितेति कृत्वा । सर्वत्र लक्षणे अनोः कर्मप्रवचनीयत्वम् ॥

इति श्रीभट्टभास्करमिश्रविरचिते ज्ञानयज्ञाख्ये यजुर्वेदभाष्ये
द्वितीये काण्डे पञ्चमे प्रश्ने द्वादशोनुवाकः.

समाप्तश्च प्रपाठकः.



हरिः ओम् ॥ स॒मिधो॑ यजति वस॒न्तमे॒वर्तू॒नामव॑ रुन्धे॒ तनू॒नपा॑तं यजति ग्री॒ष्मम॒वाव॑ रुन्ध इ॒डो य॑जति व॒र्षा ए॒वाव॑ रुन्धे ब॒र्हिर्य॑जति श॒-

[1]स॒मिध॒ इति॑ सं–इधः॑ । य॒ज॒ति॒ । व॒स॒न्तम् । ए॒व । ऋ॒तू॒नाम् । अवेति॑ । रु॒न्धे॒ । त॒नू॒नपा॑-त॒मिति॒ तनू॑–नपा॑तम् । य॒ज॒ति॒ । ग्री॒ष्मम् । ए॒व । अवेति॑ । रु॒न्धे॒ । [2]इ॒डः । य॒ज॒ति॒ । व॒र्षाः । ए॒व । अवेति॑ । रु॒न्धे॒ । ब॒र्हिः । य॒ज॒ति॒ । श॒र-

[1]अथ दार्शपूर्णमासिकमाध्वर्यवम् । समिधो यजति इत्यादयः षडनुवाकाः, प्राजापत्यं काण्डम् । तत्रादौ प्रयाजा विधीयन्ते । समिदादयः प्रयाजदेवता अग्निविशेषा आविष्टलिङ्गवचनाः । एषां [illegible] यागेन वसन्ताद्यृतुधर्मै प्रवृत्तिर्यथायथं भवति । वसन्ताद्यृतुधर्मप्रवर्तनेन लोकस्याधारा एते । एताश्च एतैः प्रीणयति । भावानां समिन्धयितारः समिधः । अग्नेरियं संज्ञा । वसन्ते हि भावाः समुज्ज्वला भवन्ति । तनूनामवयविनां न पातयिता प्रायशोऽवयवानां पातयिता तनूनपात् भावानां सङ्कोचयिता । ग्रीष्मे हि सर्वे भावाः सङ्कोचं व्रजन्ति ॥

[2]इडः वृष्ट्या इषोऽन्नस्य उत्पादयित्र्यः । अन्त्यविकारश्छान्दसः । यद्वा—इडन्नम् । 'तत्करोति' इति णिचि इष्ठवद्भावे टिलोपे क्विपि णिलोपः । वर्षासु हि सर्वसस्याभिवृद्धिः । बृं-

रर्दमेवाव रुन्धे स्वाहाकारं यजति
हेमन्तमेवाव रुन्धे तस्मात्स्वाहाकृता
हेमन्पशवोव सीदन्ति समिधो यज-
त्युषसं एव देवतानामव रुन्धे तनून-

दम् । एव । अवेति । रुन्धे । स्वाहाकारमिति स्वाहा-कारम् । यजति । हेमन्तम् । एव । अवेति । रुन्धे । तस्मात् । स्वाहाकृता इति स्वाहा-कृताः । हेमन्न् । पशवः । अवेति । सीदन्ति ।
3 समिध इति सं-इधः । यजति । उषसः । एव । देवतानाम् । अवेति । रुन्धे । तनूनपातमिति तनू-नपातम् । यजति । यज्ञम् । एव । अवेति ।

हणाल्लोकस्य बर्हिः । शरादि हि सर्वैः सस्यैः लोकः समृद्धो भवति । स्वाहुतमिव दग्धं करोतीति स्वाहाकारो हिमाग्निः । हेमन्ते हि सर्वं जगत् हिमाग्निना दग्धमिव भवति । तदेवाह—तस्मात्स्वाहाकारेण हिमाग्निना दग्धाः हेमन्ते पशवो द्विपादश्चतुष्पादश्चावसीदन्ति विनश्यन्ति । इयमपि स्तुत्यर्थमेव । ऋतुधर्मप्रवृत्तिः कीर्त्यते ॥

3 पुनरपि फलान्तरवत्तया प्रयाजाः स्तूयन्ते—उषस इति ॥ समिद्वत्वान्वयाद्देवानां योग्या उषसः उदयान् लभन्ते । तनुमतां मनु-

पातं यजति यज्ञमेवाव रुन्धे॥१॥ इडो यंजति पशूनेवाव रुन्धे बर्हिर्यजति प्रजामेवाव रुन्धे समानयत उपभृत-स्तेजो वा आज्यं प्रजा बर्हिः प्र-जास्वेव तेजो दधाति स्वाहाकारं

रुन्धे ॥ १ ॥ इडः । यजति । पशून् । एव । अवेति । रुन्धे । बर्हिः । यजति । प्रजामिति प्र-जाम् । एव । अवेति । रुन्धे । [4]समानयत इति सं-आनयते । उपभृत इत्युप-भृतः । तेजः । वै । आज्यम् । प्रजा इति प्र-जाः । बर्हिः । प्रजा-स्विति प्र-जासु । एव । तेजः । दधाति । [5]स्वाहा-

ष्याणामवनहेतोरग्निविशेषात् यज्ञलाभः । इडः पशव इति । पशुलाभहेतुरिडायागः । बर्हिरिति । प्रजालाभहेतुर्बर्हिर्यागः ॥

[4]समानयत इति ॥ त्रीन् प्रयाजानिष्ट्वा अर्धमौपभृतस्य जुह्वा-मानीय चतुर्थपञ्चमौ यजति । तेजो वा इति । पुनराज्याधा-नेन प्रजानां तेजस्समृद्धिः क्रियते ॥

[5]'स्वैव ते वागित्यब्रवीत्'* इति स्वाहाकारेण वागवरोधः । दशेति एवंफलभेदेन प्रयाजानां द्विप्रकारत्वात् दशत्वमुपचर्यते ।

*तै. ब्रा. २-१-२.

यजति वाचमेवाव रुन्धे दश सं प-
द्यन्ते दशाक्षरा विराडन्नं विराड्वि-
जैवान्नाद्यमव रुन्धे समिधो यज-
त्यस्मिन्नेव लोके प्रति तिष्ठति तनू-
नपातं यजति ॥ २ ॥ यज्ञ एवा-

कारमिति स्वाहा–कारम् । यजति । वाचम् । एव । अवेति । रुन्धे । दश । समिति । पद्यन्ते । दशाक्षरेति दश–अक्षरा । विराडिति वि–राट् । अन्नम् । विराडिति वि–राट् । विराजेति वि–राजा । एव । अन्नाद्यमित्यन्न–अद्यम् । अवेति । रुन्धे । [6]स-मिध इति सं–इधः । यजति । अस्मिन् । एव । लोके । प्रतीति । तिष्ठति । तनूनपातमिति तनू–नपातम् । यजति ॥ २ ॥ यज्ञे । एव । अन्तरिक्षे ।

---

यद्वा—जुह्वां पञ्चगृहीतेन औपभृतस्यार्धं पञ्चगृहीतमानीयत इति दशग्रहणं जुह्वाः संपद्यते इति । तत्र दशत्वान्वयात् विराड्लक्षणान्नलाभः ॥

[6]इदानीं पञ्चविधायाः प्रतिष्ठाया हेतुत्वं प्रयाजानामाह—अस्मिन् इति ॥ प्रथमत्वात्प्रकाशितत्वाच्च अस्मिन् मनुष्यलोके प्र-

न्तरिक्षे प्रति तिष्ठतीडो यजति पशु-
ष्वेव प्रति तिष्ठति बर्हिर्यजति य
एव देवयानाः पन्थानस्तेष्वेव प्रति
तिष्ठति स्वाहाकारं यजति सुवर्ग
एव लोके प्रति तिष्ठत्येतावन्तो वै दे-
वलोकास्तेष्वेव यथापूर्वं प्रति तिष्ठ-

प्रतीति । तिष्ठति । इडः । यजति । पशुषु । एव । प्रतीति । तिष्ठति । बर्हिः । यजति । ये । एव । देवयाना इति देव-यानाः । पन्थानः । तेषु । एव । प्रतीति । तिष्ठति । स्वाहाकारमिति स्वाहा-कारम् । यजति । सुवर्ग इति सुवः-गे । एव । लोके । प्रतीति । तिष्ठति । एतावन्तः । वै । देवलोका इति देव-लोकाः । तेषु । एव । यथापूर्वमिति यथा-पू-

थमे प्रतिष्ठितो भवति । यज्ञादिसर्वपरिस्पन्दाश्रयेऽन्तरीक्षे द्वितीयेन प्रतितिष्ठति । इड्याोगेन पशुषु प्रतिष्ठां गन्ता । बर्हिषः बृंहकत्वात् सर्वदेवयानपथप्रतिष्ठाहेतुत्वम् । स्वाहुतत्वस्याग्न्यादितृप्तिहेतुत्वात् स्वाहाकारेण स्वर्गे प्रतितिष्ठति । देवलोका इति । सुखहेतुत्वात् देवलोकत्वमेषाम् । यथापूर्वमिति । यथाक्रमं प्रयाजादीनां क्रमात् ॥

ति देवासुरा एषु लोकेष्वस्पर्धन्त
ते देवाः प्रयाजैरेभ्यो लोकेभ्योसुरा-
न्प्राणुदन्त तत्प्रयाजानाम् ॥ ३ ॥
प्रयाजत्वं यस्यैवं विदुषः प्रयाजा
इज्यन्ते प्रैभ्यो लोकेभ्यो भ्रातृव्या-
न्नुदतेऽभिक्रामं जुहोत्यभिजित्यै यो

वम् । प्रतीति । तिष्ठति । [7]देवासुरा इति देव–अ-
सुराः । एषु । लोकेषु । अस्पर्धन्त । ते । देवाः ।
प्रयाजैरिति प्र–याजैः । एभ्यः । लोकेभ्यः । अ-
सुरान् । प्रेति । अनुदन्त । तत् । प्रयाजानामिति
प्र–याजानाम् ॥३॥ प्रयाजत्वमिति प्रयाज–त्वम् ।
यस्य । एवम् । विदुषः । प्रयाजा इति प्र–याजाः ।
इज्यन्ते । प्रेति । एभ्यः । लोकेभ्यः । भ्रातृव्यान् ।
नुदते । [8]अभिक्राममित्यभि–क्रामम् । जुहोति ।

---

[7]देवासुरा इत्यादि ॥ प्रथमत इज्यन्ते इति प्रयाजाः भ्रातृव्यप्रणोदनफलाः । यद्वा—प्रस्थानादिवत् धात्वर्थनिवृत्तौ प्रशब्दः । प्रेज्यन्ते प्रवा बाध्यन्ते एभिरिति प्रयाजाः । ' ' प्रयाजानुयाजौ यज्ञाङ्गे ' इति कुत्वाभावः । थाथादिना उत्तरपदान्तोदात्तत्वम् ॥

[8]अभिक्राममिति ॥ अभिक्रम्याभिक्रम्य आभिमुख्येनाक्रम्य ॥

वै प्रयाजानां मिथुनं वेद प्र प्रजया पशुभिर्मिथुनैर्जायते समिधो बर्हीरिव यजति तनूनपातमेकमिव मिथुनं तदिडो बर्हीरिव यजति बर्हिरेकमिव मिथुनं तदेतद्वै प्रयाजानां मिथुनं य एवं वेद प्र ॥ ४ ॥ प्रज-

अभिजित्या इत्यभि-जित्यै । [१]यः । वै । प्रयाजानामिति प्र-याजानाम् । मिथुनम् । वेद । प्रेति । प्रजयेति प्र-जया । पशुभिरिति पशु-भिः । मिथुनैः । जायते । समिध इति सं-इधः । बर्हीः । इव । यजति । तनूनपातमिति तनू-नपातम् । एकम् । इव । मिथुनम् । तत् । इडः । बर्हीः । इव । यजति । बर्हिः । एकम् । इव । मिथुनम् । तत् । एतत् । वै । प्रयाजानामिति प्र-याजानाम् । मिथुनम् । यः । एवम् । वेद । प्रेति ॥ ४ ॥ प्रजयेति

[१]मिथुनमिति ॥ स्त्रीपुंसयोर्युगळम् । बर्हीरिति । स्त्रीत्वं बहुत्वं चाविवक्षितम् । एकमिवेत्यत्रापि पुंस्त्वमेकत्वं च । लिङ्गवचनविशेषयोरप्यावपारमार्थ्यमिवशब्देन द्योत्यते । एवमिडाबर्हिषोर्वेदितव्यम् ॥

या पशुभिर्मिथुनैर्जायते देवानां वा
अनिष्टा देवता आसन्नथासुरा यज्ञ-
मजिघांसन्ते देवा गायत्रीं व्यौ-
हन्पञ्चाक्षराणि प्राचीनानि त्रीणि
प्रतीचीनानि ततो वर्म यज्ञायाभ-
वद्वर्म यजमानाय यत्प्रयाजानूया-

प्र-जया । पशुभिरिति पशु-भिः । मिथुनैः । जायते । [10]देवानाम् । वै । अनिष्टाः । देवताः । आसन् । अथ । असुराः । यज्ञम् । अजिघांसन् । ते । देवाः । गायत्रीम् । वीति । औहन् । पञ्च । अ-क्षराणि । प्राचीनानि । त्रीणि । प्रतीचीनानि । ततः । वर्म । यज्ञाय । अभवत् । वर्म । यजमा-नाय । [11]यत् । प्रयाजानूयाजा इति प्रयाज-अ-

[10]देवानां वा इत्यादि ॥ पूर्वं देवानां यागेन प्रयाजदेवता अनिष्टा आसन् । अथ तादृशं यज्ञं असुरा हन्तुमैच्छन् । अथ तत् ज्ञात्वा देवा गायत्रीं अष्टाक्षरां व्यौहन् व्यूहद्वयं कृतवन्तः । पञ्चाक्षराणि यज्ञस्य प्राचीनानि पुरस्तात्स्थितान्येको व्यूहः । त्रीण्यक्षराणि प्रतीचीनानि पश्चात् स्थितान्यन्यो व्यूहः । ततस्स तथा व्यूढाष्टाक्षरा गायत्री मध्यस्थस्य यज्ञस्य यजमानस्य च रक्षाकवचत्वेन सम्पन्ना ॥

[11]यदित्यादि ॥ गतम् । वरूथमिति । रक्षकं सेनाबलादिकं

जा इज्यन्ते वर्मैव तद्यज्ञाय क्रियते
वर्म यजमानाय भ्रातृव्याभिभूत्यै
तस्माद्वरूथं पुरस्ताद्वर्षीयः पश्चा-
द्ध्रसीयो देवा वै पुरा रक्षोभ्यः ॥
५ ॥ इति स्वाहाकारेण प्रयाजेषु

नूयाजाः । इज्यन्ते । वर्म । एव । तत् । यज्ञाय । क्रियते । वर्म । यजमानाय । भ्रातृव्याभिभूत्या इति भ्रातृव्य—अभिभूत्यै । तस्मात् । वरूथम् । पुरस्तात् । वर्षीयः । पश्चात् । ह्रसीयः । [12]देवाः । वै । पुरा । रक्षोभ्य इति रक्षः—भ्यः ॥ ५ ॥ इति । स्वाहाकारेणेति स्वाहा—कारेण । प्रयाजेष्विति प्र—

पुरस्ताद्वर्षीयः वृद्धतरः । 'प्रियस्थिर' इत्यादिना वर्षादेशः । पश्चाद्ध्रसीयः ह्रस्वतरः । 'स्थूलदूर' इत्यादिना यणादिलोपः ॥

[12]देवा वा इत्यादि ॥ हविषोऽभिघारणविधिः । रक्षसां प्रवृत्तेः पुरैव यागः समाप्य इति मन्यमानाः देवाः प्रयाजेषु कृतेषु तदन्ते स्वाहाकारेण पञ्चमेन प्रयाजेन संस्थाप्यमपश्यन् इत्थमेव इदं कर्तव्यमिति निश्चितवन्तः । ततस्तदनुरूपमेव कृतवन्तः । ननु किं प्रयाजेभ्य ऊर्ध्वमेव लुप्तो देवानां यागः । न ब्रूमः प्रयाजान्तो याग इति, किंतु—स्वाहाकारेण सर्वो यज्ञो यथा सन्तिष्ठते । तादृशं प्रयोगं कृतवन्तो देवा इत्यु-

यज्ञꣳ सꣳस्थाप्यमपश्यन्तꣳ स्वाहाकारेण प्रयाजेषु सम॑स्थापयन्वि वा एतद्यज्ञं छिन्दन्ति यत्स्वाहाकारेण प्रयाजेषु सꣳस्थापयन्ति प्रयाजानिष्ट्वा हवीꣳष्यभि घारयति य-

याजेषु । यज्ञम् । सꣳस्थाप्यमिति सं—स्थाप्यम् । अपश्यन्न् । तम् । स्वाहाकारेणेति स्वाहा—कारेण । प्रयाजेष्विति प्र—याजेषु । समिति । अस्थापयन्न् । वीति । वै । एतत् । यज्ञम् । छिन्दन्ति । यत् । स्वाहाकारेणेति स्वाहा—कारेण । प्रयाजेष्विति प्र—याजेषु । सꣳस्थापयन्तीति सं—स्थापयन्ति । प्रयाजानिति प्र—याजान् । इष्ट्वा । हवीꣳषि । अभीति । घारयति । यज्ञस्य । सन्तत्या इति सं—तत्यै । अ-

च्यते । स च प्रयाजानन्तरं स्वाहाकारेण विच्छिन्नं हविषामभिघारणम् । तदेव प्रतिपादयति—वि वा एतदित्यादि । यदि प्रयाजान्तो यज्ञः संस्थाप्यते विच्छेद एवायं यज्ञस्य क्रियते न पुनस्सर्वोऽयं यज्ञस्संस्थाप्येते । तस्मात्प्रयाजानिष्ट्वाऽनुपूर्वं हवींष्यभिघारयति । यज्ञस्याविच्छेदाय देवा अपि तथाऽकुर्वन्निति । अथो अपिच हविष्घ्मेव हविषामनेनाभिघारणेनाकः करोति । छान्दसे लुङि 'मन्त्रे घस' इत्यादिना च्लेर्लुक् । अथो अपि-

ज्ञस्य सन्तत्या अथो हविरेवाकरथो यथापूर्वमुपैति पिता वै प्रयाजाः प्रजानूयाजा यत्प्रयाजानिष्ट्वा हवीꣳष्यभिघारयति पितैव तत्पुत्रेण साधारणम् ॥ ६ ॥ कुरुते तस्मा-

थो इति । हविः । एव । अकः । अथो इति । यथापूर्वमिति यथा-पूर्वम् । उपेति । एति । [13]पिता । वै । प्रयाजा इति प्र-याजाः । प्रजेति प्र-जा । अनूयाजा इत्यनु-याजाः । यत् । प्रयाजानिति प्र-याजान् । इष्ट्वा । हवीꣳषि । अभिघारयतीत्यभि-घारयति । पिता । एव । तत् । पुत्रेण । साधारणम् । ॥ ६ ॥ कुरुते । [14]तस्मात् । आहुः । यः । च । ए-

च यथापूर्वं अनुक्रमेण पदार्थानुपैति । इदं कृतमिदं कृतमिदानीं कर्तव्यमिति बुद्ध्या उपसंप्राप्नोति ॥

[13]पिता वा इत्यादि ॥ पूर्वमुत्पन्नत्वात्प्राधान्याच्च पितृस्थानीयाः प्रयाजाः । विपर्ययात्प्रजास्थानीया अनूयाजाः । अस्मात् प्रयाजशेषेण हविषामभिघारणेन पिता स्वयमेवात्मीयं धनं पुत्रेण साधारणं कुरुते । सह ध्रियत इति साधारणम् । 'आग्रध्रिसाधारणादञ् वक्तव्यः' इति अञ् प्रत्ययः ॥

[14]तस्मादित्यादि ॥ यश्चैवं वेदार्थं वेद जानाति ते सर्वेऽपि

दाहुर्यश्चैवं वेद यश्च न कथा पुत्रस्य
केवलं कथा साधारणं पितुरित्य-
स्कन्नमेव तद्यत्प्रयाजेष्विष्टेषु स्कन्द-
ति गायत्र्येव तेन गर्भं धत्ते सा प्रजां
पशून् यजमानाय प्र जनयति ॥७॥

वम् । वेद । यः । च । न । कथा । पुत्रस्य । केव-
लम् । कथा । साधारणम् । पितुः । इति । [15]अस्कं-
न्नम् । एव । तत् । यत् । प्रयाजेष्विति प्र—याजेषु ।
इष्टेषु । स्कन्दति । गायत्री । एव । तेन । गर्भम् ।
धत्ते । सा । प्रजामिति प्र—जाम् । पशून् । यज-
मानाय । प्रेति । जनयति ॥ ७ ॥

यजति यज्ञमेवाव रुन्धे तनूनपातं यजति प्रया-
जानामेवं वेद प्र रक्षोभ्यस्साधारणं पञ्चत्रिंशच्च ॥

कथा केन हेतुना पुत्रस्य स्वं केवलं पुत्रस्यैव स्वम्, कथा च पितुः स्वं साधारणं पुत्रस्यापि स्वमिति जिज्ञासवो वक्तारो भवन्ति । एवं विद्वांस्तु हेतुमत्र जानातीति भावः । 'था हेतौ च' इति थाप्रत्ययः । श्लोकार्धमिदं पुरातनं ब्राह्मणदर्शितम् । अन्यार्थस्यानूयाजशेषस्याभावात् पुत्रधनस्यासाधारण्यम् ॥

[15]किं चेत्याह—अस्कन्नमित्यादि ॥ प्रथमत एव इष्टप्रायत्वात् । तस्मात् प्रयाजाः कार्या इति । अपिचेत्याह—गाय-

चक्षुषी वा एते यज्ञस्य यदाज्यभा-
गौ यदाज्यभागौ यजति चक्षुषी एव
तद्यज्ञस्य प्रति दधाति पूर्वार्धे जु-
होति तस्मात्पूर्वार्धे चक्षुषी प्रबाहु-

[1]चक्षुषी इति । वै । एते इति । यज्ञस्य । यत् । आज्यभागावित्याज्य–भागौ । यत् । आज्यभागावित्याज्य–भागौ । यजति । चक्षुषी इति । एव । तत् । यज्ञस्य । प्रतीति । दधाति । [2]पूर्वार्ध इति पूर्व–अर्धे । जुहोति । तस्मात् । पूर्वार्ध इति पूर्व–अर्धे । चक्षुषी इति । प्रबाहुगिति प्र–बाहुक् । जुहोति ।

---

त्रय्येवेत्यादि । प्रयाजानूयाजात्मकेन यागाष्टकेनाष्टाक्षरा गायत्री गर्भं धत्ते सा कालेन यजमानाय प्रजां पुत्रादिकां पशूंश्च गवादीन् यजमानाय प्रजनयति । प्रसूते । तस्मात् प्रयाजा अनूयाजाश्च कर्तव्या इति ॥

इति द्वितीये षष्ठे प्रथमोऽनुवाकः.

---

[1]चक्षुषी वा इत्यादि ॥ आज्यभागयोर्विधिः । आज्यं भागं ययोः तावाज्यभागौ अग्नीषोमीयौ तयोश्चक्षुस्स्थानीययोः यागेन यज्ञस्य चक्षुषी प्रतिदधाति । प्रतिमुखं स्थापयति ॥

[2]प्रबाहुगिति ॥ देशतः प्रमाणतश्च ते सममित्यर्थः ॥

ग्जुहोति तस्मात्प्रबाहुक्चक्षुषी देव-
लोकं वा अग्निना यजमानोनु प-
श्यति पितृलोकꣳ सोमेनोत्तरार्धेऽ-
ग्नये जुहोति दक्षिणार्धे सोमायैव-
मिव हीमौ लोकावनयोर्लोकयोर-
नुख्यात्यै राजानौ वा एतौ देवता-
नाम् ॥ ८ ॥ यदग्नीषोमावन्तरा दे-

तस्मात् । प्रबाहुगिति प्र-बाहुक् । चक्षुषी इति । [3]देवलोकमिति देव-लोकम् । वै । अग्निना । यजमानः । अन्विति । पश्यति । पितृलोकमिति पितृ-लोकम् । सोमेन । उत्तरार्ध इत्युत्तर-अर्धे । अग्नये । जुहोति । दक्षिणार्ध इति दक्षिण-अर्धे । सोमाय । एवम् । इव । हि । इमौ । लोकौ । अनयोः । लोकयोः । अनुख्यात्या इत्यनु-ख्यात्यै । [4]राजानौ । वै । एतौ । देवतानाम् ॥ ८ ॥ यत् । अग्नीषोमावित्यग्नी-सोमौ । अन्तरा । देवताः ।

---

[3]देवलोकं वा इत्यादि ॥ गतम् । अनुक्रमेण ख्यानमनुख्यातिः । 'तादौ च' इति गतेः प्रकृति स्वरत्वम् ॥

[4]राजानावित्यादि ॥ देवानां मध्ये राजनशीलौ । अन्तरेति ।

वता इज्येते देवतानां विधृत्यै त-
स्माद्राज्ञा मनुष्या विधृता ब्रह्मवा-
दिनो वदन्ति किं तद्यज्ञे यजमानः
कुरुते येनान्यतोदतश्च पशून्दाधारो-
भयतोदतश्चेत्यृचमनूच्याज्यभागस्य

इज्येते इति । देवतानाम् । विधृत्या इति वि–धृत्यै । तस्मात् । राज्ञा । मनुष्याः । विधृता इति वि–धृताः । [5]ब्रह्मवादिन इति ब्रह्म–वादिनः । वदन्ति । किम् । तत् । यज्ञे । यजमानः । कुरुते । येन । अन्यतोदत इत्यन्यतः–दतः । च । पशून् । दाधार । उभयतोदत इत्युभयतः–दतः । च । इति । ऋचम् । अनूच्येत्यनु–उच्य । आज्यभागस्येत्याज्य–भागस्य ।

---

देवानां मध्ये इज्येते । 'अन्तरान्तरेण' इति द्वितीया । प्रयाजप्रधानदेवतापेक्षमन्तरात्वमेतयोः ॥

[5]ब्रह्मवादिन इत्यादि ॥ अन्यतरपार्श्वस्थदन्ता अश्वादयः । 'छन्दसि च' इति दतृभावः । 'दाधार' इति छान्दसो लिट्, तुजादित्वादभ्यासस्य दीर्घत्वम् । ऋचमिति । 'अग्निर्वृत्राणि'* इत्यादिकां पुरोऽनुवाक्याम् । जुषाणेनेति । 'जुषाणो अग्निराज्यस्य'* इत्यादियजुषा याज्यया । ऋचमिति । 'अग्निर्मूर्धा'† इत्यादिकां

---

*तै. ब्रा. ३-५-६. †तै. ब्रा. ३-५-७.

जुषाणेनं यजति तेनान्यतोदतो दाधारर्चमनूच्यं हविषं ऋचा यजति तेनोभयतोदतो दाधार मूर्धन्वतीं पुरोनुवाक्यां भवति मूर्धानमेवैनं समानानां करोति ॥ १ ॥ नियुत्वंत्या यजति भ्रातृव्यस्यैव पशून्नि यु-

जुषाणेनं । यजति । तेनं । अन्यतोदत इत्यन्यतः–दतः । दाधार । ऋचंम् । अनूच्येत्यनु–उच्यं । हविषः । ऋचा । यजति । तेनं । उभयतोदत इत्युभयतः–दतः । दाधार । [6]मूर्धन्वतीति मूर्धन्–वती । पुरोनुवाक्येति पुरः–अनुवाक्यां । भवति । मूर्धानम् । एव । एनम् । समानानाम् । करोति ॥ १ ॥ [7]नियुत्वत्येति नि–युत्वंत्या । यजति । भ्रातृव्यस्य ।

पुरोऽनुवाक्याम् । ऋचेति । 'भुवो यज्ञस्य'* इत्यादिकया याज्यया ॥

[6]मूर्धन्वतीति ॥ मूर्धशब्दयुक्ता पुरो ऋक् । 'ह्रस्वनुड्भ्याम्' इति मतुप उदात्तत्वम् ॥

[7]नियुत्वत्येति ॥ नियुच्छब्दवत्या । 'तसौ मत्वर्थे' इति भत्वम् । नियुवत इति । भ्रातृव्यं नितरां पृथक्करोति । यौतेः व्यत्ययेन शः, आत्मने पदं च ॥

* तै. ब्रा. ३–५–७.

वते केशिनꣳ ह दाभ्र्यं केशी सा-
त्यकामिरुवाच सप्तपदां ते शाक्करीꣳ
श्वो यज्ञे प्रयोक्तासे यस्यै वीर्येण
प्र जातान्भ्रातृव्यान्नुदते प्रति जनि-
ष्यमाणान् यस्यै वीर्येणोभयोर्लोक-
योर्ज्योतिर्धत्ते यस्यै वीर्येण पूर्वार्धे-

एव । पशून् । नीति । युवते । [8]केशिनम् । ह । दाभ्र्यम् । केशी । सात्यकामिरिति सात्य-कामिः । उवाच । सप्तपदामिति सप्त-पदाम् । ते । शाक्करीम् । श्वः । यज्ञे । प्रयोक्तास इति प्र-योक्तासे । यस्यै । वीर्येण । प्रेति । जातान् । भ्रातृव्यान् । नुदते । प्रतीति । जनिष्यमाणान् । यस्यै । वीर्येण । उभयोः । लोकयोः । ज्योतिः । धत्ते । यस्यै । वीर्येण । पूर्वार्धेनेति पूर्व-अर्धेन । अनड्वान् । भु-

[8]केशिनमित्यादि ॥ दर्भस्यापत्यं केशिनामानं सत्यकामस्यापत्यं केशिनामा उवाच । दर्भशब्दात् गर्गादियञ उदात्तनिवृत्तिस्वरेण उदात्तत्वम् । सप्तपदामिति । त्रिपदा पुरोऽनुवाक्या चतुष्पदा याज्या त्रिष्टुप् । अनयोः समष्टिः सप्तपदा । शक्करीं सर्वार्थसाधनभूतां वक्ष्यमाणवीर्यवतीं तव यज्ञे श्वः प्रयोक्तासे । तथा महावीर्या सा ज्ञातव्येति विषेशमभिधित्सुः सा-

नानड्वान्भुनक्ति जघनार्धेन धेनुरिति पुरस्ताल्लक्ष्मा पुरोनुवाक्या भवति जातानेव भ्रातृव्यान्प्रणुदत उपरिष्टाल्लक्ष्मा ॥ १० ॥ याज्या जनिष्यमाणानेव प्रति नुदते पुरस्ताल्ल-

नक्ति । जघनार्धेनेति जघन-अर्धेन । धेनुः । इति । [9]पुरस्ताल्लक्ष्मेति पुरस्तात्-लक्ष्मा । पुरोनुवाक्येति पुरः-अनुवाक्या । भवति । जातान् । एव । भ्रातृव्यान् । प्रेति । नुदते । उपरिष्टाल्लक्ष्मेत्युपरिष्टात्-लक्ष्मा ॥ १० ॥ याज्या । जनिष्यमाणान् । एव । प्रतीति । नुदते । पुरस्ताल्लक्ष्मेति पुरस्तात्-

त्यकामिरुवाचेति । 'न लुट्' इति निघाताभावः । वीर्यफलानि स्वयमेव इदानीं दर्शयति—यस्या इत्यादि । पुरोनुवाक्या प्राथम्याज्जातानां शत्रूणां प्रतिनोदः उत्पत्तिनिरोधः । उभयोरिति । अस्मिंश्चामुष्मिंश्च पूर्वोत्तरभावादुभयोः । पूर्वार्धेनेति । अनड्वान् वाहनादिना पूर्वार्धेन प्रजाः भुनक्ति रक्षति । धेनुः क्षीरस्रवणादिना जघनार्धेन प्रजाः भुनक्ति । पूर्वोत्तरत्वात् अनयोः ॥

[9]अथेदानीं स्वयमेव वीर्यविशेषमनयोर्दर्शयितुमाह—पुरस्ताल्लक्ष्मेति ॥ लक्षणं यष्टव्यदेवतानामधेयम् । पूर्वस्मिन्नर्धर्चे लक्ष्म यस्यास्सा तथोक्ता । यथा—'अग्निर्मूर्धा'* इत्यादि । उत्तरस्मि-

*तै. ब्रा. ३-५-७.

क्ष्मा पुरोनुवाक्या भवत्यस्मिन्नेव लोके ज्योतिर्धत्त उपरिष्टाल्लक्ष्मा याज्याऽमुष्मिन्नेव लोके ज्योतिर्धत्ते ज्योतिष्मन्तावस्मा इमौ लोकौ भवतो य एवं वेद पुरस्ताल्लक्ष्मा पुरोनुवाक्या भवति तस्मात्पूर्वार्धेनानड्वान्भुनक्त्युपरिष्टाल्लक्ष्मा याज्या त-

लक्ष्मा। पुरोनुवाक्येति पुरः-अनुवाक्या। भवति। अस्मिन्। एव। लोके। ज्योतिः। धत्ते। उपरिष्टाल्लक्ष्मेत्युपरिष्टात्-लक्ष्मा। याज्या। अमुष्मिन्। एव। लोके। ज्योतिः। धत्ते। [10]ज्योतिष्मन्तौ। अस्मै। इमौ। लोकौ। भवतः। यः। एवम्। वेद। पुरस्ताल्लक्ष्मेति पुरस्तात्-लक्ष्मा। पुरोनुवाक्येति पुरः-अनुवाक्या। भवति। तस्मात्। पूर्वार्धेनेति पूर्व-अर्धेन। अनड्वान्। भुनक्ति। उपरिष्टाल्लक्ष्मेत्युपरिष्टात्-लक्ष्मा। याज्या। त-

न्नर्धर्चे लक्ष्मवती उपरिष्टाल्लक्ष्मा, यथा—'जिह्वामग्ने चकृषे'* इति। उभयत्रापि 'मनः' इति ङीप्प्रतिषेधः। गतमन्यत्॥

[10]अस्मा इति॥ यजमानार्थं य एवं वेद तस्मै च इमौ

* तै. ब्रा. ३-५-७.

स्माज्जघनार्धेन धेनुर्य एवं वेद भुङ्क्त एनमेतौ वज्र आज्यं वज्र आज्यभागौ ॥ ११ ॥ वज्रो वषट्कारस्त्रिवृतमेव वज्रꣳ सम्भृत्य भ्रातृव्याय प्र हरत्यछम्बट्कारमपगूर्य वषट्करोति

स्मात् । जघनार्धेनेति जघन-अर्धेन । धेनुः । यः । एवम् । वेद । भुङ्क्ते । एनम् । एतौ । [11]वज्रः । आज्यम् । वज्रः । आज्यभागावित्याज्य-भागौ ॥ ११ ॥ वज्रः । वषट्कार इति वषट्-कारः । त्रिवृतमिति त्रि-वृतम् । एव । वज्रम् । संभृत्येति सं-भृत्य । भ्रातृव्याय । प्रेति । हरति । अछम्बट्कारमित्यछम्बट्-कारम् । अपगूर्येत्यप-गूर्य । व-

लोकौ ज्योतिष्मन्तौ भवतः । भुङ्क्त इति । एवं वेदितारमेतौ अनड्वान् धेनुश्च भुङ्क्तः । यथायथं संरक्षतः । एष च एषा च एतौ । 'पूमान् स्त्रिया' इति पुंसश्शेषः ॥

[11]वज्र आज्यमित्यादि ॥ त्रिगुणेनैव वज्रेण भ्रातृव्यस्य रक्षःप्रभृतेः प्रहरणं यज्ञस्याछम्बट्कारायानार्तत्वाय भवति । 'ये यजामहे'* इत्यपगूरणयुक्तो वषट्कारश्च भ्रातृव्याणां स्तृत्यै छादनाय विनाशाय भवति । ह्रस्वान्तं धात्वन्तरं द्रष्टव्यम् ॥

*तै. सं. १-६-११ 2

स्तृत्यै गायत्री पुरोनुवाक्या भवति त्रिष्टुग्याज्या ब्रह्मन्नेव क्षत्रमन्वारम्भयति तस्माद्ब्राह्मणो मुख्यो मुख्यो भवति य एवं वेद प्रैवैनं पुरोनुवाक्ययाऽऽह प्रणयति याज्यया गम-

यति । स्तृत्यै । [12]गायत्री । पुरोनुवाक्येति पुरः—अनुवाक्या । भवति । त्रिष्टुक् । याज्या । ब्रह्मन् । एव । क्षत्रम् । अन्वारम्भयतीत्यनु—आरम्भयति । तस्मात् । ब्राह्मणः । मुख्यः । मुख्यः । भवति । यः । एवम् । वेद । [13] प्रेति । एव । एनम् । पुरोनुवाक्ययेति पुरः—अनुवाक्यया । आह । प्रेति । नयति । याज्यया । गमयति । वषट्कारेणेति व-

---

[12]ब्रह्मन्नेवेति ॥ गायत्र्याः प्राथम्यात्त्रिष्टुभश्च चरमभावात् गायत्रत्रैष्टुभयोर्ब्रह्मक्षत्रयोः प्राधान्यं गुणभावं च करोति । एवं वेदिता च मुख्यो भवति ॥

[13]प्रैवैनमित्यादि ॥ एनं यजमानं पुरोनुवाक्यया प्राह—हविर्व्याजेन यजमानमेव प्रकृष्टं करोति ब्रवीति याज्यया एनं प्रणयति प्रकृष्टफलं प्रापयितुं नयति । वषट्कारेण तत्फलं गमयति प्रापयतीति ॥

यंति वषट्कारेणैवैनं पुरोनुवाक्यया
दत्ते प्र यंच्छति याज्यया प्रति॥१२
वषट्कारेणं स्थापयति त्रिपदा पुरोनु-
वाक्या भवति त्रयं इमे लोका ए-
ष्वेव लोकेषु प्रतिं तिष्ठति चतुंष्प-
दा याज्यां चतुंष्पद एव पशूनव
रुन्धे द्व्यक्षरो वंषट्कारो द्विपाद्यजंमा-

षट्—कारेणं । [14]एतिं । एव । एनम् । पुरोनुवाक्यं-
येतिं पुरः—अनुवाक्यंया । दत्ते । प्रेति । यच्छति ।
याज्यंया । प्रतीति ॥ १२ ॥ वषट्कारेणेति वषट्—
कारेणं । स्थापयति । [15]त्रिपदेति त्रि—पदा । पुरो-
नुवाक्येति पुरः—अनुवाक्यां । भवति । त्रयः ।
इमे । लोकाः । एषु । एव । लोकेषु । प्रतीति ।
तिष्ठति । चतुंष्पदेति चतुः—पदा । याज्यां । च-
तुष्पद इति चतुः—पदः । एव । पशून् । अवेति ।
रुन्धे । द्व्यक्षर इति द्वि—अक्षरः । वषट्कार इति

[14]अथान्यथा रूपयति—ऐवैनमिति ॥ पुरोनुवाक्यया एनमादत्ते देवेषु स्थापयितुं गृह्णाति । याज्यया देवेभ्यः प्रयच्छति । वषट्कारेण देवेषु स्थापयतीति ॥

[15]यथे[त्रिपदे]त्यादि ॥ गतम् ॥

नः पशुष्वेवोपरिष्टात्प्रति तिष्ठति
गायत्री पुरोनुवाक्या भवति त्रिष्टु-
ग्याज्यैषा वै सप्तपदा शक्करी यद्वा
एतया देवा अशिक्षन्तदशक्नुवन् य
एवं वेद शक्नोत्येव यच्छिक्षति॥१३॥

वषट्-कारः । द्विपादिति द्वि-पात् । यजमानः । पशुषु । एव । उपरिष्टात् । प्रतीति । तिष्ठति । [16]गायत्री । पुरोनुवाक्येति पुरः-अनुवाक्या । भवति । त्रिष्टुक् । याज्या । एषा । वै । सप्तपदेति सप्त-पदा । शक्करी । यत् । वै । एतया । देवाः । अशिक्षन् । तत् । अशक्नुवन् । यः । एवम् । वेद । शक्नोति । एव । यत् । शिक्षति ॥ १३ ॥

देवतानां करोत्युपरिष्टाल्लक्ष्माऽऽज्यभागौ
प्रति शक्नोत्येव द्वे च ॥ २ ॥

[16]एतयेति ॥ गायत्रीत्रिष्टुप्समष्टिरूपया यत्कर्तुमैच्छन् तदशक्नुवन्नेव देवाः । एवं वेदिताऽपि यच्च कार्यमिच्छति तच्छक्नोत्येव साधयितुम् । शकेः 'सनि मीमा' इत्यादिना इस् अभ्यासलोपश्च ॥

इति द्वितीये षष्ठे द्वितीयोनुवाकः.

प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशत्स आत्मन्नाज्यमधत्त तं देवा अब्रुवन्नेष वाव यज्ञो यदाज्यमप्येव नोत्रास्त्विति सोब्रवीद्यजान्व आज्यभागावुप स्तृणानभि घारयानिति तस्माद्यजन्त्याज्यभागावुप स्तृणन्त्यु-

[1]प्रजापतिरिति प्रजा-पतिः। देवेभ्यः। यज्ञान्। व्यादिशदिति वि-आदिशत्। सः। आत्मन्। आज्यम्। अधत्त। तम्। देवाः। अब्रुवन्। एषः। वाव। यज्ञः। यत्। आज्यम्। अपीति। एव। नः। अत्र। अस्तु। इति। सः। अब्रवीत्। यजान्। वः। आज्यभागावित्याज्य-भागौ। उपेति। स्तृणान्। अभीति। घारयान्। इति। तस्मात्। यजन्ति। आज्यभागावित्याज्य-भागौ। उपेति।

[1]प्रजापतिर्देवेभ्य इत्यादि॥ यजनसाधनानि हवींषि यज्ञाः तान् देवेभ्यो विविधमादिश्य आज्यमात्मन्येवाधत्त आज्यव्यतिरिक्तमेव देवेभ्यो ददौ तं देवाः प्रजापतिमब्रुवन् आज्यमेव यज्ञसाधनं, तस्मादत्राज्ये अस्माकमपि भागित्वमस्त्वेव। यद्वा—अत्रापि भागित्वमस्माकमस्त्विति। ततः प्रजापतिराज्यभागौ उप-

भि घारयन्ति ब्रह्मवादिनो वदन्ति
कस्मात्सत्याद्यातयामान्यन्यानि ह-
वी१ँष्ययातयाममाज्यमिति प्राजा-
पत्यम् ॥ १४ ॥ इति ब्रूयादयात-
यामा हि देवानां प्रजापतिरिति छ-

स्तृणान्ति । अभीति । घारयन्ति । [2]ब्रह्मवादिन इति ब्रह्म—वादिनः । वदन्ति । कस्मात् । सत्यात् । यातयामानीति यात—यामानि । अन्यानि । ह-वी१ँषि । अयातयाममित्ययात—यामम् । आ-ज्यम् । इति । प्राजापत्यमिति प्राजा—पत्यम् ॥ १४ ॥ इति । ब्रूयात् । अयातयामेत्ययात—या-मा । हि । देवानाम् । प्रजापतिरिति प्रजा—पतिः । इति । [3]छन्दा१ँसि । देवेभ्यः । अपेति । अक्रा-

स्तरणाभिघारणे च देवेभ्यो दत्वा अन्यत्सर्वमात्मार्थं वृतवानिति । सर्वत्र लेत्याडागमः । तस्मादित्यादि । देवानां तृप्त्यर्थम् ॥

[2]ब्रह्मवादिन इत्यादि ॥ यातयामानि गच्छता कालेन गतसाराणि देवानां मध्ये प्रजापतिरयातयामा गतेऽपि महति काले अगतसारत्वात् । अन्येषां च मन्वन्तरावधिकालस्थत्वात् ॥

[3]छन्दांसीत्यादि ॥ पुरोऽनुवाक्यादिचतुष्टयार्थेन चतुर्गृहीतेन

न्दाꣳसि देवेभ्योपाक्रामन्न वोऽभा-
गानि हव्यं वक्ष्याम इति तेभ्य
एतच्चतुरवत्तमधारयन्पुरोनुवाक्यायै
याज्यायै देवतायै वषट्काराय यच्चतु-
रवत्तं जुहोति छन्दाꣳस्येव तत्प्री-
णाति तान्यस्य प्रीतानि देवेभ्यो
हव्यं वहन्त्याङ्गिरसो वा इत उत्तमा-

मन् । न । वः । अभागानि । हव्यम् । वक्ष्यामः ।
इति । तेभ्यः । एतत् । चतुरवत्तमिति चतुः—अ-
वत्तम् । अधारयन् । पुरोनुवाक्याया इति पुरः—
अनुवाक्यायै । याज्यायै । देवतायै । वषट्कारायेति
वषट्—कारार्य । यत् । चतुरवत्तमिति चतुः—अव-
त्तम् । जुहोति । छन्दाꣳसि । एव । तत् । प्रीणा-
ति । तानि । अस्य । प्रीतानि । देवेभ्यः । हव्यम् ।
वहन्ति । [4]अङ्गिरसः । वै । इतः । उत्तमा इत्युत्—

छन्दसां तृप्तिः । गायत्रीत्रिष्टुब्जगत्यनुष्टुभां प्रधानच्छन्दसां ग्रह-
णमित्येके ॥

[4]अङ्गिरसो वा इत्यादि ॥ आग्नेयस्याष्टाकपालस्य विधिः ।

स्सुवर्गं लोकमायन्तदृषयो यज्ञवा-
स्त्वभ्यवायन्ते ॥ १५ ॥ अपश्यन्पु-
रोडाशं कूर्मं भूतꣳ सर्पन्तं तमब्रुव-
न्निन्द्राय ध्रियस्व बृहस्पतये ध्रियस्व
विश्वेभ्यो देवेभ्यो ध्रियस्वेति स ना-
ध्रियत तमब्रुवन्नग्नये ध्रियस्वेति सो-
ऽग्नयेऽध्रियत यदाग्नेयोऽष्टाकपालोऽमा-
वास्यायां च पौर्णमास्यां चाच्युतो

तमाः । सुवर्गमिति सुवः–गम् । लोकम् । आ-यन्न् । तत् । ऋषयः । यज्ञवास्त्विति यज्ञ–वास्तु । अभ्यवायन्नित्यभि–अवायन्न् । ते ॥ १५ ॥ अप-श्यन्न् । पुरोडाशम् । कूर्मम् । भूतम् । सर्पन्तम् । तम् । अब्रुवन्न् । इन्द्राय । ध्रियस्व । बृहस्पतये । ध्रियस्व । विश्वेभ्यः । देवेभ्यः । ध्रियस्व । इति । सः । न । अध्रियत । तम् । अब्रुवन्न् । अग्नये । ध्रियस्व । इति । सः । अग्नये । अध्रियत । यत् । आग्नेयः । अष्टाकपाल इत्यष्टा–कपालः । अमा-वास्यायामित्यमा–वास्यायाम् । च । पौर्णमा-स्यामिति पौर्ण–मास्याम् । च । अच्युतः । भवं-

गतेष्वङ्गिरस्सु तेषां यज्ञवास्तु अभ्यागताः ऋषयः कूर्मरूपिणं

भवति सुवर्गस्य लोकस्याभिजित्यै
तमब्रुवन्कथाऽहास्था इत्यनुपाक्तोऽ-
भूवमित्यब्रवीद्यथाऽक्षोऽनुपाक्तः॥१६
अवार्छत्येवमवारमित्युपरिष्टादभ्य-
ज्याधस्तादुपानक्ति सुवर्गस्य लो-

ति । सुवर्गस्येति सुवः—गस्य । लोकस्य । अभिजित्या इत्यभि—जित्यै । [5]तम् । अब्रुवन् । कथा । अहास्थाः । इति । अनुपाक्त इत्यनुप—अक्तः । अभूवम् । इति । अब्रवीत् । यथा । अक्षः । अनुपाक्त इत्यनुप—अक्तः ॥ १६ ॥ अवार्छतीत्यव—ऋच्छति । एवम् । अवेति । आरम् । इति । उपरिष्टात् । अभ्यज्येत्यभि—अज्य । अधस्तात् । उपेति । अनक्ति । सुवर्गस्येति सुवः—गस्य । लोक-

---

सर्पन्तं च्यवमानं स्वर्गादवपतन्तं पुरोडाशमपश्यन् । तमित्यादि । भ्रियस्व अवतिष्ठस्व । अच्युत इति । आग्नेयस्याच्युतत्वात् स्वर्गस्याभिजयः ॥

[5]तमित्यादि ॥ अभ्यज्यमानोपाञ्जनहेतुः । केन हेतुना त्वमहास्थाः यज्ञसकाशात्प्रच्युतोऽसि । अवार्छतीति । अवपत्तिः अवार्च्छतेः पाघ्रादिना ऋच्छादेशः । 'उपसर्गादृति धातौ' इति वृद्धिः । अवारमिति । 'सर्तिशास्त्यर्तिभ्यश्च' इत्यङ् ॥

कस्य समष्ट्यै सर्वाणि कपालान्यभि प्रथयति तावतः पुरोडाशानमुष्मिन्लोकेऽभि जयति यो विदग्धस्स नैर्ऋतो योऽशृतस्स रौद्रो यश्शृतस्स सदेवस्तस्मादविदहता शृतंकृ-

त्यं । समष्ट्या इति सं–अष्ट्यै । [6]सर्वाणि । कपालानि । अभीति । प्रथयति । तावतः । पुरोडाशान् । अमुष्मिन् । लोके । अभीति । जयति । [7]यः । विदग्ध इति वि–दग्धः । सः । नैर्ऋत इति नैः–ऋतः । यः । अशृतः । सः । रौद्रः । यः । शृतः । सः । सदेव इति स–देवः । तस्मात् । अविदहतेत्यवि–दहता । शृतंकृत्य इति शृतं–कृत्यः ।

---

[6]अभि प्रथयतीति ॥ सर्वाणि कपालान्यभि व्याप्नोति तथा पृथूकरोति । तावत इति । यावन्ति कपालान्यभिप्रथयति तावत्सङ्ख्यान् पुरोडाशानमुष्मिन् लोके इष्टसाधनत्वेन प्राप्नोति ॥

[7]विदग्धो विरूपो दग्धः, अतिदग्धो वा । अशृतः अपक्वः । शृतः सुष्ठु पक्वः । सदेवः देवयोग्यः । शृतं कृत्य इति । सुष्ठु पक्तव्यः । शृतमिति तु मकारान्तो निपातः । 'विभाषा कृवृषोः' इत्यप् ॥

त्यस्सदेवत्वाय भस्मनाऽभि वास-
यति तस्मान्माꣳसेनास्थि छन्नं वेदे-
नाभि वासयति तस्मात् ॥१७॥ के-
शैश्शिरश्छन्नं प्रच्युतं वा एतदस्मा-
ल्लोकादगंतं देवलोकं यच्छृतꣳ हवि-
रनभिघारितमभिघार्योद्वासयति दे-
वत्रैवैनद्गमयति यद्येकं कपालं न-

सदेवत्वायेति सदेव-त्वाय । [8]भस्मना । अभीति । वासयति । तस्मात् । माꣳसेन । अस्थि । छन्नम् । वेदेन । अभीति । वासयति । तस्मात् ॥ १७ ॥ केशैः । शिरः । छन्नम् । [9]प्रच्युतमिति प्र-च्युतम् । वै । एतत् । अस्मात् । लोकात् । अगतम् । देवलोकमिति देव-लोकम् । यत् । शृतम् । हविः । अनभिघारितमित्यनभि-घारितम् । अभिघार्येत्यभि-घार्य । उदिति । वासयति । देवत्रेति देव-त्रा । एव । एनत् । गमयति । [10]यदि । ए-

---

[8]अभितश्छादनमभिवासनम् ॥

[9]प्रच्युतमित्यादि ॥ गतम् । देवत्रेति । 'देवमनुष्य' इत्यादिना द्वितीयान्तात्त्राप्रत्ययः ॥

[10]यद्येकमित्यादि ॥ कपालानां सङ्ख्ययोद्वासनविधिः । अ-

श्येदेको मासस्संवत्सरस्यानवेत-
स्स्यादथ यजमानः प्र मीयेत यद्वे
नश्येतां द्वौ मासौ संवत्सरस्यानवे-
तौ स्यातामथ यजमानः प्रमीयेत
सङ्ख्यायोद्वासयति यजमानस्य॥१८
गोपीथाय यदि नश्येदाश्विनं द्वि-

कम् । कपालम् । नश्येत् । एकः । मासः । संव-त्सरस्येति सं-वत्सरस्य । अनवेत इत्यनव-इतः । स्यात् । अथ । यजमानः । प्रेति । मीयेत । यत् । द्वे इति । नश्येताम् । द्वौ । मासौ । संवत्सरस्येति सं-वत्सरस्य । अनवेतावित्यनव-इतौ । स्याताम् । अथ । यजमानः । प्रेति । मीयेत । संख्यायेति सं-ख्याय । उदिति । वासयति । यजमानस्य ॥ १८ ॥ गोपीथाय । [11]यदि । नश्येत् । आश्विनम् । द्विकपालमिति द्वि-कपालम् । निरिति । वपेत् । द्यावापृथिव्यमिति द्यावा-पृथिव्यम् । एक-

नवेतः अनवगतः । अन्यून इति यावत् सङ्ख्ययोद्वासनं यजमानस्य रक्षार्थम् ॥

[11]प्रमादाद्धविनाशे आश्विनादिविधिः । गतमन्यत् । इष्टचन्त-

कपालं निर्वपेद्द्यावापृथिव्यमेककपालमश्विनौ वै देवानां भिषजौ ताभ्यामेवास्मै भेषजं करोति द्यावापृथिव्य एककपालो भवत्यनयोर्वा एतन्नश्यति यन्नश्यत्यनयोरेवैनद्विन्दति प्रतिष्ठित्यै ॥ १९ ॥

कपालमित्येक—कपालम् । अश्विनौ । वै । देवानाम् । भिषजौ । ताभ्याम् । एव । अस्मै । भेषजम् । करोति । द्यावापृथिव्य इति द्यावा—पृथिव्यः । एककपाल इत्येक—कपालः । भवति । अनयोः । वै । एतत् । नश्यति । यत् । नश्यति । अनयोः । एव । एनत् । विन्दति । प्रतिष्ठित्या इति प्रति—स्थित्यै ॥ १९ ॥

प्राजापत्यं तेऽक्षोऽनुपाक्तो वेदेनाभि वासयति तस्माद्यजमानस्य द्वात्रिँशच्च ॥३॥

---

भाविनोऽपि हविश्श्रपणान्ते प्रासङ्गिकमुद्वासनस्याम्ननम् ॥

इति द्वितीये षष्ठे तृतीयोनुवाकः.

देवस्य त्वा सवितुः प्रसव इति स्फ्यमा दत्ते प्रसूत्या अश्विनोर्बाहुभ्यामित्याहाश्विनौ हि देवानामध्वर्यू आस्तां पूष्णो हस्ताभ्यामित्याह यत्यै शतभृष्टिरसि वानस्पत्यो द्विषतो वध इत्याह वज्रमेव तत्सꣳ

[1] देवस्य । त्वा । सवितुः । प्रसव इति प्र—सवे । इति । स्फ्यम् । एति । दत्ते । प्रसूत्या इति प्र—सूत्यै । अश्विनोः । बाहुभ्यामिति बाहु—भ्याम् । इति । आह । अश्विनौ । हि । देवानाम् । अध्वर्यू इति । आस्ताम् । पूष्णः । हस्ताभ्याम् । इति । आह । यत्यै । [2] शतभृष्टिरिति शत—भृष्टिः । असि । वानस्पत्यः । द्विषतः । वधः । इति । आह । वज्रम् । एव । तत् । सामिति । श्यति । भ्रातृव्याय ।

[1] देवस्य त्वेत्यादि ॥ वेदिविधिः । प्रसूतिः सवितुरनुज्ञा । अपिच यतत्वाय प्रयत्यै वा ॥

[2] शतभृष्टिरसीति ॥ स्फ्याभिमन्त्रणम् । शतपरिपाको वनस्पतिविकारो द्विषतां वधहेतुरिति वचनेन वज्रमेव भ्रातृव्याय प्रहर्तुं सम्यक् निशितं करोति ॥

इयति भ्रातृव्याय प्रहरिष्यन्स्तम्बयजुर् हरत्येतावती वै पृथिवी यावती वेदिस्तस्या एतावत एव भ्रातृव्यं निर्भजति ॥ २० ॥ तस्मान्नाभागं निर्भजन्ति त्रिर् हरति त्रयं

प्रहरिष्यन्निति प्र–हरिष्यन्न् । [3]स्तम्बयजुरिति स्तम्ब–यजुः । हरति । एतावती । वै । पृथिवी । यावती । वेदिः । तस्याः । एतावतः । एव । भ्रातृव्यम् । निरिति । भजति ॥ २० ॥ तस्मात् । न । अभागम् । निरिति । भजन्ति । [4]त्रिः । हरति । त्रयः । इमे । लोकाः । एभ्यः । एव । ए-

[3]स्तम्बयजुरिति मन्त्रेण तृणपुरीषहरणस्येयं संज्ञा । एतावतीत्यादि । वेदिव्यतिरिक्तपृथिव्यभावप्रतिपादनेन सर्वस्याः पृथिव्या वेदित्वं वेदिस्तुत्यर्थम् । दृष्टं च 'सा वा इयं सर्वैव वेदिः'* इति । तस्यास्तादृश्या वेदेरेतावतः सर्वपृथिवीप्रमाणादवकाशात् भ्रातृव्यं भागवन्तं शत्रुं निर्भजति निभागं कृत्वा विप्रवासयति । तस्मात् अद्यत्वेऽपि अभागं एकार्थाभिलाषरहितं नाभागं निर्भजन्ति निर्वासयन्ति विषयस्य नियन्तारः ॥

[4]त्रिर्हरति इत्यादि ॥ गतम् । अपरिमिताल्लोकत्रयाभ्यधिकादपि ॥

*तै. सं. ६–२–४.

इमे लोका एभ्य एवैनं लोकेभ्यो निर्भजति तूष्णीं चतुर्थं हरत्यपरिमितादेवैनं निर्भजत्युद्धन्ति यदेवास्या अमेध्यं तदप हन्त्युद्धन्ति तस्मादोषधयः परा भवन्ति मूलं छिनत्ति भ्रातृव्यस्यैव मूलं छिनत्ति पितृदेवत्याऽतिखातेयतीं खनति प्रजा-

नम् । लोकेभ्यः । निरिति । भजति । तूष्णीम् । चतुर्थम् । हरति । अपरिमितादित्यपरि–मितात् । एव । एनम् । निरिति । भजति । [5]उदिति । हन्ति । यत् । एव । अस्याः । अमेध्यम् । तत् । अपेति । हन्ति । उदिति । हन्ति । तस्मात् । ओषधयः। परेति । भवन्ति । मूलम् । छिनत्ति । भ्रातृव्यस्य । एव । मूलम् । छिनत्ति । पितृदेवत्येति पितृ–देवत्या । अतिखातेत्यति–खाता । इयतीम् । खनति ।

[5]उद्धन्तीत्यादि ॥ मेधं नार्हतीत्यमेध्यम् । 'दण्डादिभ्यो यः' 'ययतोश्चातदर्थे' इत्युत्तरपदान्तोदात्तत्वम् । पराभवन्ति पुनःपुनर्विनश्यन्ति स्थानस्योद्धननादल्पेनैव कालेन च्यवन्ते । मूलमित्यादि । अतिखाता प्रतिष्ठामतीत्य खाता । इयती प्रादेशमात्री ।

पतिना ॥२१॥ यज्ञमुखेन संमिता-
मा प्रतिष्ठायै खनति यजमानमेव प्र-
तिष्ठां गमयति दक्षिणतो वर्षीयसीं
करोति देवयजनस्यैव रूपमकः पु-
रीषवतीं करोति प्रजा वै पशवः पु-

प्रजापतिनेति प्रजा-पतिना ॥ २१ ॥ यज्ञमुखेनेति यज्ञ-मुखेन । संमितामिति सं-मिताम् । एति । प्रतिष्ठाया इति प्रति-स्थायै । खनति । यजमानम् । एव । प्रतिष्ठामिति प्रति-स्थाम् । गमयति । [6]दक्षिणतः । वर्षीयसीम् । करोति । देवयजनस्येति देव-यजनस्य । एव । रूपम् । अकः । पुरीषवतीमिति पुरीष-वतीम् । करोति । प्रजेति प्र-जा । वै । पशवः । पुरीषम् । प्रज-

'यज्ञमुखं वै प्रजापतिः' इति प्राजापत्येन प्रादेशेन परिच्छिन्ना भवति । आप्रतिष्ठाया इति । 'चतुरङ्गुले ह्योषधयः प्रति तिष्ठन्ति'* इति यावच्चतुरङ्गुलं खनति ॥

[6]वर्षीयसीमिति ॥ प्रवृद्धतराम् । प्रियस्थिरादिना वर्षादेशः । एवं देवयजनस्य रूपं अकः करोति । छान्दसे लुङि 'मन्त्रे घस' इति च्लेर्लुक् । पुरीषवतीमिति । पूरिका मृत् पुरीषं प्रजासाधनत्वात्ताच्छब्द्यम्॥

* तै. ब्रा. ३-२-९.

रीषं प्रजयैवैनं पशुभिः पुरीषवन्तं
करोत्युत्तरं परिग्राहं परि गृह्णात्येता-
वती वै पृथिवी यावती वेदिस्तस्या
एतावत एव भ्रातृव्यं निर्भज्यात्मन
उत्तरं परिग्राहं परि गृह्णाति क्रूरमिव
वै ॥२२॥ एतत्करोति यद्वेदिं करो-

येति प्र–जया । एव । एनम् । पशुभिरिति पशु–भिः । पुरीषवन्तमिति पुरीष–वन्तम् । करोति । [7]उत्तरमित्युत्–तरम् । परिग्राहमिति परि–ग्राहम् । परीति । गृह्णाति । एतावती । वै । पृथिवी । यावती । वेदिः । तस्याः । एतावतः । एव । भ्रातृव्यम् । निर्भज्येति निः–भज्य । आत्मने । उत्तरमित्युत्–तरम् । परिग्राहमिति परि–ग्राहम् । परीति । गृह्णाति । क्रूरम् । इव । वै । ॥ २२ ॥ एतत् । करोति । यत् । वेदिम् । करो-

[7]उत्तरमित्यादि ॥ वेद्या उत्तरं परिग्राहं करोतीत्यर्थः । 'परौ यज्ञे' इति घञ् । एतावतीत्यादि । गतम्* । क्रूरमिति । हिंसारूपत्वात् ॥

*तै. सं. २–६–४³.

ति धा असि स्वधा असीति यो-
युप्यते शान्त्यै प्रोक्षणीरा सादय-
त्यापो वै रक्षोघ्नी रक्षसामपहत्यै
स्फ्यस्य वर्त्मन्त्सादयति यज्ञस्य
सन्तत्यै यं द्विष्यात्तं ध्यायेच्छुचै-
वैनमर्पयति ॥ २३ ॥

ति । [8]धाः । असि । स्वधेति स्व–धा । असि । इति । योयुप्यते । शान्त्यै । [9]प्रोक्षणीरिति प्र–उक्ष-णीः । एति । सादयति । आपः । वै । रक्षोघ्नीरि-ति रक्षः–घ्नीः । रक्षसाम् । अपहत्या इत्यप–हत्यै । स्फ्यस्य । वर्त्मन्न् । सादयति । यज्ञस्य । संतत्या इति सं–तत्यै । यम् । द्विष्यात् । तम् । ध्यायेत् । शुचा । एव । एनम् । अर्पयति ॥ २३ ॥

भजति प्रजापतिनेव त्रै त्रयस्त्रिꣳशञ्च ॥ ४ ॥

---

[8]योयुप्यते समीकरोति । युप विमोहने । शान्त्या इति समीकरणानाख्यानं तुल्यत्वापादनात् । धा असीत्यादिस्तुतेश्च ॥

[9]प्रोक्षणीरा सादयतीति ॥ गतम् । अर्पयति । 'अर्तिह्री' इत्यादिना पुक् ॥

इति द्वितीये षष्ठे चतुर्थोऽनुवाकः.

ब्रह्मवादिनो वदन्त्यद्भिर् हवीꣳषि प्रौ-
क्षीः केनाप इति ब्रह्मणेति ब्रूयाद्-
द्भिर्ह्येव हवीꣳषि प्रोक्षति ब्रह्मणाऽप
इध्माबर्हिः प्रोक्षति मेध्यमेवैनत्क-
रोति वेदिं प्रोक्षत्यृक्षा वा एषाऽलो-

[1]ब्रह्मवादिन इति ब्रह्म-वादिनः । वदन्ति । अद्भिरित्यत्-भिः । हवीꣳषि । प्रेति । औक्षीः । केन । अपः । इति । ब्रह्मणा । इति । ब्रूयात् । अद्भिरित्यत्-भिः । हि । एव । हवीꣳषि । प्रोक्षतीति प्र-उक्षति । ब्रह्मणा । अपः । [2]इध्माबर्हिरितीध्मा-बर्हिः । प्रेति । उक्षति । मेध्यम् । एव । एनत् । करोति । वेदिम् । प्रेति । उक्षति ।

[1]ब्रह्मवादिन इत्यादि ॥ अध्वर्युः पर्यनुयुज्यते । ब्रह्मणेति । 'प्रोक्षितास्स्थ'* इति मन्त्रेण । कीदृशमिदं ब्रह्मणा अपां प्रोक्षणं; अप्रोक्षणमेवेदमुक्तं भवति; मन्त्रोच्चारणमात्रमेव क्रियते इत्यत आह—अद्भिर्ह्येवेत्यादि । यस्मात् अद्भिः हविषां प्रोक्षणद्वारेण मेध्यत्वं क्रियत इति ब्रह्मणाऽपि तदपामिति । तस्मात् ब्रह्मणेत्युत्तरं ब्रूयादिति ॥

[2]इध्माबर्हिरित्यादि ॥ छान्दसं पूर्वोत्तरयोर्युगपत् प्रकृतिस्वर-

*तै. सं. १-१-५[3].

मकाऽमेध्या यद्वेदिर्मेध्यामेवैनां क-
रोति दिवे त्वाऽन्तरिक्षाय त्वा पृथि-
व्यै त्वेति बर्हिरासाद्य प्र ॥ २४ ॥
उक्षत्येभ्य एवैनल्लोकेभ्यः प्रोक्षति
क्रूरमिव वा एतत्करोति यत्खनत्य-
पो नि नयति शान्त्यै पुरस्तात्प्रस्तरं

ऋक्षा । वै । एषा । अलोमका । अमेध्या । यत् । वेदिः । मेध्याम् । एव । एनाम् । करोति । [3]दिवे । त्वा । अन्तरिक्षाय । त्वा । पृथिव्यै । त्वा । इति । बर्हिः । आसाद्येत्या–साद्य । प्रेति ॥ २४ ॥ उ-क्षति । एभ्यः । एव । एनत् । लोकेभ्यः । प्रेति । उक्षति । [4]क्रूरम् । इव । वै । एतत् । करोति । यत् । खनति । अपः । नीति । नयति । शान्त्यै । पुरस्तात् । प्रस्तरमिति प्र–स्तरम् । गृह्णाति ।

---

त्वम् । ऋक्षा वा एषेति । ऋक्षा तृणादिरहिता स्थली एषा वेदिः मूलादिच्छेदनेन ऋक्षा अलोमका उप्तलोमा अमेध्या तस्मात् प्रोक्षणेन मेध्यामेवैनां करोति । वावकाश [क्षिपकादि] त्वादित्वाभावः॥

[3]दिवे त्वेत्यग्रादारभ्य प्रोक्षणम् ॥

[4]क्रूरमिवेत्यादि ॥ गतम्* ॥

---

*तै. सं. २-६-४[7].

गृह्णाति मुख्यमेवैनं करोतीयन्तं गृह्णाति प्रजापतिना यज्ञमुखेन संमितं बर्हिस्स्तृणाति प्रजा वै बर्हिः पृथिवी वेदिः प्रजा एव पृथिव्यां प्रतिष्ठापयत्यनतिदृश्नं स्तृणाति प्रजयैवैनं पशुभिरनतिदृश्नं करोति ॥ ॥ २५ ॥ उत्तरं बर्हिषः प्रस्तरꣳ

मुख्यम् । एव । एनम् । करोति । इयन्तम् । गृह्णाति । प्रजापतिनेति प्रजा–पतिना । यज्ञमुखेनेति यज्ञ–मुखेन । संमितमिति सं–मितम् । बर्हिः । स्तृणाति । प्रजा इति प्र–जाः । वै । बर्हिः । पृथिवी । वेदिः । प्रजा इति प्र–जाः । एव । पृथिव्याम् । प्रतीति । स्थापयति । [5]अनतिदृश्नमित्यनति–दृश्नम् । स्तृणाति । प्रजयेति प्र–जया । एव । एनम् । पशुभिरिति पशु–भिः । अनतिदृश्नमित्यनति–दृश्नम् । करोति ॥ २५ ॥ [6]उत्तरमित्युत्–तरम् । बर्हिषः । प्रस्तरमिति प्र–स्तरम् ।

---

[5]अनतिदृश्नमिति ॥ अनतिविरळम् ॥

[6]उत्तरं बर्हिष इत्यादि ॥ गतम् ॥

सादयति प्रजा वै बर्हिर्यजमानः
प्रस्तरो यजमानमेवायजमानादुत्तरं
करोति तस्माद्यजमानोऽयजमाना-
दुत्तरोन्तर्दधाति व्यावृत्या अनक्ति
हविष्कृतमेवैनꣳ सुवर्गं लोकं गम-
यति त्रेधाऽनक्ति त्रयं इमे लोका
एभ्य एवैनं लोकेभ्योऽनक्ति न प्र-
सादयति । प्रजा इति प्र—जाः । वै । बर्हिः ।
यजमानः । प्रस्तर इति प्र—स्तरः । यजमानम् ।
एव । अयजमानात् । उत्तरमित्युत्—तरम् । करो-
ति । तस्मात् । यजमानः । अयजमानात् । उत्तर
इत्युत्—तरः । अन्तः । दधाति । व्यावृत्या इति
वि—आवृत्यै । [7]अनक्ति । हविष्कृतमिति हविः—कृ-
तम् । एव । एनम् । सुवर्गमिति सुवः—गम् ।
लोकम् । गमयति । त्रेधा । अनक्ति । त्रयः । इमे ।
लोकाः । एभ्यः । एव । एनम् । लोकेभ्यः ।
अनक्ति । [8]न । प्रतीति । शृणाति । यत् । प्रतिशृ-

---

[7]अनक्ति—प्रहरणकाले स्रुक्षु ॥

[8]न प्रति शृणातीति—नाकृष्य पुनः प्रक्षिपति । अनूर्ध्वभावुकमनूर्ध्वलोक प्रभवम् । छान्दस उकञ् ॥

र्ति शृणाति यत्प्रतिशृणीयादनूर्ध्वं-
भावुकं यजमानस्य स्यादुपरीव प्र
हरति ॥ २६ ॥ उपरीव हि सुवर्गो
लोको नि यच्छति वृष्टिमेवास्मै नि
यच्छति नात्यग्रं प्र हरेद्यदत्यग्रं प्रहरे-
दत्यासारिण्यध्वर्योर्नाशुका स्यान्न
पुरस्तात्प्रत्यस्येद्यत्पुरस्तात्प्रत्यस्ये-

णीयादिति प्रति–शृणीयात् । अनूर्ध्वंभावुकमित्य-
नूर्ध्व–भावुकम् । यजमानस्य । स्यात् । उपरि ।
इव । प्रेति । हरति ॥ २६ ॥ उपरि । इव । हि ।
सुवर्ग इति सुवः–गः । लोकः । नीति । यच्छति ।
वृष्टिम् । एव । अस्मै । नीति । यच्छति । न ।
अत्यग्रमित्यति–अग्रम् । प्रेति । हरेत् । यत् ।
अत्यग्रमित्यति–अग्रम् । प्रहरेदिति प्र–हरेत् ।
अत्यासारिणीत्यति–आसारिणी । अध्वर्योः ।
नाशुका । स्यात् । न । पुरस्तात् । प्रतीति । अस्येत् ।

[1]उपरीत्यादि ॥ गतम् । नियच्छति न्यञ्चं पातयति । अत्यग्र-
मिति । अग्रात्ययेन न प्रहरेत् । अत्यासारिणीति । अत्या-
सारशीला अध्वर्योर्नाशहेतुः वृष्टिस्स्यात् । न पुरस्तादिति । पुर-

त्सुवर्गाल्लोकाद्यजमानं प्रति नुदेत्प्राश्ञं
प्र हरति यजमानमेव सुवर्गं
लोकं गमयति न विष्वंश्चं वि युं-
याद्यद्विष्वंश्चं वियुयात् ॥ २७ ॥
स्त्र्यस्य जायेतोर्ध्वमुद्यौत्यूर्ध्वमिव
हि पुंसः पुमानेवास्य जायते

यत् । पुरस्तात् । प्रत्यस्येदिति प्रति–अस्येत् । सुवर्गादिति सुवः–गात् । लोकात् । यजमानम् । प्रतीति । नुदेत् । प्राश्ञम् । प्रेति । हरति । यजमानम् । एव । सुवर्गमिति सुवः–गम् । लोकम् । गमयति । न । विष्वंश्चम् । वीति । युयात् । यत् । विष्वंश्चम् । वियुयादिति वि–युयात् ॥ २७ ॥ स्त्री । अस्य । जायेत । ऊर्ध्वम् । उदिति । यौति । ऊर्ध्वम् । इव । हि । पुंसः । पुमान् । एव ।

स्तात् प्रतीचीनं न प्रक्षिपेत् । 'पराङिव हि सुवर्गः'* इति पुरस्तात् प्रत्यसनेन यजमानः स्वर्गात्प्रतिनिवर्तितो भवति । प्राश्च-मित्यादि । गतम् । न विष्वञ्चमिति । विषूचीनाग्रं न विश्लेषयेत् । स्त्र्यस्येति । विषूचीनत्वात् स्त्रीव्यञ्जनस्य । ऊर्ध्वमेवेति । पुंव्य-ञ्जनस्योर्ध्वत्वात् ॥

* तै. सं. ६-३-४.

यत्स्फ्येन॒ वोपवे॒षेण॒ वा योयु॒प्येत॒
स्तृति॑रे॒वास्य॒ सा हस्ते॑न योयु॒प्यते॒
यज॑मानस्य गोपी॒थाय॑ ब्रह्मवा॒दिनो॑
वदन्ति॒ किं य॒ज्ञस्य॒ यज॑मान॒ इति॒
प्रस्त॒र इति॒ तस्य॒ क्व॑ सुव॒र्गो लो॒क
इत्या॑हव॒नीय॒ इति॑ ब्रू॒याद्यत्प्र॑स्त॒र-

अ॒स्य॒ । जा॒य॒ते॒ । [10]यत् । स्फ्येन॑ । वा॒ । उ॒प॒वे॒षे-
णेत्यु॑प–वे॒षेण॑ । वा॒ । यो॒यु॒प्येत॑ । स्तृति॑ः । ए॒व ।
अ॒स्य॒ । सा । हस्ते॑न । यो॒यु॒प्य॒ते॒ । यज॑मानस्य ।
गो॒पी॒थाय॑ । [11]ब्र॒ह्म॒वा॒दि॒न॒ इति॑ ब्रह्म–वा॒दिन॑ः । व॒द॒-
न्ति॒ । किम् । य॒ज्ञस्य॑ । यज॑मानः । इति॑ । प्र॒स्त॒र
इति॑ प्र–स्त॒रः । इति॑ । तस्य॑ । क्व॑ । सु॒व॒र्ग इति॑
सुवः–गः । लो॒कः । इति॑ । आ॒ह॒व॒नी॒य॒ इत्या॑–
ह॒व॒नीय॑ः । इति॑ । ब्रू॒या॒त् । यत् । प्र॒स्त॒रमिति॑

[10]यदिति ॥ योयुप्येत विह्वलीक्रियेत । स्तृतिः छादनं स्फ्या-द्युपादानेन हस्तादितिरोधानात् हिंसया स्तृतिः वज्रस्थानीयस्फ्या-दिस्पर्शनात् । ह्रस्वान्तधात्वन्तरमिदम् । हस्तेनेत्यादि । गतम् । गोपीथाय रक्षणाय भवति ॥

[11]ब्रह्मवादिन इत्यादि ॥ यज्ञसम्बन्धि किमङ्गं यजमानः यज-मानस्थानीयमिति ब्रह्मवादिनः पृच्छन्ति । तत्र प्रस्तरो यजमान

माहवनीये प्रहरति यजमानमेव ॥
सुवर्गं लोकं गमयति वि वा एतद्य-
जमानो लिशते यत्प्रस्तरं योयुप्यन्ते
बर्हिरनु प्र हरति शान्त्या अना-
रम्भण इव वा एतर्ह्यध्वर्युस्स ईश्व-
रो वेपनो भवितोर्ध्रुवाऽसीतीमामभि

प्र—स्तरम् । आहवनीय इत्या—हवनीये । प्रहरतीति प्र—हरति । यजमानम् । एव ॥ २८ ॥ सुवर्गमिति सुवः—गम् । लोकम् । गमयति । [12]वीति । वै । एतत् । यजमानः । लिशते । यत् । प्रस्तरमिति प्र—स्तरम् । योयुप्यन्ते । बर्हिः । अनु । प्रेति । हरति । शान्त्यै । [13]अनारम्भण इत्यना—रम्भणः । इव । वै । एतर्हि । अध्वर्युः । सः । ईश्वरः । वेपनः । भवितोः । ध्रुवा । असि । इति । इमाम् । अभीति । मृशति । इयम् । वै । ध्रुवा ।

---

इत्युत्तरं ब्रूयात् । तस्य यजमानस्य स्वर्गो लोकः सर्वाभिमतसिद्धिः । क्वेति पुनः पृच्छन्ति ब्रह्मवादिनः । तत्राप्याहवनीय इति प्रब्रूयात् । यदित्यादि । गतम् ॥

[12]वि वा एतदिति ॥ प्रस्तरस्य यजमानत्वात् तस्य विश्लथनेन यजमानो लिशते विबाध्यते । लिश अल्पीभावे, तौदा-

मृंशतीयं वै ध्रुवाऽस्यामेव प्रति ति-
ष्ठति न वेपनो भवत्यगा३नग्नीदि-
त्याह यद्ब्रूयादगन्नग्निरित्यग्नावग्निं
गमयेन्निर्यजमानꣳ सुवर्गाल्लोकाद्भ-

अस्याम् । एव । प्रतीति । तिष्ठति । न । वेपनः । भवति । [14]अगा३न् । अग्नीदित्यग्नि-इत् । इति । आह । यत् । ब्रूयात् । अगन् । अग्निः । इति । अग्नौ । अग्निम् । गमयेत् । निरिति । यजमानम् । सुवर्गादिति सुवः-गात् । लोकात् । भजेत् ।

---

दिकः । तत्र बर्हिरनुप्रहरणेन स्वस्य परिहृतत्वात तच्छान्तिः सुखं यजमानस्य ॥

[13]अनारम्भण इवेत्यादि ॥ अध्वरस्य नेतृत्वाच्चलितत्वादप्रतिष्ठितत्वं वेपनत्वम् ॥

[14]अगानग्नीदिति ॥ हे अग्नीत् किमगात् अगमत् प्रस्तरमिति पृच्छत्यध्वर्युराग्नीध्रम् । गमेर्लुङि 'मन्त्रे घस' इति च्लेर्लुक् । 'मोनो धातोः' । प्रश्ने उदात्तप्लुतः । तस्यासिद्धत्वादट उदात्तत्वेन समावेशः । अग्नीदित्यामन्त्रितानुदात्तत्वम् । अथाग्नीध्रो यदि प्रतिब्रूयात् अगन्नग्निः प्रस्तरजन्मा । यद्वा—अग्निः प्रस्तरं परिगतवानिति । तदा प्रस्तराग्निमग्नौ प्रवेशयेत् । ततश्च यज-

जेदगुन्नित्येव ब्रूयाद्यजमानमेव सुं-
वर्गं लोकं गमयति ॥ २९ ॥
अग्नेस्त्रयो ज्यायांसो भ्रातर आ-
सन्ते देवेभ्यो हव्यं वहन्तः प्रामीय-

अगन्न् । इति । एव । ब्रूयात् । यजमानम् । एव । सुवर्गमिति सुवः-गम् । लोकम् । गमयति ॥२९

आसाद्य प्रानतिद्दभ्रं करोति हरति वियुया-
द्यजमानमेवाग्निरिति सप्तदश च ॥५॥

[1]अग्नेः । त्रयः । ज्यायांसः । भ्रातरः । आसन् । ते । देवेभ्यः । हव्यम् । वहन्तः । प्रेति । अमीयन्त । सः । अग्निः । अबिभेत् । इत्थम् । वाव ।

---

मानः स्वर्गाल्लोकान्निर्भजेत्तस्मादगन्नित्येव ब्रूयात् विनैवाग्निशब्दम् । यजमानं स्वर्ग गमयति ॥

इति द्वितीये षष्ठे पञ्चमोनुवाकः.

---

[1]अग्नेस्त्रय इत्यादि ॥ गतम् । इत्थं वाव स्य इति । आत्मानमेव स एष इति निर्दिशति । स निलायत निरगच्छत् ।

न्त सोऽग्निरबिभेदित्थं वाव स्य आ-
र्तिमाऽरिष्यतीति स निलायत सोऽ-
पः प्राविशत्तं देवताः प्रैषमैच्छन्तं
मत्स्यः प्राब्रवीत्तमशपद्धियाधिया
त्वा वध्यासुर्यो मा प्रावोच इति त-
स्मान्मत्स्यं धियाधिया घ्नन्ति शप्तः

स्यः । आर्तिम् । एति । अरिष्यति । इति । सः । निलायत । सः । अपः । प्रेति । अविशत् । तम् । देवताः । प्रैषमिति प्र—एषम् । ऐच्छन् । तम् । मत्स्यः । प्रेति । अब्रवीत् । तम् । अशपत् । धियाधियेति धिया—धिया । त्वा । वध्यासुः । यः । मा । प्रेति । अवोचः । इति । तस्मात् । मत्स्यम् ।

'उपसर्गस्यायतौ' इति लत्वम् । सोऽपः प्राविशदित्यादि । अप्सु प्रविष्टमदृश्यतां गतम् । प्रैषमिष्टविषये प्रेषितुमैच्छन् देवताः तदर्थं तमन्विछन्ति स्मेति यावत् । छान्दसो णमुल् । अथाप्सु स्थितः कश्चिन्मत्स्यः तमाग्निं प्राब्रवीत् इह वसतीति । अथाग्निर्मत्स्यमशपत् यस्त्वं मामदृश्यं देवताभ्यः प्रावोचः तत्त्वां सर्वेऽपि धियाधिया कर्मणा जालग्रहणादिना व्यापारेण वध्यासुः । पुरुषव्यापारेणैव तव प्राणवियोगोऽस्त्विति । बुद्धियोगो वा धीरित्युच्यते । तस्माच्छप्तत्वादद्यापि तथैव क्रियते मत्स्यः ॥

॥ ३० ॥ हि तमन्वविन्दन्तमब्रुव-
न्नुप न आ वर्तस्व हव्यं नो वहेति
सोऽब्रवीद्वरं वृणै यदेव गृहीतस्या-
हुतस्य बहिःपरिधि स्कन्दात्तन्मे
भ्रातॄणां भागधेयमसदिति तस्माद्य-
द्गृहीतस्याहुतस्य बहिःपरिधि स्क-
न्दति तेषां तद्भागधेयं तानेव तेन

धिष्याधियेति धिया–धिया । घ्नन्ति । शप्तः ॥३०॥
हि । [2]तम् । आन्विति । अविन्दन् । तम् । अब्रु-
वन् । उपेति । नः । एति । वर्तस्व । हव्यम् ।
नः । वह । इति । सः । अब्रवीत् । वरम् । वृणै ।
यत् । एव । गृहीतस्य । अहुतस्य । बहिःपरि-
धीति बहिः–परिधि । स्कन्दात् । तत् । मे । भ्रा-
तॄणाम् । भागधेयमिति भाग–धेयम् । असत् ।
इति । तस्मात् । यत् । गृहीतस्य । अहुतस्य ।
बहिःपरिधीति बहिः–परिधि । स्कन्दति । तेषाम् ।
तत् । भागधेयमिति भाग–धेयम् । तान् । एव ।
तेन । प्रीणाति । परिधीनिति परि–धीन् । परीति ।

---

[2]तमन्वविन्दन्नित्यादि ॥ गतम् । स्कन्दादिति । लेट्याडा-

प्रीणाति परिधीन्परि दधाति रक्ष-
सामपहत्यै सꣳ स्पर्शयति ॥३१॥
रक्षसामनन्ववचाराय न पुरस्तात्प-
रि दधात्यादित्यो ह्येवोद्यन्पुरस्ताद्र-
क्षाꣳस्यपहन्त्यूर्ध्वे समिधावा दधा-
त्युपरिष्टादेव रक्षाꣳस्यप हन्ति यजु-
षाऽन्यां तूष्णीमन्यां मिथुनत्वाय द्वे

दधाति । रक्षसाम् । अपहत्या इत्यप-हत्यै । स-मिति । [3]स्पर्शयति ॥ ३१ ॥ रक्षसाम् । अनन्व-वचारायेत्यननु-अवचाराय । न । पुरस्तात् । प-रीति । दधाति । आदित्यः । हि । एव । उद्यन्नि-त्युत्-यन् । पुरस्तात् । रक्षाꣳसि । अपहन्तीत्य-प-हन्ति । [4]ऊर्ध्वे इति । समिधाविति सं-इधौ । एति । दधाति । उपरिष्टात् । एव । रक्षाꣳसि । अपेति । हन्ति । यजुषा । अन्याम् । तूष्णीम् । अन्याम् । मिथुनत्वायेति मिथुन-त्वाय । द्वे इति ।

---

गमः ; असदित्यडागमः तस्मात्परिधानं कर्तव्यं रक्षसां चापहत्यै भवति ॥

[3]संस्पर्शयतीत्यादि ॥ गतम् ॥

[4]ऊर्ध्वे इत्यादि ॥ आघारविधिः । यजुषेति । 'वीतिहोत्रं

आ दधाति द्विपाद्यजमानः प्रतिष्ठि-
त्यै ब्रह्मवादिनो वदन्ति स त्वै यजे-
त यो यज्ञस्यार्त्या वसीयान्त्स्यादिति
भूपतये स्वाहा भुवनपतये स्वाहा
भूतानाम् ॥ ३२ ॥ पतये स्वाहेति
स्कन्नमनु मन्त्रयेत यज्ञस्यैव तदा-

एति । दधाति । द्विपादिति द्वि-पात् । यजमानः । प्रतिष्ठित्या इति प्रति-स्थित्यै । [5]ब्रह्मवादिन इति ब्रह्म-वादिनः । वदन्ति । सः । तु । वै । यजेत । यः । यज्ञस्य । आर्त्या । वसीयान् । स्यात् । इति । भूपतय इति भू-पतये । स्वाहा । भुवनपतय इति भुवन-पतये । स्वाहा । भूतानाम् ॥ ३२ ॥ पतये । स्वाहा । इति । स्कन्नम् । अन्विति । मन्त्रयेत । यज्ञस्य । एव । तत् । आर्त्या । यजमानः ।

त्वा कवे '* इति दक्षिणाम् । यजुर्वेदाम्नानात् गायत्र्येव यजुरित्युच्यते । तेन विभिन्नलिङ्गद्वयसंयोगान्मिथुनत्वम् ॥

[5]ब्रह्मवादिन इत्यादि ॥ अनार्तावस्थायां वसुमत्तरोऽस्त्विति यः कामयेत । गतमन्यत् । भूयसीरिति । अनार्तावस्थाया बहुतरा इति तेनार्तत्वमेव वरमिति ॥

* तै. सं. १-१-११.[12]

त्यां यजमानो वसीयान्भवति
भूयसीर् हि देवताः प्रीणाति जामि
वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ
पुरोडाशावुपांशुयाजमन्तरा य-
जत्यजामित्वायाथो मिथुनत्वाया-
ग्निरमुष्मिन्लोक आसीद्यमोऽस्मिन्ते

वसीयान् । भवति । भूयसीः । हि । देवताः । प्रीणाति । [6]जामि । वै । एतत् । यज्ञस्य । क्रियते । यत् । अन्वञ्चौ । पुरोडाशौ । उपांशुयाजमित्युपांशु–याजम् । अन्तरा । यजति । अजामित्वायेत्यजामि–त्वाय । अथो इति । मिथुनत्वायेति मिथुन–त्वाय । [7]अग्निः । अमुष्मिन् । लोके । आसीत् । यमः । अस्मिन् । ते । देवाः । अनु-

[6]जामि आलस्यजनकम् । अन्वञ्चौ अनुपूर्वौ अन्येनाव्यवहितौ यद्भवतः . पुरोडाशौ तस्मादाज्यहविरुपांशुयाजः पौर्णमास्यां मध्ये भवति पुरोडाशयोः प्रधानमेव । पुरोडाशाज्यहविषोः द्वयस्य विभिन्नरूपत्वात् मिथुनत्वम् ॥

[7]अग्निरमुष्मिन् लोके इत्यादि ॥ अमुष्मिन् पितृलोके । व्या-

देवा अब्रुवन्नेतेमौ वि पर्यूहामेत्यन्ना-
द्येन देवा अग्निम् ॥ ३३ ॥ उपामं-
न्त्रयन्त राज्येनं पितरौ यमं तस्मा-
दग्निर्देवानांमन्नादो यमः पितृणाꣳ
राजा य एवं वेद प्र राज्यमन्नाद्यं-
माप्नोति तस्मा एतद्भागधेयं प्राय-
च्छन् यदग्नये स्विष्टकृतेऽवद्यन्ति

वन्न् । एति । इत । इमौ । वि । परीति । ऊहाम । इति । अन्नाद्येनेत्यन्न–अद्येन । देवाः । अग्निम् ॥ ३३ ॥ उपामन्त्रयन्तेत्युप–अमन्त्रयन्त । राज्येन । पितरः । यमम् । तस्मात् । अग्निः । देवानाम् । अन्नाद इत्यन्न–अदः । यमः । पितृणाम् । राजा । यः । एवम् । वेद । प्रेति । राज्यम् । अन्नाद्यमित्यन्न–अद्यम् । आप्नोति । [4]तस्मै । एतत् । भागधेयमिति भाग–धेयम् । प्रेति । अयच्छन्न् । यत् । अग्नये । स्विष्टकृत इति स्विष्ट–कृते । अवद्यन्तीत्यव-

ख्यातमन्यत्* । अन्नाद्येनेति । गतम् । एवं वेदिता राज्यमन्नाद्यं च प्राप्नोति ॥

[4]तस्मा एतदित्यादि ॥ शोभनमिष्टं करोतीति स्विष्टकृन्नामा

*तै. सं. २-५-८.[2]

यद॒ग्नये॑ स्वि॒ष्ट॒कृते॑ऽव॒द्यति॑ भाग॒धे-
ये॑नै॒व तद्रु॒द्र१॑ सम॑र्धयति स॒कृत्स॑कृ॒-
दव॑ द्यति स॒कृदि॑व॒ हि रु॒द्र उ॑त्त॒रा-
र्धादव॑ द्यत्ये॒षा वै रु॒द्रस्य॑ ॥ ३४ ॥
दिक्स्वाया॑मे॒व दि॒शि रु॒द्रं नि॒रव॑दयते

द्यन्ति । यत् । अ॒ग्नये॑ । स्वि॒ष्ट॒कृत॒ इति॑ स्विष्ट—कृ-
ते॑ । अ॒व॒द्यतीत्य॑व—द्यति॑ । भा॒ग॒धे॒ये॒नेति॑ भाग—धे-
ये॑न । ए॒व । तत् । रु॒द्रम् । समिति॑ । अ॒र्ध॒य॒ति॒ ।
[9]स॒कृत्स॑कृ॒दिति॑ स॒कृत्—स॒कृत् । अवेति॑ । द्य॒ति॒ ।
स॒कृत् । इ॒व॒ । हि । रु॒द्रः । उ॒त्त॒रा॒र्धादित्यु॑त्तर—अ॒-
र्धात् । अवेति॑ । द्य॒ति॒ । ए॒षा । वै । रु॒द्रस्य॑॥३४॥
दिक् । स्वाया॑म् । ए॒व । दि॒शि । रु॒द्रम् । नि॒रव॑द-
यत॒ इति॑ निः—अव॑दयते । द्विः । अ॒भीति॑ । घार॒-

प्रकृतादग्नेः प्रशस्तो योऽन्योऽग्निः तस्मात्तदीयेनैवावदानेन रुद्रमेव भागसमृद्धं करोति तस्य रुद्रात्मकत्वात् ॥

[9]सकृत्सकृदिति ॥ एकवारमेकवारं सर्वेषु । 'एकस्य सकृच्च' इति निपात्यते । सकृदिवेति । अनावृत्त्यादिसामान्यत्वात् तुल्योत्कृष्टरहिते पदे स्थितत्वात् । एषेति । उद्गततरा उत्तरा, अण्डावरणैरप्यनावृतत्वात् । निरवदयत इति निष्कृष्य देवतान्तरेभ्यो व्यावृत्तं भागेन तर्पयति । द्विरित्यादि । गतम् ॥

द्विरभि घारयति चतुरवत्तस्याप्त्यै पशवो वै पूर्वा आहुतय एष रुद्रो यदग्निर्यत्पूर्वा आहुतीरभि जुहुयाद्रुद्राय पशूनपि दध्यादपशुर्यजमानस्स्यादतिहाय पूर्वा आहुतीर्जुहोति पशूनां गोपीथाय ॥ ३५ ॥

यति । चतुरवत्तस्येति चतुः–अवत्तस्य । आप्त्यै ।
[10]पशवः । वै । पूर्वाः । आहुतय इत्या–हुतयः । एषः । रुद्रः । यत् । अग्निः । यत् । पूर्वाः । आहुतीरित्या–हुतीः । अभीति । जुहुयात् । रुद्राय । पशून् । अपीति । दध्यात् । अपशुः । यजमानः । स्यात् । अतिहायेत्यति–हाय । पूर्वाः । आहुतीरित्या–हुतीः । जुहोति । पशूनाम् । गोपीथाय॥३५॥

शम्नस्स्पर्शयति भूतानामग्निꣳ रुद्रस्य सप्तत्रिꣳशच्च ॥ ६ ॥

[10]पशवो वा इत्यादि ॥ अभिहोम उपरि होमः । अतिहाय होमः अतिलङ्घ्य होमः ॥

इति द्वितीये षष्ठे षष्ठोनुवाकः.

मनुः पृथिव्या यज्ञियमैच्छत्स घृतं निषिक्तमविन्दत्सोऽब्रवीत्कोऽस्येश्वरो यज्ञेऽपि कर्तोरिति तावब्रूतां मित्रावरुणौ गोरेवावमीश्वरौ कर्तोस्स्व इति तौ ततो गाꣳ समैरयताꣳ सा यत्र-

[1]मनुः । पृथिव्याः । यज्ञियम् । ऐच्छत् । सः । घृतम् । निषिक्तमिति नि-सिक्तम् । अविन्दत् । सः । अब्रवीत् । कः । अस्य । ईश्वरः । यज्ञे । अपीति । कर्तोः । इति । तौ । अब्रूताम् । मित्रावरुणाविति मित्रा-वरुणौ । गोः । एव । आवम् । ईश्वरौ । कर्तोः । स्वः । इति । तौ । ततः । गाम् । समिति । ऐरयताम् । सा । यत्रंयत्रेति यत्रं-यत्र ।

[1]अतः परं चत्वारोऽनुवाका इष्टिहौत्रब्राह्मणम् । मनुः पृथिव्या इत्यादि ॥ इडोपाह्वानविधिः । यज्ञार्हमन्विच्छत् । पृथिव्या निषिक्तं घृतं लब्धवान् उपलब्धवान् । वृष्टिरूपाया इडायाः कार्यं दृष्टवान् । उक्तं च 'वृष्टिर्वा इडा'* इति । अथाब्रवीत् प्रजापतिः कोऽस्य घृतस्य यज्ञेऽपि साधनभावं कर्तुमीश्वरः स्यात् । 'ईश्वरे तोसुन्कसुनौ'। अथ मित्रावरुणावब्रूतां गोरेव यज्ञे साधनभावं कर्तुं आवमीश्वरौ स्वः न कार्यभूतस्य घृत-

*तै. सं. १-७-२[12].

यत्र न्यक्रामत्ततो घृतमपीड्यत तस्माद्घृतपद्युच्यते तदस्यै जन्मोपहूतꣳ रथन्तरꣳ सह पृथिव्येत्याह ॥३६॥

न्यक्रामदिति नि—अक्रामत् । ततः । घृतम् । अपीड्यत । तस्मात् । घृतपदीति घृत—पदी । उच्यते । तत् । अस्यै । जन्म । [2]उपहूतमित्युप—हूतम् । रथन्तरमिति रथं—तरम् । सह । पृथिव्या । इति । आह ॥ ३६ ॥ इयम् । वै । रथन्तरमिति रथं—त-

स्येति । अत्रापीडायाः गोश्शरीरत्वादिडैव गौरुच्यते । यथोक्तं 'शरीरं वा अस्यैतदुपाह्वथाः '* इति । अथैवमुक्तवन्तौ मित्रावरुणौ गां गोशरीरां वृष्ट्यात्मिकामिडां समैरयतां यज्ञसाधनत्वेनागमयताम् । सा च यत्रयत्र न्यक्रामत् निर्गत्यापतत् गोपक्षे निमित्तं क्रामति स्म । ततो घृतमपीड्यत उत्पद्यते । अस्मादुदकं तस्मादिडा घृतपद्युच्यते वृष्टिद्वारेण घृतहेतुत्वात् गोरूपेण वा घृतस्य हेतुत्वात् । तदस्या इडाया जन्म यदिहोपह्वयते । घृतं पादेषु यस्यास्सा घृतपदी । 'कुम्भपदीषु च' इति पादस्य लोपः, 'पादोऽन्यतरस्याम्' इति ङीप्, 'पादः पत्' इति पद्भावः । एवं मनुना प्रथममुपलब्धत्वात् इडा मानवी । पदात् घृतपीडनात् घृतपदी । मित्रावरुणाभ्यां समीरितत्वान्मैत्रावरुणी ॥

[2]उपहूतं रथन्तरमित्यादिना इडोपाह्वानमन्त्रं व्याचष्टे—इयं वा

*तै. सं. १-७-२³.

इयं वै रथन्तरमिमामेव सहान्नाद्ये-
नोप ह्वयत उपहूतं वामदेव्यꣳ स-
हान्तरिक्षेणेत्याह पशवो वै वामदे-
व्यं पशूनेव सहान्तरिक्षेणोप ह्वय-
त उपहूतं बृहत्सह दिवेत्याहैरं वै

रम् । इमाम् । एव । सह । अन्नाद्येनेत्यन्न–अद्येन । उपेति । ह्वयते । [3]उपहूतमित्युप–हूतम् । वामदेव्यमिति वाम–देव्यम् । सह । अन्तरिक्षेण । इति । आह । पशवः । वै । वामदेव्यमिति वाम–देव्यम् । पशून् । एव । सह । अन्तरिक्षेण । उपेति । ह्वयते । [4]उपहूतमित्युप–हूतम् । बृहत् । सह । दिवा ।

---

इति ॥ रथन्तरं साम । दुःखतरणहेतुत्वादियं पृथिवी रथन्तरम् । अन्नाद्येनेति । पृथिवीशब्देन पृथिवीविकारोऽन्नमुच्यते । तस्मादन्नाद्येन पृथिवीमुपह्वयते । आत्मसमीपे करोति विधेयां करोति । 'निसमुपविभ्यो ह्वः' इत्यात्मनेपदम् ॥

[3]पशवो वा इति ॥ वननीयस्वभावत्वात् ॥

[4]ऐरमिति ॥ इरा वृष्टिः तत्र भवं सारं ऐरं तेन वृष्टिर्लक्ष्यते । दिवो वृष्टिं प्रवर्तयति ॥

बृहदिरामेव सह दिवोप ह्वयत उ-
पहूतास्सप्त होत्रा इत्याह होत्रा ए-
वोप ह्वयत उपहूता धेनुः ॥ ३७ ॥
सहर्षभेत्याह मिथुनमेवोप ह्वयत
उपहूतो भक्षस्सखेत्याह सोमपीथ-
मेवोप ह्वयत उपहूतां४ हो इत्या-

इति । आह । ऐरम् । वै । बृहत् । इराम् । एव । सह । दिवा । उपेति । ह्वयते । [5]उपहूता इत्युप–हूताः । सप्त । होत्राः । इति । आह । होत्राः । एव । उपेति । ह्वयते । [6]उपहूतेत्युप–हूता । धेनुः ॥३७॥ सहर्षभेति सह–ऋषभा । इति । आह । मिथुनम् । एव । उपेति । ह्वयते । [7]उपहूत इत्युप–हूतः । भक्षः । सखा । इति । आह । सोमपीथमिति सोम–पीथम् । एव । उपेति । ह्वयते । [8]उपहूतां४ इत्युप–हूता४म् । हो इति । इति । आह । आत्मा-

[5]होतृकान् पुनर्यागेषु प्रवर्तयन्ति ॥

[6]मिथुनमिति ॥ उपलक्षणत्वात्सर्वमिथुनानां प्रजनयितारमात्मानं करोति ॥

[7]सोमपीथमिति ॥ भक्ष्यत इति भक्षः सोमः सखा समानख्यानः तस्य पानं पुनःपुनः प्रवर्तयति ॥

[8]आत्मानमिति ॥ हो इत्यात्मोच्यते हे आत्मन् उपहूतः त्वम-

ह्यात्मानमेवोप ह्वयत आत्मा ह्युपहू-
तानां वसिष्ठ इडामुप ह्वयते पशवो
वा इडा पशूनेवोप ह्वयते चतुरुप ह्व-
यते चतुष्पादो हि पशवो मानवी-
त्याह मनुर्ह्येताम् ॥ ३८ ॥ अग्नेऽ-
पश्यद्घृतपदीत्याह यदेवास्यै पदा-

नम् । एव । उपेति । ह्वयते । आत्मा । हि । उप-
हूतानामित्युप—हूतानाम् । वसिष्ठः । इडाम् । उपे-
ति । ह्वयते । पशवः । वै । इडा । पशून् । एव । उपे-
ति । ह्वयते । चतुः । उपेति । ह्वयते । चतुष्पाद
इति चतुः—पादः । हि । पशवः । मानवी । इति ।
आह । मनुः । हि । एताम् ॥ ३८ ॥ अग्ने । अप-
श्यत् । घृतपदीति घृत—पदी । इति । आह ।
यत् । एव । अस्यै । पदात् । घृतम् । अपीड्यत ।

त्रोपहूत इति भावः । मम आत्मेतिवत् भेद उपचर्यते । आह्वाने प्लुतः । 'अणोऽप्रगृह्यस्य' इत्यनुनासिकः । न त्वात्मनोभिरक्षिताऽग्न्यादिरुपहूयते । तत्र आत्मन आह्वानेन कोऽर्थ आत्मनस्तत्राह—आत्मा हीति । अन्नादिषु मध्ये आत्मा वासयितृतमः तस्मादात्माऽप्युपहूयते इति । यद्वा—तस्मादिति । उच्चैरुपहूत इति । 'दूराद्धूते च' इति प्लुतस्यैवं व्याख्या । इडामुपह्वयत

द्वृतमपींड्यत तस्मांदेवमांह मैत्रा-
वरुणीत्यांह मित्रावरुंणौ ह्येनां॰
समैरंयतां ब्रह्मं देवकृंतमुपंहूतामि-
त्यांह ब्रह्मैवोपं ह्वयते दैव्यां अध्वर्यव
उपंहूता उपंहूता मनुष्यां इत्यांह

तस्मांत् । एवम् । आह । मैत्रावरुणीतिं मैत्रा–व-
रुणी । इतिं । आह । मित्रावरुंणाविति मित्रा–वरुं-
णौ । हि । एनाम् । समैरंयतामिति सं–ऐरंयताम् ।
[9]ब्रह्मं । देवकृंतमितिं देव–कृतम् । उपंहूतामित्यु-
पं–हूतम् । इतिं । आह । ब्रह्मं । एव । उपेतिं ।
ह्वयते । दैव्यांः । अध्वर्यवंः । उपंहूता इत्युपं–हूताः ।
उपंहूता इत्युपं–हूताः । मनुष्यांः । इतिं । आह ।
देवमनुष्यानितिं देव–मनुष्यान् । एव । उपेतिं ।

इति । वृष्टिरन्नं पशवो देवता वा इडा द्रव्याभिमानिनी तामुपा ह्वयते । इडोपहूतेत्यस्यार्थोऽनेन व्याख्यातः । उपहूतेडेति च स एवार्थः । बहुकृत्वो वचनमादरार्थम् । यथोक्तं 'अभ्यासेन भूयांसमर्थमधिगच्छति' इति । तत्रातिप्रसङ्गनिवृत्त्यर्थं चतुरुपह्वयत इत्युक्तम् । चतुष्पदां लाभश्चतुष्ट्वेन इडोपहूतेत्यस्याभ्यासाच्च । इत्थं मानवीत्यादि । गतम् । घृतपदीत्यादि । गतम् ॥

[9]ब्रह्म परिबृढं यज्ञाख्यं कर्म देवेन ब्रह्मणा ऋत्विग्भिर्वा-

देवमनुष्यानेवोप ह्वयते य इमं यज्ञम-
वान् ये यज्ञपतिं वर्धानित्याह ॥३१॥
यज्ञाय चैव यजमानाय चाशिषमा
शास्त उपहूते द्यावापृथिवी इत्याह
द्यावापृथिवी एवोप ह्वयते पूर्वजे

ह्वयते । [10]ये । इमम् । यज्ञम् । अवान् । ये । य-
ज्ञपतिमिति यज्ञ–पतिम् । वर्धान् । इति । आह ॥
३१॥ यज्ञाय । च । एव । यजमानाय । च । आशिष-
मित्या–शिषम् । एति । शास्ते । [11]उपहूते इत्युप-
हूते । द्यावापृथिवी इति द्यावा–पृथिवी । इति ।
आह । द्यावापृथिवी इति द्यावा–पृथिवी । एव ।
उपेति । ह्वयते । पूर्वजे इति पूर्व–जे । ऋतावरी

कृतम् । देवमनुष्यानिति । देवमनुष्यांश्चाध्वरस्य नेतॄनुपह्वयते ॥

[10]यज्ञाय चैवेत्यादि ॥ गतम् ॥

[11]पूर्वजे इति ॥ सर्वविकारेभ्यः पूर्वमुत्पन्ने । ऋतावरी सत्यवत्यौ वा तत्साधनत्वेन । मत्वर्थीये मतुपि 'वनो र च' इति, 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । देवनशीले देव्यौ देवाः पुत्राः ययोस्तौ तादृश्यौ ॥

ऋतावरी इत्याह पूर्वजे ह्येते ऋता-
वरी देवी देवपुत्रे इत्याह देवी ह्येते
देवपुत्रे उपहूतोयं यजमान इत्याह
यजमानमेवोप ह्वयत उत्तरस्यां दे-
वयज्यायामुपहूतो भूयसि हविष्क-
रण उपहूतो दिव्ये धामन्नुपहूतः॥४०

इत्यृत–वरी।इति।आह। पूर्वजे इति पूर्व–जे। हि। एते इति। ऋतावरी इत्यृत–वरी। देवी इति। देवपुत्रे इति देव–पुत्रे। इति। आह। देवी इति। हि। एते इति। देवपुत्रे इति देव–पुत्रे। उपहूत इत्युप–हूतः। अयम्। यजमानः। इति। आह। यजमानम्। एव। उपेति। ह्वयते। [12]उत्त-रस्यामित्युत्–तरस्याम्। देवयज्यायामिति देव–यज्यायाम्। उपहूत इत्युप–हूतः। भूयसि। हवि-ष्करण इति हविः–करणे। उपहूत इत्युप–हूतः। दिव्ये। धामन्न्। उपहूत इत्युप–हूतः॥ ४० ॥

---

[12]प्रजा वा इत्यादि ॥ दर्शपूर्णमासाद्यविच्छेदः प्रजाहेतुः। इदमसीदमसीत्यादि । प्रजा वा पशवः स्वर्गो वा यद्यज्ञस्य प्रियं धाम तादात्म्येन यज्ञे यजमानः उपहूतो भवति । अछम्ब-

इत्याह प्रजा वा उत्तरा देवयज्या पशवो भूयो हविष्करणꣳ सुवर्गो लोको दिव्यं धामेदमसीदमसीत्येव यज्ञस्य प्रियं धामोप ह्वयते विश्वम- स्य प्रियमुपहूतमित्याहाछम्बट्कारमे- वोप ह्वयते ॥ ४१ ॥

इति । आह । प्रजेति प्र–जा । वै । उत्तरेत्युत्–तरा । देवयज्येति देव–यज्या । पशवः । भूयः । हविष्क- रणमिति हविः–करणम् । सुवर्ग इति सुवः–गः । लोकः । दिव्यम् । धाम । इदम् । असि । इदम् । असि । इति । एव । यज्ञस्य । प्रियम् । धाम । उपेति । ह्वयते । विश्वम् । अस्य । प्रियम् । उप- हूतमित्युप–हूतम् । इति । आह । अछम्बट्कारमि- त्यछम्बट्–कारम् । एव । उपेति । ह्वयते ॥४१॥

आह धेनुरेतां वर्धानित्याह धाम- न्नुपहूतश्चतुस्त्रिꣳशच्च ॥ ७ ॥

ट्कारमेवेति । बडिति सत्यनाम । तस्य छादनं छम्बट्का : किञ्चिद- प्यपरिच्छाद्य सर्वमप्यस्य यजमानस्य प्रियमुपह्वयते ॥

इति द्वितीये षष्ठे सप्तमोऽनुवाकः ॥

पशवो वा इडा स्वयमा दत्ते का-
ममेवात्मना पशूनामा दत्ते न ह्य-
न्यः कामं पशूनां प्र यच्छति वा-
चस्पतये त्वा हुतं प्राश्नामीत्याह वा-
चमेव भागधेयेन प्रीणाति सदस-
स्पतये त्वा हुतं पाश्नामीत्याह स्व-
गाकृत्यै चतुरवत्तं भवति हविर्वै च-

[1]पशवः । वै । इडा । स्वयम् । एति । दत्ते । कामम् । एव । आत्मना । पशूनाम् । एति । दत्ते । न । हि । अन्यः । कामम् । पशूनाम् । प्रयच्छ-तीति प्र—यच्छति । [2]वाचः । पतये । त्वा । हुतम् । प्रेति । अश्नामि । इति । आह । वाचम् । एव । भागधेयेनेति भाग—धेयेन । प्रीणाति । सदसः । पतये । त्वा । हुतम् । प्रेति । अश्नामि । इति । आह । स्वगाकृत्या इति स्वगा—कृत्यै । चतुरवत्त-मिति चतुः—अवत्तम् । भवति । हविः । वै । चतुर-

[1]पशवो वा इत्यादि ॥ इडायाः स्वयमादानव्याजेन पशूनामेव कामं स्वयमादत्ते पशुभ्यः प्रदातुं हस्ते गृह्णाति । न ह्यन्यः पशूनां कामं प्रदातुमर्हतीति ॥

[2]स्वगाकृतिः यथा स्वभागकरणम् । ‘ऊर्यादिच्विडाचश्च’

तुरवत्तं पशवश्चतुरवत्तं यद्धोता प्रा-
श्नीयाद्धोता ॥ ४२ ॥ आर्तिमार्छे-
द्यदग्नौ जुहुयाद्रुद्राय पशूनपि दध्या-
दपशुर्यजमानस्स्याद्वाचस्पतये त्वा
हुतं प्राश्नामीत्याह परोक्षमेवैनज्जुहो-
ति सदसस्पतये त्वा हुतं प्राश्नामी-
त्याह स्वगाकृत्यै प्राश्नन्ति तीर्थ एव

वत्तमिति चतुः—अवत्तम् । पशवः । चतुरवत्तमिति चतुः—अवत्तम् । यत् । होता । प्राश्नीयादिति प्र—अश्नीयात् । होता ॥ ४२ ॥ आर्तिम् । एति । ऋच्छेत् । यत् । अग्नौ । जुहुयात् । रुद्राय । पशून् । अपीति । दध्यात् । अपशुः । यजमानः । स्यात् । [3]वाचः । पतये । त्वा । हुतम् । प्रेति । अश्नामि । इति । आह । परोक्षमिति परः—अक्षम् । एव । एनत् । जुहोति । सदसः । पतये । त्वा । हुतम् । प्रेति । अश्नामि । इति । आह । स्वगाकृत्या इति स्वगा—कृत्यै । प्रेति । अश्नन्ति । तीर्थे । एव । प्रेति ।

इति गतित्वात् 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । चतुरवत्तमित्यादि । गतम्* ॥

[3]परोक्षमिति ॥ कोऽत्र प्राश्नाति प्रहूयत एवेदं वाचस्पतय

* तै. सं. २-६-३[3].

प्राश्नन्ति दक्षिणां ददाति तीर्थ एव
दाक्षिणां ददाति वि वा एतद्यज्ञम् ॥
४३ ॥ छिन्दन्ति यन्मध्यतः प्राश्न-
न्त्यद्भिर्मार्जयन्त आपो वै सर्वा दे-
वता देवताभिरेव यज्ञꣳ सं तन्वन्ति
देवा वै यज्ञाद्रुद्रमन्तरायन्त्स यज्ञम-

अश्नन्ति । दक्षिणाम् । ददाति । तीर्थे । एव । दक्षि-
णाम् । ददाति । वीति । वै । एतत् । यज्ञम्॥४३॥
छिन्दन्ति । यत् । मध्यतः । प्राश्नन्तीति प्र—अश्न-
न्ति । [4]अद्भिरित्यत्—भिः । मार्जयन्ते । आपः ।
वै । सर्वाः । देवताः । देवताभिः । एव । यज्ञम् ।
समिति । तन्वन्ति । [5]देवाः । वै । यज्ञात् । रुद्रम्।
अन्तः । आयन् । सः । यज्ञम् । अविध्यत् । तम्।

---

इति प्रच्छादनं परोक्षत्वम् । तेन होतुः प्राशननिमित्ताया आर्ते-रप्रसङ्गः । प्राश्नातीति । सर्वेऽपि यजमानपञ्चमाः सह प्राश्न-न्तीति । तीर्थे दुःखोत्तरणावसरे प्राशनं दक्षिणादानं च कृतं भवतीति । ऋत्विग्भ्यः पुरोडाशप्रदानं दक्षिणा । वि वा एतदि-त्यादि । गतम् ॥

[4]मार्जयन्त इति ॥ 'मनो ज्योतिः'* इत्यन्तर्वेदि मार्जनम् ॥

[5]देवा वै यज्ञादिति ॥ अन्तरणं विस्मरणाद्यज्ञेऽननुप्रवेशनम् ।

---

*तै. सं. १-५-३[7].

विध्यत्तं देवा अभि समगच्छन्त क-
ल्पतां न इदमिति तेऽब्रुवन्त्स्विष्टं वै नं
इदं भविष्यति यदिमꣳ राधयिष्या-
म इति तत्स्विष्टकृतस्स्विष्टकृत्त्वं
तस्याविद्धं निः ॥ ४४ ॥ अकृन्तन्
यवेन संमितं तस्माद्यवमात्रमवं द्ये-

देवाः । अभि । समिति । अगच्छन्त । कल्पताम् । नः । इदम् । इति । ते । अब्रुवन् । स्विष्टमिति सु-इष्टम् । वै । नः । इदम् । भविष्यति । यत् । इमम् । राधयिष्यामः । इति । तत् । स्विष्टकृत इति स्विष्ट-कृतः । स्विष्टकृत्त्वमिति स्विष्टकृत्-त्वम् । तस्य । आविद्धमित्या-विद्धम् । निरिति ॥ ४४ ॥ अकृन्तन् । यवेन । संमितमिति सं-मितम् । तस्मात् । यवमात्रमिति यव-मात्रम् । अवेति । द्येत् । यत् । ज्यायः । अवद्येदित्यव-द्येत् ।

कल्पनं कर्मणोऽविकलसम्पत्तिः । अथ देवा अब्रुवन् इमं राधयिष्यामः तेन चैव यज्ञः स्विष्टकृतं भवतीति । ततः स्विष्टकृतमाराधयित्वा यज्ञस्य तदाविद्धं यवमात्रं निष्कृष्य तेन प्राशित्रमकुर्वन् तस्माद्यदि यवमात्राज्ज्यायः प्रवृद्धमवद्येत् यज्ञस्य रोपयेत् विमोहयेत् । रुप विमोहने । लिङ्गं च—'मा रूरुपाम यज्ञस्य'* इति ॥

* तै. ब्रा. ३-७-५.

द्यज्ज्यायोऽवद्येद्रोपयेत्तद्यज्ञस्य य-
दुपं च स्तृणीयादभि च धारयेदुभ-
यतस्सꣳश्वायि कुर्यादवदायाभि धा-
रयति द्विस्सं पद्यते द्विपाद्यजमानः
प्रतिष्ठित्यै यत्तिरश्चीनमतिहरेदनभि-
विद्धं यज्ञस्याभि विध्येदग्रेण परि हर-
ति तीर्थेनैव परि हरति तत्पूष्णे पर्य-

रोपयेत् । तत् । यज्ञस्य । [6]यत् । उपेति । च ।
स्तृणीयात् । अभीति । च । धारयेत् । उभयत-
स्सꣳश्वायीत्युभयतः-सꣳश्वायि । कुर्यात् । अव-
दायेत्यव-दाय । अभीति । धारयति । द्विः । समि-
ति । पद्यते । द्विपादिति द्वि-पात् । यजमानः ।
प्रतिष्ठित्या इति प्रति-स्थित्यै । यत् । तिरश्चीनम् ।
अतिहरेदित्यति-हरेत् । अनभिविद्धमित्यनभि-
विद्धम् । यज्ञस्य । अभीति । विध्येत् । अग्रेण ।
परीति । हरति । तीर्थेन । एव । परीति । हरति ।
[7]तत् । पूष्णे । परीति । अहरन्न् । तत् ॥ ४५ ॥

---

[6]यदित्यादि ॥ उभयपार्श्वरुग्णं उभयतः संशायि । यत्तिर-
श्चीनमित्यादि ॥ गतम् ॥

[7]तदित्यादि ॥ तद्देवतानिष्ठं प्राशित्रं देवाः पूष्णे प्रथमं पर्य-

हरन्तत् ॥ ४५ ॥ पूषा प्राश्यं दतोऽ-
रुणत्तस्मात्पूषा प्रपिष्टभागोऽदन्तको
हि तं देवा अब्रुवन्वि वा अयमा-
र्ध्यप्राशित्रियो वा अयमभूदिति त-
द्बृहस्पतये पर्यहरन्त्सोऽबिभेद्बृहस्पति-
रित्थं वाव स्य आर्तिमाऽरिष्यतीति
स एतं मन्त्रमपश्यत्सूर्यस्य त्वा च-

पूषा । प्राश्येति प्र–अश्यं । दतः । अरुणत् । तस्मात् । पूषा । प्रपिष्टभाग इति प्रपिष्ट–भागः । अदन्तकः । हि । तम् । देवाः । अब्रुवन् । वीति । वै । अयम् । आर्धि । अप्राशित्रिय इत्यप्र–अशित्रियः । वै । अयम् । अभूत् । इति । तत् । बृहस्पतये । परीति । अहरन् । सः । अबिभेत् । बृहस्पतिः । इत्थम् । वाव । स्यः । आर्तिम् । एति । अरिष्यति । इति । सः । एतम् । मन्त्रम् । अपश्यत् । सूर्यस्य । त्वा । चक्षुषा । प्रतीति । पश्या-

---

हरन्, तत्प्राश्य पूषा आत्मीयान् दन्तानरुणत् । रुद्धात् भग्नात् तस्मादद्यत्वेऽपि पूषा प्रपिष्टभागो भवति, दन्तहीनत्वात् । एव-मयं वृद्धाङ्गोऽप्राशित्रार्ह इति देवाः तं हित्वा तद्बृहस्पतये पर्य-

क्षुषा प्रति पश्यामीत्यब्रवीन्न हि सू-
र्यस्य चक्षुः ॥ ४६ ॥ किं चन हि-
नस्ति सोऽबिभेत्प्रतिगृह्णन्तं मा हिꣳ-
सिष्यतीति देवस्य त्वा सवितुः प्र-
सवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ता-
भ्यां प्रति गृह्णामीत्यब्रवीत्सवितृप्र-
सूत एवैनद्ब्रह्मणा देवताभिः प्रत्य-

मि । इति । अब्रवीत् । न । हि । सूर्यस्य । चक्षुः ॥ ४६ ॥ किम् । चन । हिनस्ति । सः । अबिभेत्। प्रतिगृह्णन्तमिति प्रति–गृह्णन्तम् । मा । हिꣳसिष्यति । इति । देवस्य । त्वा । सवितुः । प्रसव इति प्र–सवे । अश्विनोः । बाहुभ्यामिति बाहु–भ्याम् । पूष्णः । हस्ताभ्याम् । प्रतीति । गृह्णामि । इति । अब्रवीत् । सवितृप्रसूत इति सवितृ–प्रसूतः । एव । एनत् । ब्रह्मणा । देवताभिः । प्रतीति । अगृह्णात् । सः । अबिभेत् । प्रा-

हरन् । अथ बृहस्पतिः एषोऽहमपि एतत्प्राशनेनास्तं गमिष्यामीति बिभ्यत् 'सूर्यस्य त्वा' इतीमं मन्त्रं दृष्ट्वा तेन प्राशित्रमपश्यत् । न हीति । सूर्यस्य सम्बन्धि सर्वलोकस्य चक्षुस्स्थानीयं मण्डलं सर्वलोकोपजीवि न हि कस्य चिद्धिंस्यं भवति । तस्मात्सूर्यः

गृह्णात्सोऽबिभेत्प्राश्नन्तं मा हिꣳसि-
ष्यतीत्यग्नेस्त्वाऽऽस्येन प्राश्नामीत्य-
ब्रवीन्न ह्यग्नेरास्यं किं चन हिनस्ति
सोऽबिभेत् ॥ ४७ ॥ प्राशितं मा
हिꣳसिष्यतीति ब्राह्मणस्योदरेणेत्य-
ब्रवीन्न हि ब्राह्मणस्योदरं किं चन
हिनस्ति बृहस्पतेर्ब्रह्मणेति स हि ब्र-

प्राश्नन्तमिति प्र–अश्नन्तम् । मा । हिꣳसिष्यति । इति । अग्नेः । त्वा । आस्येन । प्रेति । अश्नामि । इति । अब्रवीत् । न । हि । अग्नेः । आस्यम् । किम् । चन । हिनस्ति । सः । अबिभेत् ॥ ४७ ॥ प्राशितमिति प्र–अशितम् । मा । हिꣳसिष्यति । इति । ब्राह्मणस्य । उदरेण । इति । अब्रवीत् । न । हि । ब्राह्मणस्य । उदरम् । किम् । चन । हिनस्ति । बृहस्पतेः । ब्रह्मणा । इति । सः । हि ।

पश्यति नाहमिति । तं दृष्ट्वा पश्यन्न पश्यतीति न हिंस्यः । अथ 'देवस्य त्वा' इति मन्त्रेण सवित्राऽनुज्ञातो देवताभावेन प्रतिगृह्णन् प्रतिगृह्णातीति न बाध्यः । 'अग्नेस्त्वाऽऽस्येन' इत्यग्न्यास्यबुद्ध्या प्राश्नन् प्राश्नातीति, न बाध्यः । ब्राह्मणस्योदरेणेति । ब्राह्मणोदरधिया प्राशित्रं स्थापयन् प्राशितवानिति न हिंसितव्यः । स हीति । बृहस्पतिर्हि ब्राह्मणतरः तस्मादेवमुच्यत इति ॥

ह्मिष्ठोऽप वा एतस्मात्प्राणाः क्राम-
न्ति यः प्राशित्रं प्राश्नात्यद्भिर्मार्जयि-
त्वा प्राणान्त्सं मृशतेऽमृतं वै प्राणा
अमृतमापः प्राणानेव यथास्थानमु-
प ह्वयते ॥ ४८ ॥

ब्रह्मिष्ठः । [8]अपेति । वै । एतस्मात् । प्राणा इति प्र–अनाः । क्रामन्ति । यः । प्राशित्रमिति प्र–अशित्रम् । प्राश्नातीति प्र–अश्नाति । अद्भिरित्यत्–भिः । मार्जयित्वा । प्राणानिति प्र–अनान् । सम्–इति । मृशते । अमृतम् । वै । प्राणा इति प्र–अनाः । अमृतम् । आपः । प्राणानिति प्र-अनान् । एव । यथास्थानमिति यथा–स्थानम् । उपेति । ह्वयते ॥ ४८ ॥

प्राश्नीयाद्धोता यज्ञं निरहरन्तच्चक्षुरास्यं किं
चन हिनस्ति सोऽबिभेच्चतुश्चत्वारिंशच्च ॥ ८ ॥

[8]अप वा इत्यादि ॥ गतम् ॥

इति द्वितीये षष्ठेऽष्टमोऽनुवाकः.

———

अग्नीध आ दधात्यग्निमुखानेवर्तून्प्रीणाति समिधमा दधात्युत्तरासामाहुतीनां प्रतिष्ठित्या अथो समिद्वत्येव जुहोति परिधीन्त्सं मार्ष्टि पुनात्येवैनान्त्सकृत्सकृत्सं मार्ष्टि पराङिव ह्येतर्हि यज्ञश्चतुस्सं पद्यते चतुष्पादः पशवः पशूनेवाव रुन्धे

[1]अग्नीध इत्यग्नि–इधे । एति । दधाति । अग्निमुखानित्यग्नि–मुखान् । एव । ऋतून् । प्रीणाति । समिधमिति सं–इधम् । एति । दधाति । उत्तरासामित्युत्–तरासाम् । आहुतीनामित्या–हुतीनाम् । प्रतिष्ठित्या इति प्रति–स्थित्यै । अथो इति । समिद्वतीति समित्–वति । एव । जुहोति । परिधीनिति परि–धीन् । समिति । मार्ष्टि । पुनाति । एव । एनान् । सकृत्सकृदिति सकृत्–सकृत् । समिति । मार्ष्टि । पराङ् । इव । हि । एतर्हि । यज्ञः । चतुः । समिति । पद्यते । चतुष्पाद इति चतुः–पादः । पशवः । पशून् । एव । अवेति । रुन्धे ।

[1]अग्नीध इति ॥ आग्नीध्रभागविधिः । ऋतून् कालस्य प्रव-

ब्रह्मन्प्र स्थास्याम इत्याहात्र वा ए-
तर्हि यज्ञश्श्रितः ॥ ४१ ॥ यत्र
ब्रह्मा यत्रैव यज्ञश्श्रितस्तत एवैन-
मा रभते यद्धस्तेन प्रमीवेद्वेपनस्स्या-
द्यच्छीर्ष्णा शीर्षक्तिमान्त्स्याद्यत्तू-
ष्णीमासीतासंप्रत्तो यज्ञस्स्यात्प्र ति-
ष्ठेत्येव ब्रूयाद्वाचि वै यज्ञश्श्रितो य-
त्रैव यज्ञश्श्रितस्तत एवैनꣳ सं प्र

ब्रह्मन्न् । प्रेति । स्थास्यामः । इति । आह । अत्र । वै । एतर्हि । यज्ञः । श्रितः ॥ ४१ ॥ यत्र । ब्रह्मा । यत्र । एव । यज्ञः । श्रितः । ततः । एव । एनम् । एति । रभते । यत् । हस्तेन । प्रमीवेदिति प्र—मीवेत् । वेपनः । स्यात् । यत् । शीर्ष्णा । शीर्षक्तिमानिति शीर्षक्ति—मान् । स्यात् । यत् । तूष्णीम् । आसीत । असंप्रत्त इत्यसं—प्रत्तः । यज्ञः । स्यात् । प्रेति । तिष्ठ । इति । एव । ब्रूयात् । वाचि । वै । यज्ञः । श्रितः । यत्र । एव । यज्ञः । श्रितः । ततः । एव । एनम् । सम् । प्रेति । यु-

र्तकान् अग्निसहितान् प्रीणयति । फिडन्तोदात्तत्वम् ॥

यच्छति देवं सवितरेतत्ते प्र ॥५०॥
आहेत्याह प्रसूत्यै बृहस्पतिर्ब्रह्मेत्याह
स हि ब्रह्मिष्ठस्स यज्ञं पाहि स य-
ज्ञपतिं पाहि स मां पाहीत्याह य-
ज्ञाय यजमानायात्मने तेभ्य एवा-
शिषमा शास्तेऽनार्त्या आश्राव्याह
देवान् यजेति ब्रह्मवादिनो वदन्तीष्टा
देवता अथ कतम एते देवा इति
छन्दाꣳसीति ब्रूयाद्गायत्रीं त्रिष्टुभम्

च्छति । देवं । सवितः । एतत् । ते । प्रेति ॥५०॥
आह । इति । आह । प्रसूत्या इति प्र—सूत्यै ।
बृहस्पतिः । ब्रह्मा । इति । आह । सः । हि ।
ब्रह्मिष्ठः । सः । यज्ञम् । पाहि । सः । यज्ञपति-
मिति यज्ञ—पतिम् । पाहि । सः । माम् । पाहि ।
इति । आह । यज्ञाय । यजमानाय । आत्मने ।
तेभ्यः । एव । आशिषमित्या—शिषम् । एति ।
शास्ते । अनार्त्यै । आश्राव्येत्या—श्राव्य । आह ।
देवान् । यज । इति । ब्रह्मवादिन इति ब्रह्म—वा-
दिनः । वदन्ति । इष्टाः । देवताः । अथ । कतमे ।
एते । देवाः । इति । छन्दाꣳसि । इति । ब्रूयात् ।

॥ ५१ ॥ जगतीमित्यथो खल्वाहु-
र्ब्राह्मणा वै छन्दाꣳसीति तानेव
तद्यजति देवानां वा इष्टा देवता
आसन्नथाग्निर्नोदज्वलत्तं देवा आहु-
तीभिरनूयाजेष्वन्वविन्दन् यदनूया-
जान् यजत्यग्निमेव तत्समिन्ध एत-
दुर्वै नामासुर आसीत्स एतर्हि यज्ञ-
स्याशिषमवृङ्क्त यद्ब्रूयादेतत् ॥ ५२ ॥

गायत्रीम् । त्रिष्टुभम् ॥ ५१ ॥ जगतीम् । इति । अथो इति । खलु । आहुः । ब्राह्मणाः । वै । छन्दाꣳसि । इति । तान् । एव । तत् । यजति । देवानाम् । वै । इष्टाः । देवताः । आसन् । अथ । अग्निः । न । उदिति । अज्वलत् । तम् । देवाः । आहुतीभिरित्याहुति-भिः । अनूयाजेष्वित्यनु-याजेषु । अन्विति । अविन्दन् । यत् । अनूयाजानित्यनु-याजान् । यजति । अग्निम् । एव । तत् । समिति । इन्धे । एतदुः । वै । नाम । आसुरः । आसीत् । सः । एतर्हि । यज्ञस्य । आशिषमित्या-शिषम् । अवृङ्क्त । यत् । ब्रूयात् । एतत् ॥ ५२ ॥

उ द्यावापृथिवी भद्रमभूदित्येतदुमे-
वासुरं यज्ञस्याशिषं गमयेदिदं द्या-
वापृथिवी भद्रमभूदित्येव ब्रूयाद्यज-
मानमेव यज्ञस्याशिषं गमयत्याध्मे
सूक्तवाकमुत नमोवाकमित्याहेदम-
रात्स्मेति वावैतदाहोपश्रितो दिवः
पृथिव्योरित्याह द्यावापृथिव्योर् हि

उ. । द्यावापृथिवी इति द्यावा–पृथिवी । भद्रम् । अभूत् । इति । एतत् । उम् । एव । आसुरम् । यज्ञस्य । आशिषमित्या–शिषम् । गमयेत् । इदम् । द्यावापृथिवी इति द्यावा–पृथिवी । भद्रम् । अभूत् । इति । एव । ब्रूयात् । यजमानम् । एव । यज्ञस्य । आशिषमित्या–शिषम् । गमयति । आध्मे । सूक्तवाकमिति सूक्त–वाकम् । उत । नमोवाकमिति नमः–वाकम् । इति । आह । इदम् । अरात्स्म । इति । वाव । एतत् । आह । उपश्रित इत्युप–श्रितः । दिवः । पृथिव्योः । इति । आह । द्यावापृथिव्योरिति द्यावा–पृथिव्योः । हि । यज्ञः । उपश्रित इत्युप–श्रितः । ओमन्वती इत्योमन्न्–

यज्ञ उपश्रित ओमन्वती तेऽस्मिन्
यज्ञे यजमान द्यावापृथिवी॥ ५३ ॥
स्तामित्याहाशिषमेवैतामा शास्ते
यद्ब्रूयात्सूपावसाना चं स्वध्यवसा-
ना चेति प्रमायुको यजमानस्स्या-
द्यदा हि प्रमीयतेऽथेमामुपावस्यति
सूपचरणा चं स्वधिचरणा चेत्येव

वती । ते । अस्मिन्न् । यज्ञे । यजमान । द्यावा-पृथिवी इति द्यावा-पृथिवी ॥ ५३ ॥ स्ताम् । इति । आह । आशिषमित्या-शिषम् । एव । एताम् । एति । शास्ते । [2]यत् । ब्रूयात् । सूपावसानेति सु-उपावसाना । च । स्वध्यवसानेति सु-अध्यवसाना । च । इति । प्रमायुक इति प्र-मायुकः । यजमानः । स्यात् । यदा । हि । प्रमीयत इति प्र-मीयते । अथ । इमाम् । उपावस्यतीत्युप-अवस्यति । सूपचरणेति सु-उपचरणा । च । स्वधिचरणेति

---

[2]यदा हीत्यादि ॥ मृत्युभिः पृथिवीमुपेत्यावस्यतीति । एवमिदं शाखान्तरीयं पाठं निन्दित्वा पाठान्तरं दर्शयति । सूपचरणा चेत्यादि । सुष्ठु इमामुपेत्य चरन्ति जन्तव इति सूपचरणा पृथिवी । सुष्ठु इमामधिरुह्य चरन्तीति स्वधिचरणा द्यौः ।

ब्रूयाद्वरीयसीमेवास्मै गव्यूतिमा शा-
स्ते न प्रमायुको भवति तयोरा-
विद्यग्निरिदः हविरजुषतेत्याह या
अयाक्ष्म ॥ ५४ ॥ देवतास्ता अरी-
रधामेति वावैतदाह यन्न निर्दिशेत्प्र-

सु—अधिचरणा । च । इति । एव । ब्रूयात् । वरीयसीम् । एव । अस्मै । गव्यूतिम् । एति । शास्ते । न । प्रमायुक इति प्र—मायुकः । भवति । [3]तयोः । आविदीत्या—विदि । अग्निः । इदम् । हविः । अजुषत । इति । आह । याः । अयाक्ष्म ॥५४॥ देवताः । ताः । अरीरधाम । इति । वाव । एतत् । आह । यत् । न । निर्दिशेदिति निः—दि-

'छन्दसि गत्यर्थेभ्यः' इति युच्, बहुव्रीहिर्वा । वरीयसीमुरुतरां गव्यूतिं गवां सुखसञ्चारस्थानं द्यावापृथिव्यात्मकं यजमानायाशास्ते । 'गोर्यूतौ छन्दसि' इत्यवादेशः । 'ऊतियूति' इति क्तिनि यूतिशब्दो निपातितः । विकृतत्वान्नावगृह्यते ॥

[3]तयोराविदीत्यादि ॥ तयोः द्यावापृथिव्योः आविदि आभिमुख्येन लाभे सति अग्निरिदं हविरजुषतासेवत, आत्मीयं च महतेजः अवीवृधत अवर्धयत् । ज्यायः प्रशस्तं चाकृत कृतवान् । यस्मादेवमग्न्यादिका देवता अयाक्ष्म इष्टवन्तो वयं ता अरीरधाम,

तिवेशं यज्ञस्याशीर्गच्छेदा शास्तेऽ-
यं यजमानोसावित्याह निर्दिश्यैवै-
नꣳ सुवर्गं लोकं गमयत्यायुरा शा-
स्ते सुप्रजास्त्वमा शास्त इत्याहा-

शेत् । प्रतिवेशमिति प्रति–वेशम् । यज्ञस्य । आ-शीरित्या–शीः । गच्छेत् । एति । शास्ते । अयम् । यजमानः । असौ । इति । आह । निर्दिश्येति निः–दिश्य । एव । एनम् । सुव-र्गमिति सुवः–गम् । लोकम् । गमयति । [4]आयुः । एति । शास्ते । सुप्रजास्त्वमिति सुप्रजाः–त्वम् । एति । शास्ते । इति । आह । आशिषमित्या–

तेजःप्रभृतिभिश्च समृद्धा वयमकार्ष्मेति । एतदस्य मन्त्रभागप्रतिपाद्यमिति दर्शयति । यन्नेति । एतन्नामा अयं यजमान आशास्ते इति यदि विशिष्टं न निर्दिश्येत तदा यज्ञस्याशीः आशासनीयमायुरादिकं यज्ञफलं प्रतिवेशं पार्श्वस्थं यं कं चित् गच्छेत्, तस्मादयं भवदत्तशर्मा यजमान इति निर्दिश्य एनमेव स्वर्गं गमयतीति आयुरादि दिव्यधामपर्यन्तं विश्वं प्रियं प्रापयतीति यावत् ॥

[4]आशिषमेवैतामिति ॥ प्रसिद्धपदार्थके पदे इत्यर्थः । प्राणा वै सजाता इति । समानजन्मानः प्राणास्सजाताः तेषां वनस्याशासनात् प्राणा अनन्तरिता अनिष्टा भवन्ति । तदाग्निर्देव

शिर्षमेवैतामा शास्ते सजातवनु-
स्यामा शास्त इत्याह प्राणा वै
संजाताः प्राणानेव ॥ ५५ ॥ नान्त-
रेति तदग्निर्देवो देवेभ्यो वनते वय-
मग्नेर्मानुषा इत्याहाग्निर्देवेभ्यो वनुते

शिर्षम् । एव । एताम् । एति । शास्ते । सजातवनस्यामिति सजात—वनस्याम् । एति । शास्ते । इति । आह । प्राणा इति प्र—अनाः । वै । सजाता इति स—जाताः । प्राणानिति प्र—अनान् । एव ॥ ५५ ॥ न । अन्तः । एति । तत् । अग्निः । देवः । देवेभ्यः । वनते । वयम् । अग्नेः । मानुषाः । इति । आह । अग्निः । देवेभ्यः । वनुते । वयम् । मनुष्येभ्यः । इति । वाव । एतत् । आह ।

---

इत्यादि । तदाशासनीयं अग्निस्स्वयं देवस्सन् देवेभ्यो देवसकाशाद्वा वनते अस्मै यजमानाय दातुमुपादत्ते दिव्यान् भोगान् अस्मादुत्पादयति । वयं तु मनुष्यास्सन्तो मनुष्येभ्यो मानुषान् भोगान्. यजमानार्थं वनुमः अग्नेरस्यैव प्रसादादित्येषोऽर्थः प्रतिपादयितुं अत्राभिप्रेत इति दर्शयितुं मनुष्येभ्य इति पदोपस्कारेण व्याचष्टे । अथ यदि विज्ञायते अग्निर्देवेभ्यो वनुते वयमग्नेस्सकाशादिति तदा एतावति प्रतिपिपादयिषिते देवो मनुष्यानिति पदद्वयोपपादनमकिञ्चित्करं स्यात् ॥

वयं मनुष्येभ्य इति वावैतदाहेह
गतिर्वामस्येदं च नमो देवेभ्य इत्या-
ह याश्चैव देवता यजति याश्च न ता-
भ्य एवोभयीभ्यो नमस्करोत्यात्म-
नोऽनार्त्यै ॥ ५६ ॥

देवा वै यज्ञस्य स्वगाकर्तारं नावि-

[5]इह । गतिः । वामस्य । इदम् । च । नमः । दे-
वेभ्यः । इति । आह । याः । च । एव । देवताः ।
यजंति । याः । च । न । ताभ्यः । एव । उभयी-
भ्यः । नमः । करोति । आत्मनः । अनार्त्यै ॥५६॥

श्रितस्ते प्र त्रिष्टुभंमेतद्द्यावापृथिवी या अया-
क्ष्म प्राणानेव षट्चत्वारिꣳशच्च ॥१॥

[1]देवाः । वै । यज्ञस्य । स्वगाकर्तारमिति स्व-

[5]याश्चैवेत्यादि ॥ गतम् । प्रस्तराख्यमन्नं सर्वेभ्यो देवेभ्यः क्रियत इति । अनिष्टा देवता आर्तिमस्य नोत्पादयन्ति ॥

इति द्वितीये षष्ठे नवमोनुवाकः.

---

[1]देवा वै यज्ञस्येत्यादि ॥ असङ्करेण हवींषि स्वस्वदेवतायै यो गमयिता स स्वगाकर्ता शंयुनामा बृहस्पतिपुत्रोभवत् । सः

न्दन्ते शंयुं बार्हस्पत्यमब्रुवन्निमं नो यज्ञꣳ स्वगा कुर्विति सोऽब्रवीद्वरं वृणै यदेवाब्राह्मणोक्तोऽश्रद्दधानो यजातै सा मे यज्ञस्याशीरसदिति तस्माद्यदब्राह्मणोक्तोऽश्रद्दधानो यजते शंयुमेव तस्य बार्हस्पत्यं यज्ञ-

गा—कर्तारम् । न । अविन्दन्न् । ते । शंयुमिति शं—युम् । बार्हस्पत्यम् । अब्रुवन्न् । इमम् । नः । यज्ञम् । स्वगेति स्व—गा । कुरु । इति । सः । अब्रवीत् । वरम् । वृणै । यत् । एव । अब्राह्मणोक्त इत्यब्राह्मण—उक्तः । अश्रद्दधान इत्यश्रत्—दधानः । यजातै । सा । मे । यज्ञस्य । आशीरित्या—शीः । असत् । इति । तस्मात् । यत् । अब्राह्मणोक्त इत्यब्राह्मण—उक्तः । अश्रद्दधान इत्यश्रत्—दधानः । यजते । शंयुमिति शं—युम् । एव । तस्य । बार्हस्प-

---

देवनाम् । यदेवेत्यादि । 'यजस्व' इति ब्राह्मणेन नोक्तो यो भवति यश्च श्रद्दधानो न भवति तदीयस्य यज्ञस्य याऽऽशीः फलं सा ममास्त्विति शंयुना वृतम् । अथ देवैस्तथाऽस्त्वित्यनुज्ञाते पुनश्च शंयुरब्रवीत् एतत् मे मम युष्मत्प्रसादात् संपत्स्यते, अथ किं मे प्रजाया युष्मत्प्रसादेन संपत्स्यते इति ॥

स्याशीर्गच्छत्येतन्ममेत्यब्रवीत्किं मे प्रजायाः ॥ ५७ ॥ इति योपगुरातै शतेनं यातयाद्यो निहनत्सहस्रेण यातयाद्यो लोहितं करवद्यावतः प्रस्कद्य पा५ंसून्त्संगृह्णात्तावतस्संवत्स-

त्यम् । यज्ञस्य । आशीरित्या-शीः । गच्छति । एतत् । ममं । इति । अब्रवीत् । किम् । मे । प्र-जाया इति प्र-जायाः ॥ ५७ ॥ इति ।[2]यः । अप-गुराता इत्यप-गुरातै । शतेन । यातयात् । यः । निहनदिति नि-हनत् । सहस्रेण । यातयात् । यः । लोहितम् । करवत् । यावतः । प्रस्कद्येति प्र-स्कद्य । पा५ंसून् । संगृह्णादिति सं-गृह्णात् । तावतः । संवत्सरानिति सं-वत्सरान् । पितृलोकमिति पितृ-

---

[2]योऽपगुराता इत्यादि ॥ अपगोरणं ताडनोद्योगः । वाक्पारुष्य-मित्येके । ब्राह्मणाय तदपत्याय तत्कर्तारं शतनिष्कदण्डेन दुःख-येत् । गुरी उद्यमने तौदादिकः, लेटि अडागमः, 'वैतोन्यत्र' इत्यैकारः । यो निहनत् निहन्यात् ताडयेत् । लेट्यडागमः । गतमन्यत् । करवत् कुर्यात् । पूर्ववदडागमः । लोहितं शरीरात् प्रस्कद्य निपत्य यावतः पांसून् सङ्गृह्णीयात् ताव-त्संवत्सरान् पितृलोकं न प्रजानीयात् मदपत्ये लोहितस्योत्पाद-यिता । उभयत्र लेटि 'इतश्च लोपः' इति लोपः ॥

रान्पितृलोकं न प्र जानादिति त-
स्माद्ब्राह्मणायं नापं गुरेत न नि ह-
न्यान्न लोहितं कुर्यादेतावता हैनंसा
भवति तच्छंयोरा वृणीमह इत्याह
यज्ञमेव तत्स्वगा करोति तत् ॥५८॥
शंयोरा वृणीमह इत्याह शंयुमेव
बार्हस्पत्यं भागधेयेन समर्धयति

लोकम् । न । प्रेति । जानात् । इति । [3]तस्मात् । ब्राह्मणाय । न । अपेति । गुरेत । न । नीति । हन्यात् । न । लोहितम् । कुर्यात् । एतावता । ह । एनंसा । भवति । [4]तत् । शंयोरिति शं–योः । एति । वृणीमहे । इति । आह । यज्ञम् । एव । तत् । स्वगेति स्व–गा । करोति । तत् ॥ ५८ ॥ शंयोरिति शं–योः । एति । वृणीमहे । इति । आह । शंयुमिति शं–युम् । एव । बार्हस्पत्यम् । भागधेयेनेति भाग–धेयेन । समिति । अर्धयति । गातु-

---

[3]तस्मादित्यादि ॥ गतम् । एतावतेति । एतावताऽनर्थस्य हेतुना पापेन इत्थंभूतो भवति ॥

[4]'तच्छंयोरा वृणीमहे'* इत्यादिसूक्तवाकमन्त्रव्याख्यानं सुबोधनम् । आशिषमिति । प्रतीकग्रहणत्वादस्त्वित्यादि सर्वाऽप्याशीर्गृह्यते॥

---

*तै. ब्रा. ३-५-११.

गातुं यज्ञार्य गातुं यज्ञपंतय इत्यां-
हाशिषमेवैतामा शांस्ते सोमं य-
जंति रेतं एव तद्दंधाति त्वष्टांरं यज-
ति रेतं एव हितं त्वष्टा रूपाणि वि
करोति देवानां पत्नींर्यजति मिथुन-
त्वायाग्निं गृहपंतिं यजति प्रतिष्ठित्यै
जामि वा एतद्यज्ञस्यं क्रियते ॥५१॥

म् । यज्ञार्य । गातुम् । यज्ञपंतय इतिं यज्ञ—पतये । इतिं । आह । आशिषमित्या—शिषम् । एव । एताम् । एतिं । शास्ते । [5]सोमम् । यजति । रेतः । एव । तत् । दधाति । त्वष्टांरम् । यजति । रेतः । एव । हितम् । त्वष्टा । रूपाणि । वीतिं । करोति । देवानाम् । पत्नीः । यजति । मिथुनत्वायेतिं मिथुन—त्वार्य । अग्निम् । गृहपंतिमितिं गृह—पतिम् । यजति । प्रतिष्ठित्या इति प्रति—स्थित्यै । [6]जामि । वै । एतत् । यज्ञस्यं । क्रियते ॥ ५१ ॥ यत् । आ-

[5]सोमं यजतीत्यादि ॥ पत्नीसंयाजविधिः ॥

[6]जामि वा इत्यादि ॥ याज्यानुवाक्ययोः ऋक्त्वेन वैलक्षण्येन जामित्वाभावः । 'आ प्यायस्व सं ते'* इत्यादयो याज्यानुवाक्या वेदितव्याः॥

* तै. ब्रा. ३-५-१२.

यदाज्येन प्रयाजा इज्यन्त आज्येन पत्नीसंयाजा ऋचमनूच्यं पत्नीसंयाजानामृचा यजत्यजामित्वायाथो मिथुनत्वाय पङ्क्तिप्रायणो वै यज्ञः पङ्क्त्युदयनः पञ्च प्रयाजा इज्यन्ते चत्वारः पत्नीसंयाजास्समिष्टयजुः

ज्येन । प्रयाजा इति प्र—याजाः । इज्यन्ते । आज्येन । पत्नीसंयाजा इति पत्नी—संयाजाः । ऋचम् । अनूच्येत्यनु—उच्य । पत्नीसंयाजानामिति पत्नी—संयाजानाम् । ऋचा । यजति । अजामित्वायेत्यजामि—त्वाय । [7]अथो इति । मिथुनत्वायेति मिथुन—त्वाय । पङ्क्तिप्रायण इति पङ्क्ति—प्रायणः । वै । यज्ञः । पङ्क्त्युदयन इति पङ्क्ति—उदयनः । पञ्च । प्रयाजा इति प्र—याजाः । इज्यन्ते । चत्वारः । पत्नीसंयाजा इति पत्नी—संयाजाः । समिष्टयजुरिति

[7]पङ्क्तिप्रायण इत्यादि ॥ समिष्टयजुषो विधिः । प्रायणं प्रारम्भः । उदयनं समाप्तिः । पङ्क्तिपञ्चकं प्रायणीयः उदयनीयश्च द्वयं यस्येति बहुव्रीहिः । प्रायणोदयनहेतुत्वं पङ्क्तेरनुशब्देन द्योत्यते । पङ्क्त्या हेतुना सर्वे ऋत्विग्यजमानाः समीचीनं यज्ञं

पञ्चमं पङ्क्तिमेवानु प्रयन्ति पङ्क्तिम-
नूद्यन्ति ॥ ६० ॥

युक्ष्वा हि देवहूतमाꣳ अश्वाꣳ अग्ने

समिष्ट–यजुः । पञ्चमम् । पङ्क्तिम् । एव ।
अन्विति । प्रयन्तीति प्र–यन्ति । पङ्क्तिम् । अनु ।
उदिति । यन्ति ॥ ६० ॥

प्रजायां करोति तत्क्रियते त्रयस्त्रिꣳशच्च॥१०॥

[1]युक्ष्व । हि । देवहूतमानिति देव–हूतमान् ।
अश्वान् । अग्ने । रथीः । इव । नीति । होता ।

प्रारभन्ते । समीचीनं समापयन्ति । उभय*भाजो भवन्तीति ।
'चादिलोपे विभाषा' इति प्रथमा तिङ्विभक्तिः न निहन्यते ।
समासगतिनिघातावुक्तौ ॥

इति द्वितीये षष्ठे दशमोनुवाकः.

---

[1]अथ संसर्गेष्टेः सप्तदशसामिधेन्योऽनभ्यस्ताः । युक्ष्वा हित्याद्याः सर्वाः गायत्र्यः ॥ तत्र प्रथमा—हे अग्ने युक्ष्व योजय । छान्दसो लुक् शपः, 'द्व्यचोतस्तिङः' इति संहितायां दीर्घत्वम् । देवहूतमान् देवानामाह्वातृतमान् अश्वान् व्यापनान् ज्वा-

*घ—उदयनीय.

रथीरिव । नि होता पूर्व्यस्सदः । उत नो देव देवाꣳ अच्छा वोचो विदुष्टरः । श्रद्विश्वा वार्या कृधि । त्वꣳ

पूर्व्यः । सदः । [2]उत । नः । देव । देवान् । अच्छं । वोचः । विदुष्टर इति विदुः-तरः । श्रत् । विश्वा । वार्या । कृधि । [3]त्वम् । ह । यत् । यवि-

लासमूहान् । उभयत्रापि 'दीर्घादटि समानपादे' इति रुत्वम् । रथीरिव यथा रथी रथवान् रथे अश्वान् युङ्क्ते । 'छन्दसीवनिपौ' इति मत्वर्थीय ईकारः । ततस्तथायुक्तजालस्त्वं पूर्व्यः पुराणो होता देवानां यष्टा निषदः निषीद । लेटि व्यत्ययेन शपो लुकि अडागमः ॥

[2]अथ द्वितीया—उत न इति ॥ हे देव दीप्तिमन् अग्ने अस्माकं कर्मणि देवान् अच्छ वोचः आभिमुख्येन ब्रूहि भ्रातृव्यानभिभवितुम् । एते सम्यग्यजन्त इति । छान्दसो लिट्, 'निपातस्य च' इत्यच्छेत्यस्य संहितायां दीर्घत्वम् । विदुष्टरः विद्वत्तरः । अयस्मयादित्वेन भत्वात्सम्प्रसारणम् । किञ्च—विश्वानि वार्याणि वरणीयानि अभिप्रेतानि भ्रातृव्यमरणादीनि श्रत् कृधि सत्यानि कुरत । यथाभिमतसंपत्तिस्सत्यम् । करोतेर्लेटि निपातस्य छान्दसश्शपो लुक् 'श्रुशृणुपॄकृवृभ्यः' इति धिभावः ॥

[3]तृतीया—त्वं इति ॥ हे यविष्ठ्य युवतम । छान्दसः स्वार्थिको यत् । सहसो बलस्य सूनो मथनप्रभवत्वात् हे आहुत

ह यद्यविष्ठ्य सहसस्सूनवाहुत ।
ऋतावा यज्ञियो भुवः । अयमग्नि-
स्सहस्त्रिणो वाजस्य शतिनस्पतिः ।
मूर्धा कवी रयीणाम् । तं नेमिमृ-

ष्ठ्य । सहसः । सूनो । आहुतेत्या—हुत । ऋतावे-
त्यृत—वा । यज्ञियः । भुवः । [4]अयम् । अग्निः ।
सहस्त्रिणः । वाजस्य । शतिनः । पतिः । मूर्धा ।

---

नित्यमाभिमुख्येनाहुत । 'सुबामन्त्रिते' इति पराङ्गवद्भावात् षष्ठ्याम-न्त्रितसमुदायस्य पदादित्वात् पाष्ठिकमामन्त्रिताद्युदात्तत्वं, परस्य त्वाष्टमिकमामन्त्रिताद्युदात्तत्वम् । यत् यस्मात् ऋतावा सत्यवान् यज्ञवान् वा । तस्मादस्माकमपि यज्ञियो यज्ञसम्पादनार्हो भुवः भव । त्वमेव तथाभवितुमर्हसीति । भवतेर्लेटि शपो लुकि अ-डागमे 'भूसुवोस्तिङि' इति गुणाभावः । 'हि च' इति निघा-ताभावः । ऋतशब्दान्मत्वर्थीयो वनिप्रत्ययः । यज्ञशब्दात् 'य-ज्ञर्त्विग्भ्याम्' इति घः ॥

[4]चतुर्थी—अयमिति ॥ अयं खल्वग्निः पतिः स्वामी रयीणां सर्वधनानां तस्मादिहैव समिन्धयाम इति । अग्निरिदानीं वि-शेष्यते—सहस्त्रिणः शतिनश्च शतप्रमाणवतस्सहस्त्रप्रमाणवतश्च वाजस्य अन्नस्य पतिः स्वामी अत एव मूर्धा प्रधानभूतः कविः क्रान्तदर्शनः । तस्मादयं रयीणां दाताऽस्त्वितिभावः । रयीणा-मित्यत्र 'नामन्यतरस्याम्' इति विभक्त्युदात्तत्वम् ॥

भवो यथाऽऽनंमस्व सहूंतिभिः। ने-
दींयो यज्ञम्॥६१॥ अङ्गिरः।तस्मैं
नूनमभिद्यंवे वाचा विरूप नित्यंया।

कविः। रयीणाम्। [5]तम्। नेमिम्। ऋभवंः। यथा। एति। नमस्व। सहूंतिभिरिति सहूंति-भिः। नेदींयः। यज्ञम्॥ ६१ ॥अङ्गिरः। [6]तस्मैं। नूनम्। अभिद्यंव इत्यभि-द्यवे। वाचा। विरूपेति वि-रूप। नित्यंया। वृष्णें। चोदस्व। सुष्टुतिमिति

[5]पञ्चमी—तमिति ॥ हे अग्ने नेदीयः अन्तिकतमः सदा अस्माकं प्रत्यासन्नः अङ्गिरः अङ्गनादिगुणयुक्त तमिमं यज्ञमानमस्व अस्मान् प्रति प्रह्वीभूतं कुरु । अस्मदभिमतसम्पादनोन्मुखं कुरु । सहूतिभिस्समानाह्वानैस्सहायैः सह । यद्वा—नेदीयः अन्तिकतममानमस्व । यथा ऋभवो देवतक्षाणो नेमिं नीयमानं आवर्तयन्ति । तद्वद्यज्ञमानमयेति । अन्तर्भावितस्य व्यत्ययेनात्मनेपदम् । 'यथेति पदान्ते' इति यथेत्यस्य निघातः ॥

[6]षष्ठी—तस्मा इति ॥ नूनमिति पादपूरणे । हे अग्ने विरूप नानारूप तस्मै यज्ञैराराधनीयाय अभिद्यवे अभिगतदीप्तये वृष्णे वर्धित्रे इन्द्राय इन्द्रार्थं वाचा नित्यया वैदिक्या ऋगादिरूपया सुष्टुतिं शोभनां स्तुतिं शोभनस्तुतिकं वा यज्ञं चोदस्व प्रेरय पुनःपुनः प्रवर्तय । यद्वा—आभीक्ष्ण्यं नित्यत्वं यथा नित्यप्रहसित इति पुनःपुनः प्रवर्तमानया वाचा सुष्टुतिं प्रवर्तयेति।

वृष्णे चोदस्व सुष्टुतिम् । कमुष्विदस्य सेनयाऽग्नेरपाकचक्षसः । पणिं गोषु स्तरामहे । मा नो देवानां

सु–स्तुतिम् । [7]कम् । उ । स्वित् । अस्य । सेनया । अग्नेः । अपाकचक्षस इत्यपाक–चक्षसः । पणिम् । गोषु । स्तरामहे । [8]मा । नः । देवानाम् ।

यथा पुनःपुनः स्तुवीत यजमानः तथा धनादिना समृद्धं कुर्विति। सुष्टुतिशब्देन गतिसमासे 'मन्क्तिन्व्याख्यान' इत्यादिना उत्तरपदान्तोदात्तत्वम् । बहुव्रीहौ छान्दसं षत्वम् । कश्चिदाह—तस्मै यजमानाय हविषां वर्षित्रे पुनःपुनः यज्ञं प्रवर्तयेति ॥

[7]सप्तमी—कमुष्विदिति ॥ कमिति प्रश्ने, उ इत्यवधारणे, स्विदिति वितर्के, अस्याग्नेरपाकचक्षसः अनल्पदर्शनस्य प्रवृद्धज्ञानस्य सेनया बलसंपत्त्या कमेव उ खलु पणिं सांव्यवहारिकं क्रयविक्रयादानभोगादिलक्षणं गोषु गवादिधनविषयेषु स्तरामहे छादयामः । न किञ्चिदपि सर्वमपि व्यवहारं कुर्मः एवम् । पण व्यवहारे, औणादिकः इप्रत्ययः, तृणातेर्विकरणव्यत्ययेन शप्, स्विदित्यस्य छान्दसं षत्वम् ॥

[8]अष्टमी—मा न इति ॥ देवानां हविर्व्यवहारिणां यजमानानां सम्बन्धिन्यो विशः प्रजा ऋत्विजो वा नः अस्मान् मा हासुः मा त्याक्षुः प्रस्नातीः प्रस्नात्यः प्रस्नुताः उस्राः गाः इव अहन्तव्याः अघ्नियाः । यद्वा—अघ्निया इति गवां नाम । उस्राः

विशः प्रस्नातीरिवोस्राः । कुशं न हासुरघ्निया: । मा नस्समस्य दूढ्यः परिद्वेषसो अंहतिः । ऊर्मिर्न नावमा वधीत् । नमस्ते अग्न ओ-

विशः । प्रस्नातीरिति प्र—स्नातीः । इव । उस्राः । कुशम् । न । हासुः । अघ्नियाः । [9]मा । नः । समस्य । दूढ्यः । परिद्वेषस इति परि—द्वेषसः । अंहतिः । ऊर्मिः । न । नावम् । एति । वधीत् । [10]नमः । ते । अग्ने ।

क्षीरादिदानेन जगतां वासयित्र्यः किमिव कुशं न वत्समिव प्रस्नुतस्तन्याः हि गावो वत्सकं विशेषेण न जहति । एवं मां मा हासुरिति । उभयोपमार्थीयाऽपि वाक्यार्थोपमा भवतीत्युपमैतत् ॥

[9]नवमी—मा न इति ॥ समस्य सर्वस्यापि दूढ्यः द्रढीयः। पृषोदरादिः । परिद्वेषसः सर्वतो द्वेषणशीलस्य भ्रातृव्यस्य अंहतिः अभिभवः अस्मान् मा वधीत् माऽस्मानवधिषुः । नावं दुर्बला ऊर्मिरिव । कश्चिदाह—समस्य समानस्य दूढ्यः मत्सरिणः । समानमन्यत् ॥

[10]दशमी—नमस्त इति ॥ हे अग्ने नमस्ते तव खल्वोजसे बलाय कृष्टयो मनुष्या गृणन्ति शब्दयन्ति । तवैव बलं स्तुवन्ति यजमानादयः । अतः त्वममित्रमस्माकमपकारिणं शत्रुं अमैः अमनैः

जंसे गृणन्ति देव कृष्टयः । अमैः ॥
॥ ६२ ॥ अमित्रमर्दय । कुवित्सु
नो गविष्टयेऽग्ने संवेषिषो रयिम् ।

ओजंसे । गृणन्ति । देव । कृष्टयः । अमैः ॥६२॥ अमित्रम् । अर्दय । [11]कुवित् । स्विति । नः । गविष्टय इति गो—इष्टये । अग्ने । संवेषिष इति सं—वेषिषः । रयिम् । उरुकृदित्युरु—कृत् । उरु । नः । कृधि ।

रोगादिभिः अर्दय मारय । अमेरित्रप्रत्ययः । अन्यत्र पचाद्यचि वृषादिः द्रष्टव्यः ॥

[11]एकादशी—कुवित्स्विति ॥ अग्ने नः अस्माकं रयिं धनं सुसंवेषिषः । सुष्ठु समन्तात्प्रापय । कुवित्, इति निपातो भूयिष्ठमित्यस्यार्थे वर्तते । विष व्याप्तौ लेटि 'सिब्बहुळं लेटि' इति 'लेटोऽडाटौ' इत्यडागमः । गविष्टये गावश्च इष्टयश्च गविष्टिः तदर्थं तत्साधनानि कर्माणि मे स्युरिति । लिङ्गव्यत्ययश्छान्दसः, नुमभावश्छान्दसः । उत्तमबहुळधनं प्रापयेति । इदानीं तत्प्राप्तिं बहुतरं कुर्वित्याशास्ते—उरुकृत् उरुणो बहुनो धनस्य कर्तुः न हि त्वमल्पं कर्तुं जानासि । पादादित्वात्षाष्ठिकमामन्त्रिताद्युदात्तत्वम् । नः अस्माकं धनं उरु कृधि बहुतरं कुरु । सामर्थ्यातिशयो गम्यते । 'नश्च धातुस्थोरुषुभ्यः' इति नसो णत्वम्, 'कः करत्करति' इति सत्वम् । करोतेर्लेट्, पूर्ववच्छपो लुक्, धिभावश्च ॥

उरुङ्कदुरुणस्कृधि । मा नो अस्मि-
न्महाधने परा वर्ग्भारभृद्यथा । संव-
र्गꣳ सꣳ रयिं जय । अन्यमस्म-

[12]मा । नः । अस्मिन्न् । महाधन इति महा–धने । परेति । वर्क् । भारभृदिति भार–भृत् । यथा । संवर्गमिति सं–वर्गम् । समिति । रयिम् । जय । [13]अ-

[12]द्वादशी—मा न इति ॥ उत्तमं महत्तमं धनं देहीति तत्र महाधने त्वयाऽस्मिन् दीयमाने इत्थं कर्तव्यम् । भारभृदिति । मा परावर्क् मा परानैषीः । यथा महान्तं भारं वोढुं समर्थो भारं न इति न किञ्चित् परावर्जयति महान्तमपि भारमानयति । एवं त्वयाऽपि कर्तव्यम् । व्रजेर्लुङि 'मन्त्रे घस' इति च्लेर्लुक् । किञ्च—संवर्गं संवृज्य देये धनराशौ पुनःपुनः समानीय महान्तं धनराशिं सञ्जय सम्यक् जित्वा आनय । वर्जेराभीक्ष्ण्ये णमुल् । छान्दसो वा घमुञ् ॥

[13]त्रयोदशी—अन्यमिति ॥ हे अग्ने अस्मत् अस्मत्तः अन्यं शत्रुं इयं दुच्छुना दौर्गत्यं दुर्भिक्षं नरकादिरूपा वा पीडा सिषक्तु सेवताम् । सचेर्लोटि 'बहुलं छन्दसि' इति शपः श्लुः, इत्वं चाभ्यासस्य । भियै भयार्थं यथाऽसौ भीतः पलायेत नः अस्माकं तु शवः बलं वर्धय । अमवत् आमसाधनं भ्रातृव्यक्षयो यैस्तद्वत् बलं वर्धय । 'अणावकर्मकात्' इति परस्मैपदम्, 'छन्दस्युभयथा' इति शप आर्धधातुकत्वाण्णिलोपः, 'द्व्यचोतस्तिङः' इति संहितायां दीर्घत्वम् ॥

ध्रिया इ॒यम॒ग्ने सिषक्तु दु॒च्छुना॑ । वर्धा॒ नो॒ अम॑व॒च्छवः॑ । यस्याजु॑षन्नम॒स्विनः॒ शमी॒मदु॑र्मखस्य वा । तं घेद॒ग्निर्वृ॒धाऽवति । परस्या॒ अधि॑ ॥

न्यम् । अ॒स्मत् । श्रि॒यै । इ॒यम् । अग्ने॑ । सिषक्तु । दु॒च्छुना॑ । वर्ध॑ । न॒ः । अम॑व॒दित्यम॑—व॒त् । शव॑ः । [14]यस्य॑ । अजु॑षत् । न॒म॒स्विन॑ः । शमी॑म् । अदु॑र्मखस्येत्यदुः—म॒ख॒स्य॒ । वा॒ । तम् । घ॒ । इत् । अ॒ग्निः । वृ॒धा । अ॒व॒ति॒ । [15]परस्याः । अधीति॑ ॥ ६ ३ ॥

[14]चतुर्दशी—यस्येति ॥ यस्य नमस्विनः अन्नवतः पुरोडाशादिहविस्संपादिनो यजमानस्य शमीं कर्म अजुषत् सेवते । प्रीतो भजते, कीदृशस्य अदुर्मखस्य अविगुणयज्ञस्य तमेवाग्निः वृधा वर्धनेनावति तर्पयति । प्रवृद्धं वा रक्षति । घेदिति पादपूरणे । केचिदाहुः—नमस्विनो नमस्कारशीलस्य वा अविगुणयज्ञस्य वा कर्मेति विकल्पार्थो वाशब्द इति । घेति पादपूरणे इदित्यवधारणे ॥

[15]पञ्चदशी—परस्या इति ॥ संवतः सङ्गतेरग्ने उपरि परमे संश्लेषे तिष्ठन् । ‘उपसर्गाच्छन्दसि’ इति वतिः । अवरानपकृष्टानप्यस्मान् अभ्यातर आभिमुख्येन, मर्यादया च तर तारय दुःखात् । वनोतेः संपदादित्वात्क्विप् । परस्मात्संवननीयात् लोकादुपरिवर्तमानः त्वं अवरानस्मान् अभ्यातर आभिमुख्येनागच्छ । तथा

॥ ६३ ॥ सं॒व॒तोऽव॑रा॑ँ अ॒भ्या त॑र। यत्रा॒हमस्मि॒ ता॑ँ अ॑व । वि॒द्मा हि तैं पु॒रा व॒यमग्नैं पि॒तुर्यथाऽव॑सः । अधा॑ ते सु॒म्नमीमहे । य उ॒ग्र इ॑व

सं॒वत॒ इति॑ सं॑–व॒तः । अव॑रान् । अ॒भि । एति॑ । त॒र॒ । यत्र॑ । अ॒हम् । अस्मि॑ । तान् । अ॒व॒ । [16]वि॒द्म । .हि । ते॒ । पु॒रा । व॒यम् । अग्नैं । पि॒तुः । यथा॑ । अव॑सः । अध॑ । ते॒ । सु॒म्नम् । ई॒म॒हे॒ । [17]यः । उ॒ग्रः।

कृत्वा यत्राहमस्मि कुले ग्रामे जनपदे वा काले वा तान् तत्स्थानपि सर्वानव रक्ष तर्पय वा । रुत्वानुनासिकावुक्तौ ॥

[16]षोडशी—विद्मेति ॥ हे अग्ने तस्मात्ते तव पुरा पूर्वमेव वयं जानीमः कथमिव अवसः अभिगन्तव्यः पितरमिव त्वा वयं जानीमः अवगतो रक्षकः त्वमस्माकं पितुरेवं ते वयं जानीमः । पुत्रद्वेषितव्यावृत्त्यर्थमिदम् । अध अत एव कारणात् ते त्वामेव सुम्नं सुखमीमहे याचामहे । 'द्व्यचोतस्तिङः' इति 'निपातस्य च' इति उभयत्रापि दीर्घत्वम् ॥

[17]सप्तदशी—य इति ॥ हे अग्ने यस्त्वमुग्रः उद्गूर्णबलतया उग्र इव भवसि । शर्यहा । छान्दसः कर्तरि कृत्यः 'तत्र साधुः' इति यत् । शर्याणां हिंसकानां हन्ता शर्यहा । तिग्मशृङ्गः न तीक्ष्णशृङ्गः तीक्ष्णज्वालः तिग्मशृङ्ग इव । वंसगः वननीयानि वना-

शर्यहा तिग्मशृङ्गो न वꣳसंगः ।
अग्ने पुरो रुरोजिथ । सखायस्सं
वस्सम्यञ्चमिषꣴ स्तोमं चाग्नये ।
वर्षिष्ठाय क्षितीनामूर्जो नप्त्रे सह-

इव । शर्यहेति शर्य–हा । तिग्मशृङ्ग इति तिग्म–शृङ्गः । न । वꣳसंगः । अग्ने । पुरः । रुरोजिथ । [18]सखायः । समिति । वः । सम्यञ्चम् । इषम् । स्तोमम् । च । अग्नये । वर्षिष्ठाय । क्षितीनाम् ।

---

नि गच्छति वनसङ्गः । वननीयेषु वनेषु सक्त इति वा वनसङ्गः । पृषोदरादित्वादिष्टस्वरूपलाभः । एवं मृगवत्सौम्यस्वभावः उग्रस्वभावश्च त्वं पुरः असुराणां पुरीः मेघान्वा रुरोजिथ अधक्षीः । छान्दसो हः । भ्रातृव्याणां हन्ता वृष्टेरुत्पादनेन वा सर्वाभिमतकारी ॥

[18]अथास्यामेवेष्टयां पुरोनुवाक्या—सखाय इत्यनुष्टुप् ॥ हे सखायः समानख्यानाः ऋत्विग्यजमानाः वः युष्मदर्थं युष्माकं श्रेयोर्थं अस्मासु अग्नये वर्षिष्ठाय प्रवृद्धतमाय क्षितीनां निवासहेतूनां मध्ये ऊर्जो नप्त्रे चतुर्थाय यथान्नादाहुतिः आहुतेरादित्यः आदित्यादग्निरिति । सहस्वते अतिशयेन बलवते ईदृशायास्मै सम्यञ्चं समीचीनं अतिगुणं स्तोमं स्तोत्रमिषमन्नं पुरोडाशादिकं हविश्च समारभध्वं कुरुत । एतत्क्रियाया अश्रुतत्वात् साकाङ्क्षत्वादुपसर्गसामर्थ्यादुत्तरस्मिंश्च मन्त्रे विशेषस्य श्रुतत्वात् । तत्रायं

स्वते । सꣳसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ । इडस्पदे समिध्यसे स नो वसून्या भर । प्रजापते

ऊर्जः । नप्त्रे । सहस्वते । [19]सꣳसमिति सं–सम् । इत् । युवसे । वृषन् । अग्ने । विश्वानि । अर्यः । आ । इडः । पदे । समिति । इध्यसे । सः । नः । वसूनि । एति । भर । [20]प्रजापत इति प्रजा–

विवेकः अग्नये इषं स्तोमं च मंहराम इत्यत्रोच्यते । सोग्निर-स्मभ्यं विश्वानि वसूनि समाहरत्विति उत्तरत्र वक्ष्यत इति । प्रिय-स्थिरादिना वृद्धशब्दस्य वर्षादेशः ॥

[19]अथात्रैव याज्या—संसमिदित्यनुष्टुप् ॥ 'प्रसमुपोदः' इति द्विर्वचनम् । हे वृषन् कामानां वर्षितः अग्ने विश्वानि वसूनि धनानि भक्तैः संयुवसे संमिश्रयसि भक्तेभ्यो दातुं राशीकरोषि । व्यत्ययेन शः, आत्मनेपदं च । यस्मादर्यः ईश्वरस्त्वम् । आकारो मर्यादायाम् । मर्यादाऽसङ्करणेन यथाधिकारं धनानां प्रापयिता त्वमिति । किञ्च—इडस्पदे पृथिव्याः पदे स्थाने वेद्यास्समि-ध्यसे सम्यक् ज्वाल्यसे । सः महानुभावस्त्वं अस्मभ्यं वसूनि समाभर समाहरेति । 'हृग्रहोर्भश्छन्दसि'। इडन्नं तद्वती पृथिवी । मत्वर्थीयो लुप्यते, अयस्मयादित्वेन पदत्वाज्जश्त्वं, 'सावेकाचः' इति विभक्तेरुदात्तत्वम्, 'षष्ठ्याः पतिपुत्र' इत्यादिना सत्वम् ॥

[20]'यः प्रजाकामस्स्यात्तस्मा एतं प्राजापत्यं गार्मुतं चरुं निर्व-

स वेद सोमापूषणेमौ देवौ ॥६४॥

पते । [21]सः । वेद । [22]सोमापूषणेति सोमा-पूषणा।

पेत्'* इत्यस्याः पुरोऽनुवाक्या—प्रजापते न त्वदिति व्याख्यातेयं 'सोमस्य त्विषिरसि'† इत्यत्र इह त्वस्याः प्रतीकं गृह्यते । हे प्रजापते त्वदन्य एतानि विश्वानि जातानि भुवनानि परिबभूव सर्वतो व्याप्नोति । तस्माद्यद्यत्कामयमानास्ते जुहुमो वयं तत्तथैवास्माकमस्तु वयं रयीणां पतयस्स्यामेति ॥

[21]तत्रैव याज्या—स वेद पुत्र इति जगती ॥ इयमपि 'हिरण्यगर्भः'‡ इत्यत्र व्याख्याता । प्रतीकग्रहणमिदमस्याः । स एव प्रजापतिः पुत्रो भूत्वा पितरं मातरं च वेद पुत्रभावेन वर्तते । स एव सूनुः सोता यजमानश्च भवति । स एव पुनर्मघः पुनःपुनः क्रियमाणो यागश्च भवति । स एवं द्यां स्वर्गं च और्णोत् स्वतेजसाऽऽच्छादयति स एव विश्वानि भूतजातानि अभवत् आभवत् व्याप्नोति स एवेति ॥

[22]'यः पशुकामस्स्यात्तस्मा एतं सोमापौष्णं गार्मुतं चरुं निर्वपेत्'* इत्यस्य पुरोनुवाक्या—सोमापूषणा जनाना रयीणामिति त्रिष्टुप् ॥ इयं च व्याख्याता 'अग्नाविष्णू महि'§ इत्यत्र प्रतीकग्रहणमस्या अप्यत्र । सोमापूषणौ रयीणां धनानां जनना जनयितारौ द्यावापृथिव्योश्च जनयितारौ । विश्वस्य भूतजातस्य जातमात्रावेव गोपौ एवं महानुभावाविमौ देवाः कृतवन्तः अमृतत्वस्य नाभिं नहनभूतौ देवाः कृतवन्तः ॥

*तै. सं. २-४-४[1-2]. †तै. सं. १-८-१४[10].
‡तै. सं. २-२-१२[4]. §तै. सं. १-८-२२[17].

उशन्तस्त्वा हवामह उशन्तस्समि-
धीमहि । उशन्नुशत आ वह पितॄन्
[23]इमौ । देवौ ॥ ६४ ॥
यज्ञमग्नैरधि वृषन्नेकान्न विꣳशतिश्च॥११॥

[1]उशन्तः । त्वा । हवामहे । उशन्तः । समिति । इधीमहि । उशन् । उशतः । एति । वह । पितॄन् ।

[23]अथ तत्रैव याज्या—इमौ देवौ जायमानौ इति त्रिष्टुप् ॥ इयमपि तत्रैव व्याख्याता* । प्रतीकमेव गृह्यते । इमौ देवौ सोमापूषणौ जायमानावेव जुषन्त सर्वे देवाः इमौ देवौ तमांसि अजुष्टानि अप्रियाणि गूहतां जातमात्रावेव छादितवन्तौ । आभ्यां पक्कमुदकं संवत्सरव्रतं आमासु उस्त्रियासु रश्मिषु इन्द्रो वृष्ट्यर्थं जनत् जनयति पक्कं करोति ॥

इति द्वितीये षष्ठे एकादशोऽनुवाकः.

---

[1]महापितृयज्ञे सामिधेनी एकैव त्रिरुच्यते । उशन्त इत्यनुष्टुप्॥ उशन्तः कामयमानाः पितॄन् त्वा हवामहे आह्वयामः । तानेव कामयमानास्त्वां समिधीमहि सम्यग्दीपयामः । त्वमपि तान् पितॄन् उशन्नावह । कीदृशान् उशतः हविरत्तुं कामयमानान् हविषे अत्तवे हविर्भोक्तुं । तुमर्थे तवै प्रत्ययः, कर्मणस्संप्रदानत्वाच्चतुर्थी ॥

*तै. सं. १-८-२२[18].

हविषे अत्तवे । त्वꣳ सोम प्रचिकितो मनीषा त्वꣳ रजिष्ठमनु नेषि पन्थाम्।

हविषे । अत्तवे । [2]त्वम् । सोम । प्रचिकित इति प्र—चिकितः । मनीषा । त्वम् । रजिष्ठम् । अन्विति । नेषि । पन्थाम् । तव । प्रणीतीति प्र—नीती। पितरः । नः । इन्दो इति । देवेषु । रत्नम् । अभ-

---

[2]सोमबर्हिषदग्निष्वात्तकव्यवाहनानां क्रमेण द्वेद्वे पुरोनुवाक्ये एकैकस्य तूत्तरा याज्या सर्वास्त्रिष्टुभः । विशेषो वक्ष्यते—त्वं सोमेति ॥ हे सोम! त्वं प्रचिकितः प्रकर्षेण ज्ञातः । निष्ठायां छान्दसं द्विर्वचनम्, यङ्लुकि वा अभ्यासविकाराभावः, 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । 'चिक' इति वा धात्वन्तरं द्रष्टव्यम् । मनीषा मनीषावद्भिः । यद्वा—विशिष्टया मनीषया व्यभिचाराभावात् । 'सुपां सुलुक्' इति विभक्तेराकारः । किंच—त्वं रजिष्ठं ऋजुतरं पन्थां पन्थानम् । ऋजुशब्दादिष्ठनि 'विभाषर्जोश्छन्दसि' इति रेफः । यद्वा—रजः उदकं अतिशयेन तद्वान् रजिष्ठः । रजश्शब्दादिष्ठन् 'विन्मतोर्लुक्', 'टेः' इति टिलोपः । ईदृशं पन्थानं अनुनेषि अनुक्रमेण प्रापयसि । नयतेर्लिटि शपो लुक् । किञ्च—हे इन्दो! सोम! तव प्रणीती प्रणीत्या परिचरणेन पुरस्कारेण वा । 'सुपां सुलुक्' इति तृतीयायाः पूर्वसवर्णदीर्घत्वम् । अस्माकं पितरः पूर्वेषु देवेषु रत्नं रमणीयं हविरन्नमभजन्त धीराः धीमन्तः । मत्वर्थीयो रप्रत्ययः ॥

तव प्रणीती पितरो न इन्दो देवेषु रत्नमभजन्त धीराः । त्वया हि नः पितरस्सोम पूर्वे कर्माणि चक्रुः पवमान धीराः । वन्वन्नवातः परिधी१ँ रपोर्णु वीरेभिरश्वैर्मघवा भव ॥६५॥

जन्त । धीराः । [3]त्वया । हि । नः । पितरः । सोम । पूर्वे । कर्माणि । चक्रुः । पवमान । धीराः । वन्वन् । अवातः । परिधीनिति परि–धीन् ।

[3]त्वया हीति ॥ हे सोम नः अस्माकं पूर्वे पितरः त्वया खलु हेतुना त्वत्प्रसादेन कर्माणि ज्योतिष्टोमादीनि पितृयज्ञादीनि वा चक्रुः कृतवन्तः । धीराः । गतम् । हे पवमान शोधक तस्मात्कारणात् अस्माकमपि त्वं वन्वन् अस्माकं संभजन्* अवातः वातरहितः स्वयमेव ज्वलन् । यद्वा—अकार उपमायां अयं वायुसदृशः, दीर्घकारित्वं सादृश्यं । परिधीन् परितो धारयितॄन् आत्मनः प्रतिबन्धॄन् अपोर्णु अपानुद प्रतिबन्धकापनोदेन शीघ्रमागच्छ । रुत्वानुनासिकावुक्तौ । वीरेभिः विक्रान्तैरश्वैः शीघ्रमागच्छेति । ततश्चागत्य नः अस्माकं मघवा धनवान् भव । अस्मभ्यं धनं दातुं हस्ते गृहाण । यद्वा—हविषा धनेन तद्वान् भव । 'छन्दसीवनिपौ' इति मत्वर्थीयो वनिप्रत्ययः । 'द्व्यचोतस्तिङः' इति भवशब्दस्य संहितायां दीर्घः ॥

*ख—ग—संभजन् हविषा संभजन्.

नः । त्वꣳ सोम पितृभिस्संविदा-
नोऽनु द्यावापृथिवी आ ततन्थ । त-
स्मै त इन्दो हविषा विधेम वयꣳ
स्याम पतयो रयीणाम् । अग्निष्वा-

अपेति । ऊर्णु । वीरेभिः । अश्वैः । मघवेति म-
घ-वा । भव ॥ ६५ ॥ नः । [4]त्वम् । सोम । पि-
तृभिरिति पितृ-भिः । संविदान इति सं-विदानः ।
अन्विति । द्यावापृथिवी इति द्यावा-पृथिवी ।
एति । ततन्थ । तस्मै । ते । इन्दो इति । हविषा ।
विधेम । वयम् । स्याम । पतयः । रयीणाम् । [5]अ-

[4]त्वं सोमेति ॥ हे सोम! त्वं पितृभिः पूर्वैरास्माकीनैः संविदानः ऐकमत्यं गतः इत्थं वयमस्मै कुर्म इति द्यावापृथिव्यौ अन्वाततन्थ अनुक्रमेण दीप्त्या । अततेः 'बभूथाततन्थ' इति निपात्यते । हे इन्दो! तस्मै तादृशाय ते तुभ्यं हविषा विधेम परिचरेम तदर्थं आततदीप्तिर्भव । प्रयोजनं च ब्रूमः । वयं रयीणां धनानां पतयः स्याम भूयास्मेति हविषा विधेम त्वाम्, त्वं च द्यावापृथिवी दीप्त्या आततन्थ पितृभिश्च संविदानो भव इति । 'समोगमृच्छि' इति विदेरात्मनेपदम् ॥

[5]अग्निष्वात्ता इति जगती ॥ हे अग्निष्वात्ताः! अग्निष्वेव

त्ताः पितर एह गच्छत सदस्सद-
स्सदत सुप्रणीतयः । अत्ता हवीꣳषि
प्रयतानि बर्हिष्यथा रयिꣳ सर्ववी-
रं दधातन । बर्हिषदः पितर ऊ-
त्यर्वागिमा वो हव्या चकृमा जुष-

ग्निष्वात्ता इत्यग्नि-स्वात्ताः । पितरः । एति । इह ।
गच्छत । सदस्सद इति सदः-सदः । सदत ।
सुप्रणीतय इति सु-प्रणीतयः । अत्त । हवीꣳषि ।
प्रयतानीति प्र-यतानि । बर्हिषि । अथ । रयिम् ।
सर्ववीरमिति सर्व-वीरम् । दधातन । [6]बर्हिषद
इति बर्हि-सदः । पितरः । ऊती । अर्वाक् ।

हवन्ते ये हविषां भोक्तारः* आस्वादनिबद्धभावाः । आमन्त्रिताद्यु-
दात्तत्वम् । हे पितरः! इह कर्मणि आगच्छत हे सुप्रणीतयः
सुखपरिचरणाः सदस्सदः आत्मीयमात्मीयं सदनं सदत सीदत ।
सीदतिः प्राप्तिकर्माऽयमिदानीम् । यद्वा—'सुपां सुलुक्' इति
सप्तम्या लुक् । सदस्सदः सदसिसदसि सीदत । विकरण-
व्यत्ययेन शः । ततश्चात्ताश्नीत हवींषि पितरो बर्हिषदः ।
ब्राह्मणं च, 'ये वै यज्वानः । ते पितरो बर्हिषदः ।'† इति ॥

[6]आमन्त्रयन्ते—हे बर्हिषदः पितरः ऊती ऊत्या गमनेन अर्वाक्

---

* होतारः । भोक्तारः † तै. ब्रा. १-६-९.

ध्वम् । त आ गतावसा शन्तमेना-
थास्मभ्यम् ॥ ६६ ॥ शं योररपो
दधात । आहं पितॄन्त्सुविदत्राँ

इमा । वः । हव्या । चकृम । जुषध्वम् । ते ।
एति । गत । अवसा । शंतमेनेति शं-तमेन ।
अथ । अस्मभ्यमित्यस्म-भ्यम् ॥ ६६ ॥ शम् ।
योः । अरपः । दधात । [7]एति । अहम् । पितॄन् ।

अस्मान् प्रत्यभिमुखा भूत्वा । 'ऊतियूति' इत्यादिना उदात्तः क्तिन्निपातितः, 'सुपां सुलुक्' इति तृतीयायाः पूर्वसवर्णः, 'उदात्तस्वरितयोर्यणः' इति ततःपरस्याकारस्य संहितायां स्वरितत्वम् । इमानि हव्यानि हवींषि । उभयत्र 'शेश्छन्दसि' इति लोपः । युष्मदर्थं चकृम कुर्मो वयम् । 'अन्येषामपि दृश्यते' इति संहितायां दीर्घत्वम् । तानि यूयं जुषध्वं सेवध्वम् । तिङः परत्वात् न निहन्यते । तदर्थं ते च यूयं आगत आगच्छत । लोटि 'बहुलं छन्दसि' इति शपो लुक् । अवसा प्रीत्या शन्तमेन सुखतमेन मनुष्यादिप्रीतिः अथ अनन्तरमागत्य हवींषि च सेवित्वा अस्मभ्यं शंयोश्च अरपः अपापः उभयलोकाविरुद्धं दधात दत्त आपत्तापशमनं रोगाणां नाशनं यावनं भयानां पृथक्करणमागामिनो निरोधः । यौतेरसुनि गुणे अवादेशाभावश्छान्दसः ॥

[7]आहमिति ॥ सुविदत्रान् शोभनवेदनान् सुष्ठु वदन्तीति सुविदत्राः । विदेः कर्तृप्रत्ययः, कृदुत्तरपदप्रकृतिस्वरत्वम् । अहं

अवित्सि नपातं च विक्रमणं च
विष्णोः । बर्हिषदो ये स्वधया
सुतस्य भजन्त पित्वस्त इहागमि-
ष्ठाः । उपहूताः पितरस्सोम्यासो

सुविदत्रानिति सु-विदत्रान् । अवित्सि । नपा-
तम् । च । विक्रमणमिति वि-क्रमणम् । च ।
विष्णोः । बर्हिषद इति बर्हि-सदः । ये । स्व-
धयेति स्व-धया । सुतस्य । भजन्त । पित्वः ।

---

तान् अवित्सि आभिमुख्येन लब्धवानस्मि । विन्दतेर्लुङि 'लिङ्सिचावात्मनेपदेषु' इति कित्वम् । किञ्च—विष्णोर्यज्ञात्मनो नपातं च विक्रमणं च आवित्सीत्येव तेषामेव प्रमादान्निपातनमभ्रेषः कर्माङ्गानाम् । ण्यन्तात्क्विपि नञ्समासे 'नभ्राण्नपात्' इति नलोपाभावो निपात्यते । विविधं सङ्क्रमणं विक्रमणं विश्लिष्टकर्मनिष्पत्तिः । विशिष्टफलप्राप्तिहेतुत्वं वा कर्मणः । कस्मादेवमुच्यते इत्याह—ये बर्हिषदः पितरः स्वधया अन्नेन सह सुतस्य सोमस्यान्नं सोमं च भजन्त अभजन्त यज्वान इति यावत् । 'बहुलं छन्दस्यमाङ्योगेपि' इत्यडभावः । ते पितरः इह अस्मिन् कर्मणि पित्वः पित्वन्ति आगमिष्ठाः । 'सुपां सुलुक्' इति सप्तम्याः स्वादेशः ।

बर्हिष्येषु निधिषु प्रियेषु । त आ गमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु तेऽवन्त्वस्मान् । उदीरतामवर उ-

ते । इह । आगमिष्ठा इत्या-गमिष्ठाः । [8]उपहूता इत्युप-हूताः । पितरः । सोम्यासः । बर्हिष्येषु । निधिष्विति नि-धिषु । प्रियेषु । ते । एति । गमन्तु । ते । इह । श्रुवन्तु । अधीति । ब्रुवन्तु । ते । अवन्तु । अस्मान् । [9]उदिति । ईरताम् । अवरे ।

अतिशयेन गन्तारः । 'तुश्छन्दसि' इत्यागन्तृशब्दादिष्ठन्प्रत्ययः, 'तुरिष्ठेमेयस्सु' इति लोपः ॥

[8]उपहूताः ये पितरः अस्मिन् कर्मणि अस्माभिरुपहूताः सोम्यासः सोमार्हाः । 'सोममर्हति' इति यप्रत्ययः । बर्हिष्येषु यागसंबन्धिषु । भवे साधौ वा यः । सन्निधिषु निधीयन्त इति निधयः हवींषि । 'उपसर्गे घोः किः' तेषु निमित्तेषु सप्तमी । प्रियेषु इष्टतमेषु ये आहूताः आगमन्तु आगच्छन्तु । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति छत्वाभावः । अतः इह कर्मणि अस्मत्प्रयुक्तास्स्तुतीः श्रुवन्तु शृण्वन्तु । 'बहुलं छन्दसि' इति शपो लुक् । अधिब्रुवन्तु तेऽस्मान् पक्षपातेन वा अस्मान् आधिक्येन ब्रुवन्तु साधुकृतमेभिरिति । अवन्तु चास्मान्पितरस्ते ॥

[9]उदीरतामिति ॥ उदीरतां उदीर्णा भवन्तु उद्गच्छन्तु ।

त्परास उन्मध्यमाः पितरस्सोम्या-
सः । असुम् ॥ ६७॥ य ईयुरवृका
ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ।
इदं पितृभ्यो नमो अस्त्वद्य ये

उदिति । परासः । उदिति । मध्यमाः । पितरः । सोम्यासः । असुम् ॥ ६७ ॥ ये । ईयुः । अवृकाः । ऋतज्ञा इत्यृत–ज्ञाः । ते । नः । अवन्तु । पितरः । हवेषु । [10]इदम् । पितृभ्य इति पितृ–

ईर गतौ, आदादिकः 'आत्मनेपदेष्वनतः' इत्यदादेशः । अवरे अधस्तात् स्थिताः पृथिवीस्थिता वा निकृष्टा वा परासः पराः उत्कृष्टा उच्छ्रितस्थानस्था वा ते च पितर उदीरतां मध्यमाश्च पितर उदीरतां सोम्यासः सोमार्हाः । 'सोममर्हति' इति यः । ये असुं प्राणं हेतुत्वेन वारकत्वेन ईयुः प्रविष्टाः अवृकाः बाधकस्वभावरहिताः । वृक वृक आदाने, इगुपधलक्षणः कः । ऋतज्ञाः ऋतस्य सत्यस्य यज्ञस्य वा ज्ञातारः ते तथा महानुभावाः नः अवन्तु प्रीणयन्तु वा हवेषु आह्वानेषु अस्मान् तृप्यन्तु वा अस्मद्यज्ञेषु ॥

[10]इदमिति ॥ इदं नमः अन्नं प्रणामो वा पितृभ्योऽस्तु ।

पूर्वासो य उपरास ईयुः । ये पा-
र्थिवे रजस्या निषत्ता ये वा नूनꣳ
सुवृजनासु विक्षु । अधा यथा नः

भ्यः । नमः । अस्तु । अद्य । ये । पूर्वासः । ये ।
उपरासः । ईयुः । ये । पार्थिवे । रजसि । एति ।
निषत्ता इति नि–सत्ताः । ये । वा । नूनम् । सुवृ-
जनास्विति सु–वृजनासु । विक्षु । [11]अध । यथा ।

अद्य अस्मिन् कर्मणि केभ्यः ये पूर्वासः ईयुः पूर्वमेव स्वर्गं गता ये चोपरास ईयुः उपरिभूतास्तेषां समीपभूता अन्तरिक्षस्थाः तेषां वा कुले अन्तरिक्षे स्थिताः ये च पार्थिवे रजसि लोके आनिषत्ता आनिषण्णाः सर्वतः । 'पृथिव्या ञाञौ' इति स्वार्थिको ञः । यद्वा—पृथिवीसंबन्धिनि लोके स्थिताः । नूनमिति पादपूरणे । ये वा सुवृजनासु शोभनधनासु विक्षु प्रजासु कर्मशीलासु निषण्णाः । यद्वा—उपरासः उपरणशीलाः निवृत्तिप्रधानाः पार्थिवे पृथिव्यां भवे रजसि कर्मणि पुण्यापुण्यात्मके व्यामिश्रे निषण्णाः सुवृजनासु शोभनधनासु कर्मशेषधनासु धार्मिकेषु अपापासु प्रजासु निषण्णाः तेभ्यस्सर्वेभ्यो नमोऽस्त्विति ॥

[11]अधेति ॥ अध अत एव कर्मसामर्थ्यात् अस्माकं परासः पूर्वे पितरः

पितरः परांसः प्रत्नासो अग्न ऋत-
मांशुषाणाः । शुचीदयन्दीधितिमु-
क्थशासः क्षामा भिन्दन्तो अरुणी-
रप व्रन्। यदग्ने ॥ ६८ ॥ कव्यवा-
हन पितॄन् यक्ष्यृतावृधः । प्र च ह-

नः । पितरः । परांसः । प्रत्नासः । अग्ने । ऋतम् । आशुषाणाः । शुचि । इत् । अयन्न् । दीधितिम् । उक्थशास इत्युक्थ–शासः । क्षाम । भिन्दन्तः । अरुणीः । अपेति । व्रन् । [12]यत् । अग्ने ॥ ६८ ॥ कव्यवाहनेति कव्य–वाहन । पितॄन् । यक्षि ।

---

प्रत्नासः ततोपि पूर्वे पितरः हे अग्ने ऋतं सत्यं यज्ञं वा आशुषाणा अश्नुवानाः । अश्नोतेः छान्दसे लिटि रूपम्, तत्र क्वसुकानचोश्छान्दसस्समावेशः । अयस्मयादित्वेन भत्वाद्द्वयोस्संप्रसारणम् । यद्वा—द्विविकरणत्वं लिटि व्यत्ययेन भवति, उप्रत्ययः । ते च शुचि शुद्धं स्थानम् । इदित्यवधारणे । शुच्येव स्थानं यथाऽयन् आगच्छन् दीधितिं स्थानं तद्योगात्ताच्छद्ब्यम् । उक्थशासः उक्थै स्तोत्रैः । यत्प्रत्ययः ॥

[12]यदिति अनुष्टुप् ॥ हे अग्ने कव्यवाहन हविषो वाहक यद्यस्मात्पितॄन् ऋतावृधः ऋतस्य सत्यस्य यज्ञस्य वा वर्धयितॄन्

व्यानि वक्ष्यसि देवेभ्यश्च पितृभ्य
आ । त्वमग्न ईडितो जातवेदोऽ-
वाड्ढव्यानि सुरभीणि कृत्वा । प्रादाः
पितृभ्यस्स्वधया ते अक्षन्नद्धि त्वं देव

ऋतावृध इत्यृत-वृधः । प्रेति । च । हव्यानि ।
वक्ष्यसि । देवेभ्यः । च । पितृभ्य इति पितृ-
-भ्यः । आ । [13]त्वम् । अग्ने । ईडितः । जात-
वेद इति जात-वेदः । अवाट् । हव्यानि । सुर-
भीणि । कृत्वा । प्रेति । अदाः । पितृभ्य इति पितृ-
भ्यः । स्वधयेति स्व-धया । ते । अक्षन् । अद्धि ।

यक्षि यजसि । 'बहुलं छन्दसि' इति शपो लुक् । तस्मा-त्वमेव हव्यानि प्रवक्ष्यसि प्रवहसि देवेभ्यश्च पितृभ्यश्च । आकारस्समुच्चये । तस्माद्देवं महानुभावं त्वामेव वयं यजाम इति ॥

[13]त्वमिति ॥ हे अग्ने जातवेदः जातानां वेदितः प्रजावेदितः त्वं ईडितः स्तुतः अवाट् हव्यानि । वहेश्छान्दसो लुङ् । ततश्च तानि सुरभीणि कृत्वा पितृभ्यः प्रादाः प्रदेहि स्वधया अन्नेन सहैव । ततस्ते पितरः तानि प्रयतानि शुद्धानि हवींषि अक्षन् अदन्तु । अदेश्छान्दसो 'लुङ्सनोर्घसॢ' इति घस्लादेशः, 'मन्त्रे घस' इति च्लेर्लुक्, 'घसिभसोर्हलि च' इत्युपधालोपः ।

प्रयंता हवीꣳषिं । मातंली कव्यै-
र्यमो अङ्गिरोभिर्बृहस्पतिर् ऋक्कंभि-
र्वावृधानः । यांꣳश्चं देवा वांवृधुर्ये
चं देवान्त्स्वाहाऽन्ये स्वधयाऽन्ये मंद-

त्वम् । देव । प्रयतेति प्र—यता । हवीꣳषि । [14]मा-
तंली । कव्यैः । यमः । अङ्गिरोभिरित्यङ्गिरः—भिः ।
बृहस्पतिः । ऋक्कंभिरित्यृक्क—भिः । वावृधानः ।
यान् । च । देवाः । वावृधुः । ये । च । देवान् ।
स्वाहां । अन्ये । स्वधयेति स्व—धयां । अन्ये ।

देव त्वमपि तानि हवींषि अद्धि भक्षय सततमस्मानुपकारिणः कुर्विति भावः ॥

[14]वावृधान इति ॥ प्रत्येकं कव्यादिभिस्संपद्यते । मातलिना तद्वानिन्द्रो मातलिः । छान्दस इनिर्व्रीह्यादित्वद्रष्टव्यः । स कव्यैः कव्यवाहिभिः पितृभिः सह वावृधानः वर्धमानः । शपः श्लुः, ताच्छीलिकश्चानश् । यमः पितृराजः सोऽङ्गिरोभिः पितृविशेषैः सह वावृधानः । बृहस्पतिः ऋक्कभिः मन्त्रवद्भिः स्तुतिमद्भिर्वा पितृविशेषैः सह वावृधानः । 'छन्दसीवनिपौ' इति वनिप्प्रत्ययः, अयस्मयादित्वेन पदत्वात्कुत्वं, भत्वाज्जश्त्वाभावः । यांश्च पितॄन् देवाः वावृधुः वर्धयन्ति । व्यत्ययेन परस्मैपदम्, तु-

न्ति ॥ ६१ ॥ इमं यम प्रस्तरमा हि सीदाङ्गिरोभिः पितृभिस्संविदानः । आ त्वा मन्त्राः कविशस्ता वहन्त्वेना राजन् हविषा मादयस्व ।

मदन्ति ॥ ६१ ॥ [15]इमम् । यम । प्रस्तरमिति प्र–स्तरम् । एति । हि । सीद । अङ्गिरोभिरित्यङ्गिरः–भिः । पितृभिरिति पितृ–भिः । संविदान इति सं–विदानः । एति । त्वा । मन्त्राः । कविशस्ता इति कवि–शस्ताः । वहन्तु । एना । रा-

जादित्वादभ्यासस्य दीर्घत्वम् । ये च पितरो देवान् वावृधुरिति । ये च तत्रान्ये एके देवाः पितृणां वर्धयितारः स्वाहाकारेण मदन्ति मोदन्ताम् । अथान्ये एके पितरः स्वधया स्वधाकारेण मदन्तीत्येव । माद्यतेर्व्यत्ययेन शः ॥

[15]इममिति ॥ हे पितृराज इमं प्रस्तरं प्रस्तीर्णमाश्रमं आसीद अङ्गिरोभिः पितृविशेषैः संविदानः ऐकमत्यं गच्छन् । तत आसीदन्तं त्वां कविशस्ताः कविभिर्मेधाविभिः आस्माकीनैः ऋत्विग्भिः शस्ताः मन्त्राः आवहन्तु प्राप्नुवन्तु । ततः एना अनेन हविषा राजन् राजनशील मादयस्व । मद तृप्तियोगे, चौरादिकः ॥

अङ्गिरोभिरा गहि यज्ञियेभिर्यम वै-
रूपैरिह मादयस्व । विवस्वन्तꣳ हु-
वे यः पिता तेऽस्मिन् यज्ञे बर्हि-
ष्या निषद्य । अङ्गिरसो नः पित-

जन् । हविषा । मादयस्व । [16]अङ्गिरोभिरित्यङ्गि-
रः—भिः । एति । गहि । यज्ञियेभिः । यम । वैरू-
पैः । इह । मादयस्व । विवस्वन्तम् । हुवे । यः ।
पिता । ते । अस्मिन् । यज्ञे । बर्हिषि । एति ।
निषद्येति नि—सद्य । [17]अङ्गिरसः । नः । पितरः ।
नवग्वाः । अथर्वाणः । भृगवः । सोम्यासः । ते-

---

[16]अङ्गिरोभिरिति ॥ हे यम अङ्गिरोभिस्सह आगहि आगच्छ । पूर्ववत् शपो लुक् । यज्ञियेभिः यज्ञार्हैः वैरूपैः विविधकर्मरूपसंबन्धिभिः, वैरूपसामप्रियैर्वा । यद्वा—स्वार्थिकोऽण् । विरूपैः विविधरूपैस्सह इह कर्मणि मादयस्व । अथ यस्तव पिता तं विवस्वन्तं हुवे आह्वयामि । सोप्यस्मिन् यज्ञे आगत्य बर्हिषि निषद्य माद्यताम् ॥

[17]अङ्गिरस इति ॥ अङ्गिरसः पितृविशेषाः अस्माकं च

रो नवंग्वा अथर्वाणो भृगंवस्सोम्या-
सः । तेषां वयꣳ सुमतौ यज्ञियां-

षाम् । वयम् । सुमताविति सु–मतौ । यज्ञिया-
नाम् । अपीति । भद्रे । सौमनसे । स्याम ॥७०॥

भवास्मभ्यमसुं यदंग्ने मदन्ति सौमनस
एकं च ॥ १२ ॥

समिधश्चक्षुंषी प्रजापतिराज्यं देवस्य स्फयं ब्रं-
ह्मवादिनोद्भिरग्नेस्त्रयो मनुः पृथिव्याः पशवोऽग्नी-
धे देवा वै यज्ञस्यं युक्ष्वोशन्तंस्त्वा द्वादंश ॥१२॥

समिधों याज्यां तस्मान्नाभागꣳ हितमन्वित्यांह

---

पितरः नवग्वाः अभिनवागमनाः आगमने अभिनवा इव प्रियाः। क्विपि 'ऊङ् च गमादीनाम्' इत्यूकारः । आगमनमायातु उपसर्गयोस्स्वस्थानविनिमयः वा बहुव्रीहौ । नवग्वा अथर्वाणश्च भृगवश्च पितृविशेषाः प्रशस्ताः सोम्यासः सोमार्हाः येऽप्येवंविधा महानुभावाः पितरस्तेषां यज्ञियानां यज्ञार्हाणां सुमतौ शोभनायां मतौ सानुग्रहायां वयं स्याम भूयास्म । अपि च, भद्रे भजनीये कल्याणे सौमनसे सौमनस्यहेतुके तत्प्रदानहेतुके सर्वाभिमत-

नामपि भद्रे सौमनसे स्याम ॥७०॥

प्रजा वा आहेत्याह युक्वा हि संततिः ॥ ७० ॥

समिधस्सौमनसे स्याम ॥

॥ हरिः ओम् ॥

---

सिद्धिरूपे कल्याणे च स्यामेति । येऽत्र अविनियुक्ता मन्त्राः ते लिङ्गेन क्वाप्यनुरूपे कर्मणि विनियोक्तव्याः ॥

इति श्रीभट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये

ज्ञानयज्ञाख्ये द्वितीये काण्डे षष्ठे

प्रश्ने द्वादशोऽनुवाकः.

समाप्तष्षष्ठप्रपाठकः.

द्वितीयकाण्डश्च.

# शुद्धिपत्रिका.

| पृष्ठे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
| --- | --- | --- | --- |
| २ | १२ | अदित्याः | आदित्याः |
| ३ | ५ | अदित्यान् | आदित्यान् |
| ६ | १३ | अहुः | आहुः |
| ९ | ११ | गच्छति | गच्छति |
| ११ | ३ | निरव | निर्व |
| १४ | १ | न्तस्मा | न्तस्मा |
| २८ | १२ | तेन | तेन |
| ३७ | ११ | त्रिंशत् | त्रिंशत् |
| ४६ | ३ | मृध्यै | मृध्यै |
| ,, | ६ | इव | इव |
| ४७ | ५ | अनिर्दा | अनिर्दा |
| ,, | ६ | पुरोडाशं | पुरोडाशं |
| ,, | ७ | देवासुरा | देवासुरा |
| ४८ | १ | असुराणां | असुराणां |
| ,, | १० | अचरत् | अचरत् |
| ४९ | २ | इंद्रिय | इन्द्रिय |

| पृष्ठे. | पङ्क्तौ. | अशुद्धम् | शुद्धम्. |
|---|---|---|---|
| ,, | ७ | अयाजयत् | अयाजयत् |
| ५० | ८ | यदिन्द्रांय | यदिन्द्रांय |
| ,, | १३ | रून्धे | रुन्धे |
| ५२ | २ | ऋषभो– | ऋषभो |
| ५४ | ९ | अवपत् | अवपत् |
| ,, | ११ | पुरोढाशंम् | पुरोडाशंम् |
| ५५ | ७ | चक्षुः | चक्षुः |
| ५७ | ३ | जत | जात |
| ६२ | १ | वैश्व | वैश्व |
| ,, | ८ | इर्ति | इति |
| ,, | १३ | साहङ्रुणी | साङ्गहणी |
| ,, | १८ | भूयासम् | भूयासम् |
| ६३ | ८ | अघो | अथो |
| ,, | १२ | आर्मन् | "आर्मन् |
| ,, | १३ | तिस्रः | तिस्रः |
| ६४ | १ | यास्त्स्र | यास्त्स्र |
| ,, | २ | रुद्र | रुद्रा |
| ,, | ५ | रुद्र | रुद्रा |
| ,, | ,, | रुद्रः | रुद्राः |

| पुटे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| ६४ | ८ | अभवत् | अभवत् |
| ६५ | ६ | वत् | वत् |
| ६७ | ५ | मरुत् भिः | मरुत्–भिः |
| ,, | ६ | परिर्ति | परीर्ति |
| ,, | ७ | ऐरंयत् | ऐरयत् |
| ७० | १२ | अंयुष्मान् | आयुष्मान् |
| ,, | ,, | ब्रह्म | ब्रह्म |
| ७१ | ६ | देवनां | देवानां |
| ,, | ७ | वीर्येण | वीर्येण |
| ७२ | १० | अर्युः | आर्युः |
| ,, | १४ | अग्नावैष्णव | आग्नावैष्णव |
| ७३ | १ | नैवेनं | नैवैनं |
| ,, | ८ | पाशात् | पाशात् |
| ७४ | ११ | अनः | अनः |
| ,, | १७ | प्रणा | प्राणा |
| ७८ | १४ | ॥ ११ ॥ | ॥ ४५ ॥ |
| ,, | १५ | नाऽ | नाऽ |
| ८० | ३ | वारुणांश्च | वारुणाश्च |
| ८१ | ४ | पलाः | पालाः |

| पुटे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| ८३ | ७ | प्त्रीयम् | प्त्रीयंम् |
| ,, | ११ | सप्त | सप्त |
| ८५ | ९ | चतुष्पात् | चतुष्पात् |
| ,, | १० | सु | सु |
| ९३ | २ | पृथिव्यां | पृथिव्यां |
| ९४ | १० | अवद्यात् | अवद्यात् |
| ९५ | ६ | सूक्ता | सूक्ता |
| १०२ | २ | वरुशर्म | वरुशर्म |
| १०५ | ३ | ण्येषाꣳ | ण्येषाꣳ |
| ११२ | २ | रक्षाꣳ- | रक्षाꣳ- |
| ,, | ४ | असुरान्ज | असुराञ्ज |
| ,, | ६ | सुरान्जित्वा | ऽसुराञ्जित्वा |
| ,, | ,, | रक्षाꣳ- | रक्षाꣳ |
| ,, | ७ | रक्षाꣳ | रक्षाꣳ |
| ,, | ८ | ते । [2]देवाः । | [2]ते । देवाः । |
| ,, | १५ | तानि | [3]तानि |
| ११४ | ९ | अनुदन्त | अनुदन्त |
| १२१ | १३ | अꣳहंसा | [3]अꣳहंसा |
| १४१ | २ | रमयत | [2]रमयत |

| पृष्ठ. | पङ्क्ती. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| १५९ | ११ | देवाः | [1]देवाः |
| १६९ | ६ | सर्वैः | [5]सर्वैः |
| २०० | ७ | उ- | [13]उ- |
| २०७ | १० | तस्यं | [2]तस्यं |
| २३७ | ११ | वैश्वं– | वैश्व– |
| २३९ | ८ | सः | [9]सः |
| २६५ | ९ | एते | [3]एते |
| ३०८ | ,, | वेश्यंः | वैश्यंः |
| ४२१ | २० | ह्रूयात् | ब्रूयात् |

# शुद्धिपत्रिका.

| पृष्टे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| २३ | ९ | २-२-१२ $^{25-12}$ | २-२-१२ $^{25-26}$ |
| ४६ | ५ | प्राच्यां दिशि ‘ त्व | ‘ प्राच्यां दिशि त्व |
| ,, | ८ | इत्यादयस्त्रिस्त्र | इत्यादयस्तिस्त्र |
| ,, | ११ | प्राच्यां दिशि | ‘ प्राच्यां दिशि |
| ४७ | १ | ‘ त्वमिन्द्र ’ | त्वमिन्द्र ’ |
| ,, | ,, | परो | परा |
| ,, | ३ | परोजयातै ’ | परा जयातै ’* |
| ,, | ५ | प्राच्यां दिशि ‘ त्व | ‘ प्राच्यां दिशि त्व |
| ५२ | ३ | नोनुमः ’ | नोनुमः ’* |
| ,, | ६ | यद्याव इन्द्रते | यद्द्याव इन्द्र ते |
| ,, | ७ | यद्याव | यद्द्याव |
| ,, | ९ | स्तरीरसि ’* | स्तरीरसि† |
| ,, | १० | ब्रूहि ’* | ब्रूहि ’ |
| ,, | ११ | स्तरीरसि ’* | स्तरीरसि ’† |
| ,, | १५ | २-४-१४. | २-४-१४. †सं.१-४-२२’ |
| ५३ | ६ | वकारोन्तरेः | वकारोन्तरे |
| ५८ | ८ | १-५-२ | १-६-२ |
| १०३ | ७ | चरुन्निर्वपेत् स्वर्ग | चरुं निर्वपेत्सुवर्ग |
| १०६ | १० | श्चकोरति | श्चकारेति |
| १०७ | ११ | नीचापूर्वा | नीचापूर्वो |
| १०८ | ४ | पेत् बुध्न | पेत्....बुध्न |

| पुटे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| १११ | ७ | विव्रणान् | [कृतव्रणान्] |
| ,, | ९ | प्राणाद्यु | व्रणाद्यु |
| १९२ | १२ | जगत्या ॥ | जगत्या |
| २९५ | ९ | प्रंकर्षेण | प्रकर्षेण |
| ३१७ | ८ | तै. णं. | तै. सं. |
| ३२९ | ११ | व्याख्याता† | व्याख्याता* |
| ३४१ | १५ | २-४-२[3] | २-४-२[2] |
| ३४२ | २० | २-४-२[3] | २-४-२[2] |
| ३४३ | १५ | २-४-२[3] | २-४-२[2] |
| ३९१ | ५ | किमगात् | किमगान् |
| ४३४ | ५ | संसर्गेष्टेः | संवर्गेष्टेः |